प्रकाशक :

**मधुकरद्विवेदी**

निदेशक : उत्तरप्रदेशसंस्कृताकादम्या :

नया हैदराबाद,

लखनऊ

मूल्यम् : ८५.०० रुप्यकाणि मार्च १९९१

मुद्रक :

शशिधरमालवीयप्रकाशनम्, अमीनाबाद,

लखनऊ

‘काम एष क्रोध एषः रजोगुणसमुद्भवः ।’
‘महाशनो महापाप्मा विध्यैनमिह वैरिणम् ।।’

श्रीमद्भगवद्गीतासु

- उपकृतोऽस्मि नूनमुपन्यासमिमं स्वप्रज्ञाचक्षुषा निरीक्षितवद्भिः पण्डित-प्रवरैः स्वर्गीयैः दयाशंकरवाजपेयिमहोदयैस्तत्साहाय्यंकृद्भिः तच्छिष्यो-त्तमैः डॉ० सम्पूर्णानन्दशास्त्रिभिः ।

- सम्मानितोऽस्मि खलु इमं प्राकट्यं नयद्भिः विद्वद्वरेण्यैः श्रीमद्भिः करुणापतिमहोदयैः ।

- सन्तोषितश्चपाण्डुलिपिमस्य सपरिश्रमं पठितवत्या सौभाग्यवत्या मनीषा-पाठकया, आवरणपृष्ठमस्य चित्रालेखनेनालंकुर्वत्या मम ज्येष्ठया कन्यया सौभाग्यवत्या मृणालिन्या,……तत्र तत्र अस्मिन् यावनान् वाक्प्रचारान् सोत्साहं सूचयता चिरञ्जीविना डॉ० अन्सारिणा ।

# उपोद्घातः

'तात'—दिगन्तादिव समापतत् मन्द्रं तदातुरातुरं संबोधनं कस्यचित् समाकर्ण्य खड्गसंघट्टकठिनमपि स्नेहमृदुलं कस्यचित् करतलं वामे वार्धकनमिते स्वे कृशे स्कन्धे समनुभूय,······स वृद्धः······कथंचित्प्रत्यागतप्राण इव······निमीलितप्राये निर्वेदजडे धवलपक्ष्मले ईषदारक्ते लोचने स्वे कथं कथमपि समुद्घाटयामास ।

अवलोकयामास······प्रायतत वाऽवलोकयितुं······स्वमर्पितः, यतमान एव विषादगह्वरात् अतलात् समुद्धर्तुमात्मानम्······किंचित्कौतूहलपरवशः ।

न तु शशाक······अवलोकयितुं किंचिदपि नवीनं सायंसूर्यकिरणैः मुमूर्षुप्रायैः कथंचित् समुद्भास्यमाने स्वपुरःप्रदेशे······किंचिदपि भिन्नं······तस्मात्······व्यतीतेषु असंख्येष्विव संवत्सरेषु सततमवलोकितात्, समुट्टंकितादिव बुद्धौ स्वप्नेष्वपि विभीषकेषु विस्पष्टं दृश्यात्······दृश्यात् अनादिकालात् प्रौढिमात्यंतिकीं यशसः समारूढस्य, असंख्येयैर्विविधभाषाभाषिभिरपि······विभिन्नदेशिकाऽऽचारानुसारिभिरपि······विभिन्नवेषधारिभिरपि मृणालकोमलेनापि अयस्तन्तुनेवाभंगुरेणाऽदृश्येनापि अस्पृश्येनापि अस्वाद्येनापि अनाकर्णनीयेनापि अप्रत्याख्येयेन श्रद्धासूत्रेण साधारणेनाऽऽबद्धैः······'जय ! जय !' इत्याद्याघोषेणानवरतेन विविधवाद्यरवोपोद्बलितेन दिङ्मण्डलमासमन्तिकं प्रकम्पयद्भिः श्रद्धालुभिरन्तेस्वप्रवासस्य समुत्कण्ठादीर्घदीर्घस्य दूरादेव श्रद्धातिरेकोच्छलदश्रुजलपूरितलोचनं······भावातिशयकम्पमानगात्रं मुकुलितहस्तं समवलोकितस्य, गगनचुम्बिन्या मंदसिन्धुसागरसमीरवीचिसमुद्धूयमानया दुःखत्रयं विश्वस्य विश्वस्येवापहरन्त्या चण्डेन चण्डकिरणेन शीतलेन शशांकेन प्रभयाऽऽत्मनः अहर्निशिमभिषिच्यमानया पताकया पावनया शरणागतेभ्यः अभयमात्यांतिकं प्रयच्छतः, स्वीयया कीर्त्या विशिष्टया स्थापत्यप्रौढ्या विलक्षणया प्रस्तरशिल्पशोभया च

देवतायतनानि भारतीयानि सर्वाण्यपि समतिक्रामतः, दिवानिशं प्रसरता विविधस्तोत्रपाठरवेण पावनेन मंत्रोद्घोषेण गंभीरेण आराधनागीतस्वरेण भावगद्गदेन मुखरितदशदिशस्य, आराध्यं देवाधिदेवनृत्येन स्वेनाहर्निशमनुरञ्जन्तीनां देवदासीनां नूपुरशिञ्जितेन श्रुतिमधुरेण स्वरमाधुर्येण स्वेन समाराधयतां गायकानां निक्वणेन करुणकरुणेन वागैश्वर्येण स्वेन स्तवतां महाकवीनां स्तुतिगीतपाठेन मनांसि श्रोतृणां चमत्कुर्वाणेन च शब्दितस्य,—नातिविप्रकृष्टे एव—अहह !—अतीते दारुणे, पापैर्यवनैः निष्कारणं दूषितस्य, निर्दयं लुण्ठितस्य, सदर्पं विध्वंसितस्य, 'अहो कलिमाहात्म्यम् !' इति संदूष्य कलिकालमेव कृतकृत्यैः बलवती 'भवितव्यता' इतिसम्प्रधार्य भवितव्यतामेवोत्तरदायिनीं कृतार्थैः 'अपरमाक्रमणम्—अहो—यवनस्याऽऽततायिनः अवश्यम्भावि'—इति समुत्प्रेक्ष्य भयाऽऽतुरैर्विनष्टपुनर्निर्माणसमुत्साहैरल्पप्राणैः भावुकजनैर्विस्मृत्यातीतगौरवं विहायाऽऽत्मसंमानमुररीकृत्य तृणदौर्बल्यं बुद्धिपुरःसरं समुपेक्षितस्य, निरपवादं परित्यक्तस्य, तत्र तत्र प्ररूढैः क्षुद्रैस्तृणांकुरैः संभिन्नस्य, मूषकवृश्चिकादिप्राणिजातनिलयीभूतस्य महतः शिलोच्चयमात्रस्यावस्थां शोचनीयां प्राप्तस्य, वसन्तेऽपि नीरवस्य, महाशिवरात्रिसदृशेष्वपि पर्वसु मूकस्य, दीपमहोत्सवादिष्वपि तिमिराऽऽक्रान्तस्य —कलेवरस्योच्छिन्नविच्छिन्नस्य निश्चेतनस्य दिवाऽपि भयप्रदस्य,—कापौरुषं भारतीयानां निःशब्दं प्रमाणीकुर्वतः······मन्दिरस्य भगवतः सोमनाथस्य !

प्रावर्तत च विषादगह्वरे पुनः निपतन् सम्बोधयन् आत्मानमेवकिमपि किमप्यस्फुटं······सोपहासस्मितविद्रूपमुखमुद्रः······निमीलयितुं लोचने स्वे श्रान्ततरे—

न तु प्राभवत् कर्तुं तथा······पुनरप्येकवारं समाकर्ण्य तदेव सम्बोधनं स्फुटतराक्षरं······पुनरप्येकवारं समनुभूय तस्मिन्नेव स्कन्धे तदेव करतलं दृढ़तरम् ।

विश्वसंधि निःसंशयमात्मानं तथा समुत्कण्ठाऽऽतुरं सम्बोध्यमानं स्कन्धे वामे च तथा सस्नेहं स्पृश्यमानं केनचिदागन्तुकेन······विच्छिन्नपरिवाराय तस्मै निराश्रयायाऽऽश्रयं सानुकम्पं विगतैः कतिपयैः संवत्सरैः (—युगैरिव भासमानैः—) प्रयच्छन्त्यां समीपवर्तिन्यां ग्रामटिकायां सद्य आगतेन,······ प्रयस्यन्नेव नियन्तुमेकान्तप्रियमात्मानं अनाहूताऽऽगतस्य चित्तविक्षेपकस्य

तस्याधिक्षेपाय प्रवृत्तप्रायं······परावर्तयामास स्वां कृशां ग्रीवां स्वे वामे पार्श्वे प्रेरयामास च स्वां दृष्टिं वयोऽवस्थावशात् क्षीणतामुपगतां क्षणं धनीभवता सांध्येन तिमिरेणाऽऽक्रम्यमानायां······ईषद्-विवृतमुखबिलः ।

ददर्श परन्तु स्वनिकट एव······तावता कालेन तमसाऽऽवृतप्रायस्य मंदिरस्य महाद्वारसोपाने एकतमे विखण्डिते मलिने निःशब्दमागत्य विश्रब्धं समुपविष्टं कंचिदपरिचितं पुरुषं ईषत् स्मयमानमुखं, तमेव श्रान्तयाऽपि खिन्नयाऽपि 'दुग्धकुल्ययेव' स्नेहार्द्रया विस्मृतनिमेषया दृष्ट्या स्नपयन्तम् ।

'धिक् त्वाम् ! ' प्रवृत्त एवच धिक्कर्तुं तं पुरोभागिनमागन्तुं अकारण-चित्ताविक्षेपकारिणं······उपरराम सहसा······समुद्भूतसंशयलेश इव······ पुनर्ज्वलित प्रबलतरी भूताऽऽशास्फुलिंग इव ।

अवलोकयामास च तं चिरं सहसा तैक्ष्ण्यमसाधारणमुपगतयाऽ-विचलितया एकाग्रया दृष्ट्या समुत्पद्यन्तं क्षीणक्षीणं प्रत्यभिज्ञानलेशं 'भ्रम एवायमन्यतमः ममाऽभागिनः इच्छामातृकः, इति संप्रधार्य निराकुर्वन्नपि, प्रबलीभवन्तमाशाप्रकाशं 'किमनेन क्षणिकेन तीव्रतरनैराश्यतिमिरमाला-नुगतेन' इति विचार्य दूरीकुर्वन्नपि, चिरात् खलु आश्वस्तं स्वात्मानं 'अस्थान एव रे तव, मूढ, अयमाश्वासः' इति सविषादं समुपहसन्नपि...... अवश इव······परवश इव······मंत्रमोहित इव ।

इत्थमवलोकयतस्तस्य तां धवलमलिनश्मश्रुकेशाऽऽवृतप्रायां जरावलिव-लितां आहित एव वार्धकवैक्लव्यदयनीयां तत्रापि जीवनसंघर्षवैफल्यदय-नीयतरां मुखमुद्रां तदन्तःकरणाधिपत्यार्थं केशाकेशि कलहायमानाभ्यामाशा-निराशाभ्यां दयनीयतमामवस्थां लम्भितां दृष्ट्वा समुपजातानुकम्प इव स आगन्तुकः समुद्भूतविलुप्तपुनर्मिलनहर्ष इव विस्मृतस्मृतव्यतीतदुःखभर इव स्वयमपि वार्धकवैक्लव्यमुपगत इव निस्तेजस्कः······अनुपसंहृत्यैव स्वं सहसा जाड्यमुपगतं दक्षिणं करतलं तस्य स्कन्धात् मन्दं मन्दं जगाद-तात !······धर्मपाल !······न प्रत्यभिजानासि किं माम् ?······तव प्राणाधिकं सुहृदम् ?'

श्रुत्वैव तां तस्य । निशम्यैव तां तस्य घर्घरस्वरामपि (–यावनप्रभाव-वशात् स्यान्नाम–) अशुद्धोच्चारामपि अस्पष्टामपि आबाल्यपरिचयवशात् प्रयासेन नाम-मात्रेण प्रत्यभिज्ञेयां वाचं······सहसा समुपजातविश्वासः,

सहसा विगलितवार्धकभार इव, पुनः प्रत्यागतयौवन इव, विलीननैराश्य-तिमिर इव······सधर्मपालः······दृढं गृहीत्वा तस्य हस्तं स्वे हस्ते पुनः पुनः समाश्वासयन्निव स्वात्मानं तदस्तित्वे······सबाष्पस्वरं जगाद—।

'देवपाल !······त्वमसि देवपालः ? मम प्राणाधिकः सुहृत् ? ममानुजः ?

मां······(—निक्षिप्य क्षणमात्रं तटस्थां दृष्टिं स्वस्य लूनावशिष्टस्य दक्षिणस्य करस्योपरि—) तथाऽऽहतं······रुधिरस्नातं······मूर्छितप्रायं······निधाय तस्य नितान्तमपरिचितस्य सानुकम्पस्यापि यवनभयाक्रान्तस्य किंकर्तव्यताविमूढस्य कृषीवलस्य जीर्णे कुटजे······तस्यां तमस्विन्यां······त्वं······तथाऽदर्शनमयासीः······यथाऽसंदिहानोऽपि अहं तव तस्मिन् सर्वथाऽप्रत्याशिते साहाय्ये तस्मिन् प्राणन्तिकस्य संकटस्यावसरे······तत् सर्वज्वरभ्रान्तमस्तिष्ककल्पनाजालमेव मन्तुमारेभे······अवश इव ।'

'यथा यथा च दिवसाः सप्ताहे, सप्ताहाः मासे, मासाः संवत्सरे, संवत्सराणि युगदीर्घाः तद्दशके परिणमितुमारभन्त······तथा तथा मतिर्मम सा दार्ढ्यमधिकाधिकमेवाधिगन्तुम्' ।

'(सविषण्ण-स्मितं) संदिहानोऽपि तव तस्मिन् अप्रत्याशिते साहाय्ये···अहं······क्षणमात्रमपि संदिहेह तव जीवनविषये······तव प्रत्यागमने वा ।'

दृढं हि अहं व्यश्वसं—नखलुत्वं······अदृष्टैव तं······अत्याचारिणं दण्डितं प्राणदण्डेन,······अनागत्य पुनः इह······अस्यां······आवयोः······नः सर्वेषां······मातृभूमौ······भारतभूमौ, अनाश्वास्यैव मां स्वसाफल्यसंसूचनेन

अकृत्वैव मां कृतार्थयन्त······प्राणान् स्वान् कदाऽपि त्यक्ष्यसि इति ।

'न तु तावति भागधेये······मम !······अहं खलु······अधन्यः······अकारणविपरीतेन भागधेयेन निरन्तरं पराभूतः······तत्रापि वयोऽवस्था-प्रभावेण प्रतिकूलेनासाधारणं वैक्लव्यं प्रापितः······तत्रापि रोगेण तीव्रेणा-धीरतां स्वभावविपरीतां लम्भितः······अहर्निशं ग्रस्तो दुश्चिन्तया······व्यचिन्तयं—न स्यां नाम······अहमेव······अत्र······इहलोके······साफल्यं तव तादृशमभिनन्दितुं······त्यक्तुं च प्रणान् स्वान् अन्तेऽस्य जीवनहत-कस्य······समाश्वस्तः ।

'सा च दुश्चिन्ता—प्रयतमानस्यैव मम चरममाशावलम्बं प्राणपणेन रक्षितुं-क्रमशः प्राबल्यमधिकाधिकमधिगच्छन्ती······मामेभिः कतिपयैर्व्यती-

तैस्तथा न्यमज्जयत् विषादगह्वरेऽतले······ययाऽहं······अतीतजीवी······वर्तमानसमुदासीनः······भाविभीरूः······शरीरधर्मानुपालनादपि विरक्तः······अभवं विषयः······निराशायाःकिंकर्तव्यताविमूढानां वृद्धानां······करुणायाः स्वस्वसांसारिककार्यव्यग्राणां प्रौढ़ानां······उपेक्षायाः जीवनोत्साहभरितानां तरुणानां······उपहासस्य च स्वभावचञ्चलानां······बालानां······वसतामस्यां ग्रामटिकायाम्,······असहमानस्तदपि······अन्ते······एभिः कतिपयैर्मासै······परित्यज्य जनमात्रसम्पर्कं (–निक्षिप्य क्षणमात्रं दृष्टिं भावजडां दिशि पार्श्ववर्तिनः, आवृतस्यापि तावता कालेन······घनीभूतेन नैशेन तिमिरेण किञ्चित् परिलक्ष्यमाणस्य, निर्जीवस्यापि सजीवस्येव, बधिरस्यापि भावोद्गारं तस्य तं श्रृण्वत इव······भासमानस्य, स्फाटिकस्य मन्दिरस्य (नहि नहि······मन्दिरावशेषस्य–दिशि)······अस्यैव······दुःखबान्धवस्य···सान्निध्ये यापयितुं अन्तिमान् दिवसान् स्वान्······प्रवृत्तः ।

(सोच्छ्वासं)······'दिष्ट्या सा मम दुश्चिन्ता निराधारैव प्रमाणिता दैवहतकेन······अन्ते भवतु नाम जीवनस्य मम······अनुकूलीभूतेन ।'

(विरम्य क्षणमात्रं) 'प्रत्यागतिरेव तव······देव !······व्यनक्ति निःसंशयं साफल्यं तव । (अधीर इव सावेगं)······तथापि······कथय अप्यपश्यं त्वं······तं······अत्याचारिणं······मूर्तिभञ्जकं······दावानलमिव सर्वदाहकं······यवनं······महालुण्ठकं महमूदं······प्राणदडेन दण्डितम् ।'

'मा सूचय स्मितमात्रेण एतेन !······कथय सविस्तरम् ।······केन दण्डितः ?······कथं वा दण्डितः ?······त्वया स्वयम् ?······अथवा ······क्षेत्रियेण रोगेण केनचित्······ऐहलौकिकस्यात्युत्कटस्य पापभरस्य इहैव फलमाशयता······अथवा······अन्येन केनापि दुःसहतमेन अमित्रेण ?'

'दुःसहतमेन······अमित्रेण'-समाश्वासयन् आतुरं स्वं सुहृदं भावगंभीरया वाचाऽगदत् देवपालः ।

'दुःसहतमेन अमित्रेण ?'–आनन्दकातरेण स्वरेणापृच्छद्धर्मपालः ।

'दुःसहतमेन अमित्रेण !' दृढ़तरेण स्वरेण प्रत्यवोचद्देवपालः ।

'कथय······कथय······आदितः । केन······कथम् ?' अधीरेण स्वरेण पुनरपृच्छद्धर्मपालः ।

'कथय······कथय······आदितः । केन······कथम् ?'–अधीरेण

स्वरेण अपृच्छदिव तस्य दुःखबान्धवः······महान् अवशेषः सोमनाथस्य मन्दिरस्य······पार्श्ववर्ती ।

'तात ।'-प्रारभत् निवेदयितुं चिरात् प्रतीक्षितः ।

प्रारभत् प्रतीक्षकः श्रोतुं तन्निवेदनं······निबध्य लोचनेऽपलके निवेदकस्य मुखे······तिमिरवशात् दुर्लक्ष्यप्रायविशेषेऽपि ।

द्रष्टुं च सर्वमतीतं······क्रमशः······चलचित्रवत् ।

सन्नाम······तस्य दुःख-बान्धवोऽपि ।



## प्रथमः परिच्छेदः

'कोऽत्र गच्छति'

'—कुदाम हरीफ अस्त ?' अकस्मात् विदीर्य नीरवतां सान्द्रां चतुर्दिक् प्रसृतां कर्णपथे समापतितान् घर्घरस्वरान् तान् यावनान् शब्दान् निशम्य··· आकृष्णनीलक्षितिजविस्तृते करतलसमतले निरुद्भिज्जे धवलचन्द्रिका-चूर्णाच्छन्ने हैमे मरुप्रदेशे तस्मिन् निःशब्दं धावन्, धवलक्षीरसागरनिपतित-मुक्तामणिकण इव दुर्लक्ष्यविशेषः सः धवलकार्पासवेषधरः किशोरः······ धर्मपालः······विद्युत्स्पृष्ट इव सहसा पिधाय धवलवस्त्रप्रान्तेन स्वं किंचिल्लक्ष्यं अनुद्भिन्नश्मश्रुकेशं शैत्यातिरेकरोमाञ्चितं गौरं मुखकमलं··· कूर्म इव समुपसंहृतहस्तपादः······मिमंक्षुरिव हिमाच्छादिते भूतले······ न्यपतत् निश्चेष्टः मुहूर्तमात्रम् ।

प्रतीक्ष्य च तावन्तं कालं पदरवं तस्य यवनस्य सैनिकप्रहरिणस्तदनु-धाविनः······परिकलय्य च तं भाग्यवशात् वैफल्ये परिणतं······निभृतं समुत्थितः······पूर्ववत् अधावत् निशब्दं······ध्रुवनक्षत्रव्यज्यमानायां उत्तरस्यां दिशि······दिशि सैन्यनिवेशस्य विशालस्य राज्ञा जयपालेन बृहत्तरभारतवर्षसीमारक्षकेण गांधारपाञ्चनदराज्यशासकेन गजनीशासक-स्यासकृदाक्रमणानां प्रतिरुद्धसया परिकल्पितस्य ।

(तथा धावतस्य तस्य किंचिदाश्वस्ते मानसे समुद्भवत् किशोरस्य किंचित् स्मयमानस्य)—'साधितं मया साध्यम् !······(सगर्वं) निर्व्यूढा मया प्रतिज्ञाऽऽत्मविश्वासेन महता कृता !······मया खलु व्यथतीत एवा-पराह्णे स्वे पटवासे व्यग्रं समुपविष्टस्य सेनाध्यक्षमात्रद्वितीयस्य पितामहस्य सचिन्तां मुखमुद्रामवलोक्य ग्लानिं भावसुलभां प्राप्तेन······तातः······ समुपविश्य तत् समीपे······तत्कारणं पृष्टः ज्ञात्वा च तस्मात् बृहत्तर-भारतवर्षस्य पाश्चात्यां सीमारेखां धिक्कुर्वतः असकृदाक्रमणैर्यवनराजस्य सुबुक्तिगीनस्य वास्तविकं मनोबलं तात्कालिकं जिज्ञासोस्तस्य अलाभ······एव, एकस्यापि तादृशकठिनकार्यसंपादनक्षमस्य गुप्तचरस्य

तत्वेन·····सः बाल्यसुलभया प्रौढ्या 'अहं तत् कार्यं करोमि' इति समाश्वस्तः·····अवलोक्य च सोपहासं स्मितं खेलत् सेनाप्रमुखस्य जराम्लानयोः नेत्रयोः हठात् दृढतरीभूतनिश्चयेन च तथाऽनुरुद्धः·····तथाऽनुरुद्धः·····यथा सः·····अनिच्छन्नपि·····मह्यं·····अन्ते·····अनुज्ञां दातुमवशः अभवत् ।'

'(सस्नेहं) क्रियता खलु चिन्ताजडेन स्नेहेन स मां·····कैशोर्यसुलभादुत्साहभरात् चञ्चलचित्तमपि, निराधाराऽऽत्मविश्वासभरादवश्यंभावीनि विघ्नानि गजनिमीलिकयाऽवधीरयन्तमपि, अनुभवगुरुणि तदुपदेशवचांसि मनसि अकुर्वन्तमपि·····आगामीनि विघ्नानि दूरदर्शिन्या स्वप्रज्ञया समुत्प्रेक्ष्य·····तानि समुत्तर्तुं·····स्वयमुपादिशत्·····अस्या एव तु निशायाः प्रथमे प्रहरे·····रहसि·····स्वे मंत्रणाकक्षे निर्मक्षिके,·····अन्वतिष्ठत् स्वमेव ममैतद्वेषपरिवर्तनं सत्यपि विश्वासपात्रे स्वसेवके रंगकर्मनिपुणे,·····अवालोकयच्च स्वमेव स्वपटवासात् मम प्रस्थानं यवनसेनासंनिवेशं समुद्दिश्य क्षणे चिन्ताभ्रमलिनाभ्यां क्षणेऽभिमानातपोज्ज्वलाभ्यां नेत्राभ्याम् ईषच्चलदोष्ठमुद्रः (स्यान्नाम-इष्टदेवतानाम, संस्मरणसम्प्रवृत्तः–)–तत्सर्वं·····तस्मिन् समयेऽपरिकलितगौरवमपि·····अधुना स्मृतमात्रं·····भावविह्वलं मां नूनं करोति ।'

'(सादरं) प्रभाव एवायं सर्वः·····तस्योपदेशस्य·····वेषपरिवर्तनस्य·····इष्टदेवतानामसंस्मरणस्य·····यदहं·····अपरिचितप्रायोऽपि सति वैफल्ये प्राणान्तपर्यवसायिना चारकर्मणा·····द्वितीये प्रहरे·····अनुत्पाद्य संशयलेशमास्माकीनस्य सैनिकस्यैकस्यापि स्वसैन्यनिवेशान्निर्गन्तुं, परिहृत्य सांमुख्यंविघ्नकरस्य हिंस्रस्यैकस्यापि श्वापदस्य मार्गमाक्रमितुं, अनाकृष्य चेतः यावनस्य सैनिकस्यैकस्यापि परसेनानिवेशं प्रवेष्टुं, योजनार्द्धप्रसृते पटवासबहुले तस्मिन् यवनराजपटवासं (–आदित एव मम लक्ष्यभूतं),–तदितरपटवाससमानवृत्तान्ततया दुर्लक्ष्यमपि,–शीघ्रमेवाधिगन्तुं, क्षुद्रं अन्तरालमलक्ष्यप्रायं तद्भित्ति–भूतल –मध्यवर्तिनं लक्षयितुं, उन्नमय्य तत् शनैः शनैः तदन्तः प्रवेष्टुं च·····प्राभवम् ।'

'यत्तु–अहं·····नातिविस्तृते महार्हकुसुमकोमलपारसिकास्तरणाच्छादितभूतले तन्मंत्रणाकक्षे–समतिक्रान्तायामपि मध्यरात्रौ–साक्षाद्यवनराजमेव···

विनिद्रं······(न केवलं विनिद्रं, अपि तु–) अनतिमन्द्रस्वरं सम्भाषमाणं, (न केवलं सम्भाषमाणं–अपितु–) सैनिकमेव, विचारविषयमधिकृत्य सम्भाषणं······अध्यगच्छं,–तन्नूनं पितामहस्य मे आशीर्वादफलितमेव।'

'चिरात् खल्वासीत् मम कौतूहलं मत्पितामहसमानमपराजेयं मानधनं वरिष्ठतमं भारतीयं नरेशं रणांगणेऽसकृद्धर्षितुं चेष्टमानं, लोकवार्तासु अनेकदा श्रुतपूर्वं, यवनराजं सुबुक्तिगीनं साक्षाद्द्रष्टुम्।

'परन्तु यदा निशीथे तस्मिन् अध्यगच्छमवसरं दुर्लभं तदनुकूलं······ तदा······तन्मम कौतूहलं,······स्मरतोऽपि मे,······व्यस्मरम् एव सर्वभावेन।'

'व्यस्मरमेव······तस्मिन् समये तेन सप्रौढ़ि संभाषमाणेन यवनकिशोरेण एकेनान्यतमयवनसैनिकवेषधरेणापि सहजानुमेयराजवंशसम्भवेन हठात्।······ समाकृष्टमानसः।'

'कक्षे तस्मिन् मन्दप्रकाशे······यवनराजस्य समीपे एव······पल्यंके एकस्मिन् सविनयमपि सगौरवं समुपविष्टः सः हि······शरीरेण वैशिष्ट्येन केनचिदन्यान् यवन-किशोरान् अनतिकुर्वन्नपि, नातिगौरवर्णया व्रणांकितया विद्रूपकल्पया स्वमुखमुद्रया द्रष्टुः मनः अनाकर्षन्नापि······, बलादाचकर्ष मम······मनः······समुत्तेजयन्निव······भाययन्निव······न्यक्कुर्वन्निव······अभि-भवन्निव······पराभवन्निव······माम्।'

(किंचित् श्लथीभूतवेगः) 'अहन्तु······किंचिद्विस्मित इव······इच्छन्नपि अपारयन् आक्रष्टुं स्वामनिमेषां दृष्टिं तस्मात् यवनकिशोरात्······तस्मिन् समये यवनराजस्य दीपशिखाविनिगडितलोचनस्य स्वसैन्यदौर्बल्यानि तात्का-लिकानि सखेदं विश्लेषयतः भाषणं सादरमपि सोपहासमिव सविनयमपि सावहेलमिव श्रृण्वतः?······आकर्णयन्नेव तद्भाषणं चित्तैकदेशेन······ अनवरतम् अकरवं······प्रयासं गवेषयितुं कारणं तस्य प्रभावविशेषस्य,······ न त्वध्यगच्छं साफल्यं तत्र।'

'अदृष्टपूर्वस्यापि अनेकदा दृष्टपूर्वस्येव, अश्रुतपूर्वस्यापि अनेकदा श्रुत-पूर्वस्येव,······अनपकुर्वाणस्यापि······निरन्तरमपकुर्वाणस्येव,······अनपराद्धस्यापि अनेकदाऽपराद्धस्येव, असत्यपि कारणलेशे शत्रुतां······चिरन्तनशत्रुतां······ मम मनसि······मम सुलभसौहार्दे मनसि······समुत्पादयतस्तस्याननात् आरक्तनयनात् दृष्टिं स्वां बलाद्व्यावर्तयितुं, आघातुं च स्वमनः प्रसह्य

यवनराजे उपसंहारप्रवृत्ते प्रयतमानस्यैव मम······सः······विरत एव यवनराजे स्वभाषणात्······प्राक्रमत स्वं दृष्टिकोणं स्पष्टीकर्तुम्······ प्रावर्तत च (अर्थात्-अविदमेव–) दृढ़ीकर्तुं तं तस्य विलक्षणं प्रभावं मां तथाऽभिभवन्तम् ।'

'अनतिगंभीरनिःस्वनाऽपि स्वाभाविकप्रभावकारिणी, वागाडंबरविरहिताऽपि स्वयंस्फूर्तगौरवशालिनी, सरलसंरचनाऽपि अर्थगाम्भीर्यवती, मन्द्रस्वरापि भावावेगदुःसहौघवती, संयताऽपि आक्रामकशक्तिमती, संक्षेपलध्वी, सारगुर्वी तस्य वाणी हि······प्रारभत मामभिभवितुमधिकाधिकम् ।'

'आदौ तदीयेन द्रष्दृमात्रसंवेद्येन व्यक्तिवैशिष्ट्येन ततश्च वाक्प्रभावेणाभिभूतोऽहं······कदा सांमुखोनात् युद्धात् अपरावृत्ति सावेशमपि सयुक्तिकं प्रतिपादयतः तस्य भाषणस्य श्रवणे मनः, अर्थस्य ग्रहणे, बुद्धिं, तत्परिणामगांभीर्यस्याऽऽकलने च विवेकशक्ति······सहजमिव······प्रावर्तयं ······तत्तु न पर्यलक्षयम् ।

'अविदं तु आत्मानं शीघ्रमेव······सांमुखीनं अपाराया महत्वाकांक्षाया, अगाधायाः साम्राज्यलिप्सायाः, अनन्तायाः धनतृष्णाया अतिशयस्य मनुज देहधारिणः' ।

'कैशोर्यसुलभविस्मयभाववशात् विस्मृत्य पूर्वकालिकां सहजस्फूर्तीं (अतः प्रामाणिकतरां–)विपरीतभावनां क्रमशः······प्रबृत्तकस्य एव च तद्वैशिष्ट्यप्रशंसने (–अर्थात् निःशब्दे–) हठादवलोकयम् अत्मानं······सांमुखीनं भारतीयजनाधिक्षेपस्य सनातनार्यधर्मस्य निरतिशयस्य मूर्तिमतः······ हठात् संनियम्य स्वं मानसं तत्प्रशंसनप्रवृत्तं······ऐकाग्र्येण तं श्रोतुंप्रवृत्तश्च ······स्वल्पयैव कालकलया······अन्वभवम् आत्मानं······सांमुखीनं अश्रुतपूर्वसदृशस्य संकटस्य भारतवर्षमाक्रमितुमातुरस्य,······भावातिरेककम्पमानगात्रः क्रोधातिरेकःज्वलन्निर्निमेषनेत्रः प्रतिवादातुरजिह्वः प्रताडनस्फुरदहस्तः ।'

'(सखेदं) प्रत्यक्षमकरवं परन्तु आत्मनस्तं क्रोधातिरेकं प्रतिपादोत्साहं······क्षणेषु कतिपयेषु······कज्जलादपि कृष्णतरे, दर्शान्धिकारादपि घोरतरे नक्रग्रहादपि क्रूरतरे विषादे परिणमन्तम् ।'

'स हि यदा······किशोरोऽपि प्रौढ़ इव कश्चित्······सर्वग्राहिण्या

प्रज्ञया, अनार्योऽपि स्वात्मपरीक्षणसमर्थयि इव कश्चित् सूक्ष्मदर्शिन्या मत्या, शस्त्रमात्रोपजीव्यपि सार्थवाह इव कश्चित् देशान्तरस्थलविशेषवैशिष्ट्य-सुपरिचितयाऽभिज्ञया तेषां·····तेषां भारतीयानां नृपाणां·····पौरस्त्यानां तथा पाश्चात्यानां·····दाक्षिणात्यानां तथा उदीच्यानां·····महत्तमानां तथा क्षुद्रतमानां·····आर्याणां तथा द्राविडानां···स्वस्वकर्त्तव्यपालनदक्षाणां तथा विषयोपभोगमात्रव्यासक्तचेतसां·····(मम पितामहस्येव, दूरदर्शिनां तथा वर्तमानकालमात्रव्यग्राणां·····प्रशासनतंत्रगतानि कालात्ययजर्जर-सैन्ययंत्रगतानि च दौर्बल्यानि सूक्ष्मतमपरीक्षणमात्रवेद्यानि विश्लेषयितुं······ स्वभावगतानि आपातक्षुद्राणि पर्यंतापायकारीणि वैशिष्ट्यानि विवे-चयितुं·····पारस्परिकाणि·····क्षुद्रवैमनस्यकारणानि निवेदयितुं·····तासां तासां भारतीयब्रुवाणां जनजातीनां प्रादेशिकभौगोलिकसांस्कृतिकादीनि कुत्साकारणानि विशदीकर्तुं·····बृहत्तरभारतवर्षं यावत्प्रसृतस्यापि आर्या-वर्तमपि तदेकदेशभूतम् एकप्राणतां यथार्थत आपदयितुमसमर्थस्य, अनेकदेव-वाद– अन्धदैववादजर्जरीभूतकलेवरस्य सनातनार्यधर्मस्याविचारितगभीरं प्रभावं······विश्लेषयितुं······आरभेत·····तदा·····अहं·····मंत्रमोहित इवाऽऽकर्णयन् तद्भाषणम्······अनिच्छन्नपि······साक्षादकरवम्······· आत्मानं·····तेन तस्य विश्लेषणेन सह ऐकमत्य निरपवादं प्रसह्य प्राप्नुवंतम् ।'

'अप्रतिरोध्यो हि·····सत्यस्य·····सूर्यप्रकाशस्येव·····आक्रमः'······ ······'(सनिःश्वासं) विषादविस्मयदोलायमानं चित्तं स्वं एकाग्रतां घटदघट-नाममंग्राहिणीं आपादयितुं प्रयतमानस्यैव मम ध्यानं·····सहसा····· समाकृष्यत·····तस्याधीरस्येव·····क्षणमेकमपि अविरम्य·····जलौघ-स्येव कस्यचित्दुःसहवेगस्य·····निरन्तरमग्रेसरतः·····निवेदनस्य कैश्चित् शब्दैः' ।

'प्रसह्य चाऽऽपादितं एकाग्रतां निमेषार्द्धमात्रे तच्छब्दश्रवणमात्रेण····· तत्·····आरभत आकलयितुं तदुद्दिष्टम्·····भ्रमितुं च–तदनुपदमेव-घोरतमे दुःशंकाऽऽवर्ते' ।

'(सविस्मयं) आसीत् हि तस्योद्दिष्टं·····संस्थापनं साम्राज्यस्य,····· तरुष्काणां शौर्यं पारसीकानां बुद्धिवैभवं चोपजीव्य विनिर्मितस्य तौरुष्क

पारसीक-साम्राज्यस्य,······'पृथिव्या मानदण्डस्य' नगाधिराजस्योभय-पार्श्ववर्तिनं योजनसहस्रप्रसृतं भूप्रदेशं व्याप्नुवतः एकछत्रस्य साम्राज्यस्य,····· भारतवर्षस्य संपूर्णस्य दिगन्तविख्यातमैश्वर्यं निःशेषं शुष्य भौतिकस्यैश्वर्यस्य परमं शिखरमध्यारूढस्य साम्राज्यस्य,·····भारतवर्षे आसेतुहिमाचले-ऽनादिकालाद्विलसन्तं सनातनम् आर्यधर्मं पाशवेन बलेन दूरीकृत्य तत्स्थाने यावनस्य धर्मस्याऽऽधिपत्यं बलात् प्रस्थापयतः·····भारतवर्षं च निरपराधमेव पारदास्यदुःखेऽनन्ते घोरतमे निमज्जयतः साम्राज्यस्य!'

'यदि हि तस्य उद्दिष्टस्य उद्घोषकः·····अन्यः कोऽप्यभविष्यत्······ अन्यस्तमात् यवनकिशोरात्···तर्हि चित्तं मम तादृशे घोरतममे दुःशंकाऽऽवर्ते भ्रमितुं नाऽऽरप्सिष्यत तद्धि·····उद्दिष्टं·····एतावत् भव्यं·····प्रचण्डं ······महत्तमं आसीत्·····यत्·····तत् कस्यापि·····शौर्येणाद्वितीयेन भाग्ये-नासामान्येन्यान् अतिशयानस्य नरपुंगवस्यापि·····मुखादाविर्भवत्······ अहिफेनमदालसस्य भ्रांतिजालमिव·····उपहसनीयमेवाभविष्यत्' ।

'आविर्भवत् तु तस्य साधारणदर्शनस्य यवनकिशोरस्य मुखात्······ तत् नितान्तमन्यथा' ।

'तत् तस्य नातिगौरमपि व्रणांकितमपि नातिगौरमपि व्रणांकितमपि नातिसुदर्शनमपि मुखं·····असामान्यया दीप्त्या कयाचित् आकर्षकं भासमानं·····हि·····प्रादात् तस्य प्रत्येकं शब्दं विधिविधानस्येवानति-क्रमणीयताम्·····अवश्यंभाविताम्' ।

'विशेषतः·····तस्याऽऽरक्ते·····सुदूरभव्यनिबद्धे·····घटनाप्रवाहेण वर्तमानकालिकेनासंपृक्ते इव भासमाने·····लोचने ।'

'एतादृशो हि नरः·····आक्रान्त इव केनचित् दक्षेण·····उद्दिष्टं त्वं पूरयि-आरभत मम मानसं आक्रन्दितुं·····व्याकुलाकुलम्' ।

'महमूद!'—सहसा कर्णपतितेन गंभीरेण संबोधन स्वरेण समाकृष्टं च···· हठात् विरम्याऽऽक्रन्दनात्·····चकितचकितमुद्गीरितुम्,·····आकर्णयदेव स्वस्य एकदेशेन यवनराजस्य श्रांतस्येव प्रत्युत्तरं-'अयं तर्हि महमूदः ?······ अयं साधारणदर्शनः यवनकिशोरः·····महमूदः ?·····साक्षात् सुतः अस्य यवनराजस्य ?·····श्रेष्ठतरः तस्यान्यस्मात् सुतात् इस्माई-लात्·····अल्पेऽपि वयसि सर्वैः सकौतुकं सगर्वं सगौरवमनुभूयमानया बहु

प्रशस्यमानया प्राकृतिकया राज्यप्रशासनाभिरुच्या दुर्दमनीयया स्वस्वल्प-राज्यपरिवर्द्धनेच्छयाऽसामान्यया युद्धकला-कुशलतया निसर्गप्रदत्तया नेतृत्व-शक्त्या च जनेषु साधारणेष्वपि स्वकीयेषु उत्साहं निरतिशयं विश्वासम-पारं समुद्भावयन्त्या ?'

'अस्यैव तु जन्मसमये यवनराजेनानेनावलोकितं तद्विलक्षणं स्वप्नं अधिकृत्य समुद्भूताः विविधाः कथाः विलणाः भाविकालस्फूर्तिप्रदाः प्रजाजनेषु तस्मिन् काले सहसा प्रचलिताः विरमन्ति नाद्यापि······अपि तु—अधिगच्छन्ति (—यथा श्रुतं मया पितामहस्य सेवायां निभृतमागत्य यवनराजसमाचारान् श्रावयद्भ्यः गुप्तचरेभ्यः—) अहरहः विश्वसनीयताम-धिकाधिकां दर्शंदर्शं अस्य लोकविलक्षणताम् !'

'अस्यैव तु विषयेऽमकृत् श्रुतं मया तेभ्य एव स्पशेभ्यः यत् प्रभावितो-ऽपि अस्यासामान्येन वैष्ट्येन जनकः अस्य······अयं सुबुक्तिगीनः······ अनुत्सुक इव न्यस्तुं स्वस्थापितं गजनीराज्यं अस्य ज्येष्ठस्यापि स्वसुतस्य हस्तयोः······एभिर्विगतैः कतिपयैः संवत्सरैः······परिकलप्याऽऽत्मनोऽव-सानमासन्नप्रायं······चिन्तयति समुद्घोषयितुम् आत्मनः कनिष्ठं सुतं······ इस्माईलं······स्वराज्यस्योत्तराधिकारित्वेन,······न तु पारयति कर्तुं तथा ······आन्तरिककलहभीतभीतः !'

'किमिव नाम स्यात् कारणमस्यानुत्साहस्य ?······(किंचिद्विमृश्य) ऋतेऽस्याऽऽक्रामकस्येव भयोत्पादकस्यानुभवमात्रगम्यात् दाहकात् उत्साहा-तिशयात् ?······अपिनाम-अस्यायं जनकः······संतुलितबुद्धित्वेन स्वजनेषु ख्यातिं······निरपवादामधिगतः······अतिपरिचितोऽस्यचरित्रेण······एतद्वै-लक्षण्यम् अस्य······आत्मघातकत्वेन···सर्वघातकत्वेन समुत्प्रेक्षते···नोत्सहते चैनं प्रोत्साहयितुं तं आत्मघातपथमनुसर्तुम् ? (······सविश्वासं) एतदेव नूनं स्यात् सत्यं कारणम्······अनेन वृद्धेन प्राणपणेन गोपायितम्,······ (किंचिन्निरीक्ष्य) मुखाकृतिरेवेयमस्य वृद्धस्य······सकौतुकस्मितप्रमोद्-भासिताऽपि खेदेनैव केनचित् साभ्रा······परिकलय्य आत्मनः संयमोप-देशस्य वैफल्यं स्वतः स्पष्टं श्रान्ता······कथयति मनोगता अस्य !······ अपरिचितोऽपि शक्नुयात् ज्ञातुमेतत् !······ऋतेऽस्मात् अस्य साक्षादा-त्मजात् !······(सकुत्सस्मितं)······अयं तु युवकः······स्वप्नलोकजीवी······

न शकाक······शक्नोति······शक्ष्यति वा ज्ञातुमेतत् !······अहर्निशं सन्निधा-नेवास्य वर्तमानोऽपि ! ···

(सहसा साक्षात्कृत्येव समयव्यतिपातम्)······अथवा······किमिव नाम······प्रयोजनमस्माकं······अस्य······अस्य वा······मनोगतेन ?······तत्कारणेन च······तदौचित्येन······अनौचित्येन वा ?······अस्माकं तु प्रयोजनं······स्वराज्यस्य······बृहत्तरभारतसीमारक्षकस्य······सुरक्षया ?······सा च······अस्मिन्नेव समये······संचाल्यमानेष्वेव यवनसेनाया अस्याः संचालनसूत्रेषु अनेन वृद्धेन यवनराजेन परामृश्यकारिणा······यावती शक्या······न तावती समयान्तरे !······तदा तु······तदा तु······संचाल्यमानाऽनेनास्य आत्मजेन······अनेन महमूदेन······अपारात्मविश्वास-दुर्धर्षेण········इयं········सद्योविनिर्दिष्टदौर्बल्यदुष्टाऽपि······किंबहुनाएत-दपेक्षया दुष्टतराऽपि······इयं सेना······अस्योत्तेजकेनोत्साहपूरेणाऽऽपूरिता······एतन्महत्तरसाम्राज्यसंस्थापनमंत्रेणाभिमंत्रिता······दुःसहाऽऽवेगा······नः······केवलानामस्माकं······अपि तु ऐक्यं (···सनिःश्वासं–दुःसाध्यम् !) अभूतपूर्वमापन्नानां समस्तानां भारतीयनृपाणां सेनानामपि······कृते दुर्जया भविष्यति ।,

'को हि नाम भीमपराक्रमोऽपि उन्मत्तं······आक्रामकं······परा-भवितुं समर्थः' ?

'अजय्यः नूनम् उन्मादवेगः !'

'तत्······संभाषमाणयोरेवानयनोः······पितापुत्रयोः········(संभाषणं चैतत् अस्मत्सैन्यसंघर्षनिश्चये पर्यवस्येत्–इति निश्चितप्रायम् !······नास्त्येवास्य वृद्धस्य सामर्थ्यं प्रतिरोध्दुं अस्य युवकस्योत्साहपूरम् !)······अहं······ज्ञातज्ञातव्यः········कृतकृत्यः········प्रतिनिवृत्य········इतः········विनिवेद्य पितामहाय समग्रं वृत्तान्तमत्रत्यं······तं······सद्य एव यवन-सेनासंनिवेशाक्रमणाय विज्ञापयिष्यामि।······स हि उदारमनाः······मयि निरतिशयं विश्वसन्······न कदापि ममाऽऽशंकां······विशेषतः महमूदविषयिकां······भावुककिशोरकल्पनामात्रत्वेनोपहसिष्यति-'······इति विचार्य ततः मार्जारपादैः प्रतिनिवृत्तः······बहिरागतः कटकात् यवनस्य······प्रत्यागमनमार्गे सन्ततनिपतद्हिमचूर्णदुर्गमतरे······न किमपि संकटमन्व-

भवम्......ऋतेऽस्मात् यवनप्रहरिणः कस्यचिदनुधावनात् !'

'(श्रान्त इव) तदपि मन्ये......विलीनकल्पमेव। (अभितोऽवलोक्य-साश्चर्य इव)......अर्धादपि अधिकतरं......नूनम्......अन्तरं द्वयोः सेनासंनिवेशयोरतन्रालवर्ति......समाक्रान्तं......भयाऽजानता एव...... विचारमग्नेन !'

'(उल्लसित इव) सः......स खलु दृश्यते उत्तरस्यां दिशि ध्वजः...... अस्मत्सेनासंनिवेशमध्यवर्तिनः पितामहपटवासस्य शिखरं स्वर्णकलशभूषि-तमलंकुर्वाणः......निशान्तवाताऽऽन्दोलितः !...... (साभिमान......इव) अधिरुह्य प्रातः समीरलहरीः यवनसेनासंनिवेशमाक्रमितुम् उत्सकोत्सुक इव लक्ष्यते तातः !......(कैशोर्यसुलभोत्साहवशादवगणय्याशुभसंसूचकानि चिह्नानि)......लप्स्यते......लप्स्यते......अवसरं......स्वेप्सितपूरणाय...... शीघ्रमेव !

—चिन्तयन् किमपि किमपि इत्थं......निर्व्यूढप्रतिज्ञाभारमिवात्मानं सम्भावयन्......सः किशोरः धर्मपालः......स्नातुं स्नेहधारासु तत्प्रत्या-गमनं निरुद्धश्वासं प्रतिपालयतः पितामहस्य जागरणऽऽरक्ताभ्यां श्रान्ताभ्या मपि समवलोक्य तं सकुशलं प्रत्यागतं सहसा हसद्भ्यां नेत्राभ्यां प्रहवन्तीषु आतुरातुरः......त्वरिततरं धावन्......शीघ्रमेव प्राविशत् स्वसेनासंनिवेशं तन्नैशनिष्क्रमणानभिज्ञं......पश्यतामेव तं विस्फारितनयनं अर्धविवृतमुख-बिलं सैनिकप्रहरिणां......निर्निमेषजागरणश्रान्तानां शैत्यजाड्यालसालसानां दूरान्निरीक्ष्य तं तानेव समुद्दिश्य धावन्तं साशंकानां, सकौतूहलानां, प्रत्य-भिज्ञाय तं साक्षाद्राजकुमारं विस्मितानाम् !

अधावच्च पटवासं स्वपितामहस्य समुद्दिश्य तथैव।

'जयतु जयतु मुहम्मदीयः धर्मः !'

—'दीन !......दीन !......जगर्ज घर्घरस्वरं गजनीनृपः सुबुक्तिगीनः स्वपारसीकतुरगाधिरूढः, उच्चैः......उन्नमय्य स्वं रक्तस्नानं महाप्रमाणं खड्गं......आरक्तनेत्रः......तडिद्वेगेन संचरन् तस्मिन् नैशे......तण्डुल-पिष्टधवलधवलेन प्रज्वलितरणयज्ञ धूममिभेन घनकुहाऽऽस्तरणेनाऽऽच्छादिते हैमवते......रणांगणे......प्रोत्साहयन् स्वसैनिकान्......सुखनिद्राया हठात् जागरितान नीरवतां सान्द्रां विदीर्य सहसा कर्णपथमापतितेन

कर्कशरणवाद्यनिनदेन पराभ्यवस्कन्दनसंसूचकेन······हठात् स्वं स्वं शस्त्रं स्वं स्वं कवचं कथमपि ग्राहितान् स्वं स्वं तुरगमधिरोपितान्,······हठात् रणांगणे प्रतिकूलेऽवतारितान्,···कतिपयेष्वेव क्षणेषु भीषणं युद्धयमानान् ।

'सर्वशक्तिमान् नूनं परमेश्वरः ।'

'अल्लाहो अकबर !'–जगर्ज पुनः किंचित् श्रान्तस्वरः सः···क्षणमेकं संनियम्य स्वं तुरगं महाप्रमाणं······हिमसंपातशीततमायामपि तस्यां हैमन्तिकनिशायां प्रस्वेदधाराभिः क्लिन्नसर्वागं,······फेनिलमुखं एकस्य कस्यचित् प्रोन्नततरस्य रणस्थलैकदेशस्य यदृच्छया मार्गापतितस्य मूर्ध्नि··· प्रयतमानः वृद्धयाऽपि तैक्ष्ण्यमात्यंतिकं अभ्यासवशात् प्रसह्य उपगतया दृष्टया निरीक्षितुं स्वसैन्यस्यावस्थां तात्क्षणिकाम् ।

'हे भगवन्' !

'या खुदा !'–अस्फुटस्वरमगदच्च क्षणमात्रानन्तरं······अलभमानः लेशमात्रमपि समाश्वासम् ।······'अनेन शृगालचतुरेण मूर्तिपूजकेन वृद्धापसदेन (–न जाने-कथं–) समुत्प्रेक्ष्याऽऽवयोः सुगूढं संकल्पम् अभ्यवस्कन्दस्य श्वस्तनस्य नैशस्य···अदत्वैवास्मभ्यमस्फुटतममप्यवसरं स्वसंकल्पसमुत्प्रेक्षणाय······अद्यैव···अस्यामेव सर्वथाऽऽयोधनाननुकूलायां निशायां ······सुनिपुणं निगूह्याऽऽत्मनः मार्जारपादं प्रधावत् सैन्यं घनकुहापटले सूचिभेद्ये······तथा तडिद्वेगेन समाक्रान्तं मम सैन्यं······यथा एतत्······ पणीकृत्य प्राणान् प्रयतमानमपि न पारयति आत्मानं दूरीकर्तुं पराजयगर्तमुखात् भीषणतमात्······प्रतिक्षणं समीपतरं समुपसर्पतः' ।

विचिन्त्येत्थं किमपि किमपि एवं विवेद्यतस्तस्य सहसा समाकृष्यत क्षणिकतमदुश्चिह्नसंवेदनश्रमं चित्तं क्षणान्तरे एव···सुदूरात् हिमपटलाच्छन्नरणांगणप्रान्तात् पौरस्त्यात् विहाय खड्गं समुत्सृत्य धनुष्काण्डं परित्यज्य कुन्तं अनुगामिनः संकटादिव कस्मादपि अदृश्यात् घोरतमाद्धावद्भिः,··· 'तोबा·······तोबा'·····हन्त·······हन्त' ! इति भयास्पष्टक्षरं निर्लज्जभावमाक्रन्द्याऽऽतंकं चतुर्दिक् प्रसारयद्भिः कैश्चित् तस्य सैनिकैः ।

'लाहौल बिलाकूवत-धिक् कातरान् !' धिक्कृत्य चोच्चैःस्वरं······ तडिद्वेगेन समुपससर्प तान्···समुत्क्षिप्तखड्गः······क्रोधातिरेकताम्रमुखः··· प्रतिरोद्धुं तेषां विद्रवं कापुरुषमात्रोचितम्······अवालोकयच्च क्षणान्तर

एव तत्प्रपलायनकारणं······घनकुहापटलात् सर्वव्यापकात् प्रतिक्षणं वेगेन प्रकटतरीभवन्तं, महाकायमपि तुरगचपलं, कज्जलकृष्णवपुषं, क्रोधाऽऽरक्त-हिंस्रलोचनं,उद्धृत्योद्धृत्य शुण्डादण्डं सखड्गं कर्कशस्वरं चीत्कुर्वन्तं, असकृद-विधूय मस्तकं महान्तं शिरस्त्वरक्षितं रदनाभ्यां सुतीक्ष्णाभ्यां प्रत्यर्थिसैनिकान् तुरगाधिरूढान् प्रतिरुरुत्सयाऽग्रे सरतः अधः पातयन्तं, पादतले पिषन्तं, पुच्छदण्डेन विद्युच्चंचलेन वा इतस्ततः पातयन्तं, अविगणय्य······प्रतिकारं तिरस्कृत्य प्रतिरोधं कृत्रिममकृत्रिमं वा वेगेन कल्पनातीतेनाग्रे सरन्तं पशु-मेकम् ।'

'सोऽयं तर्हि गजः······भारतीयानां नरेशाणां वैभवप्रतीकविशेषः······ भारतीयानां सेनानायकानां प्रियतमः पशुविशेषः'······इत्यवलोकनक्षणे एव प्रत्यभिज्ञाय च तं हठात् संयम्याऽऽत्मानं, तन्निरीक्षणकौतुकात्,······'क्षणे-ऽस्मिन् शासनमेवास्य मम सैनिकान् विद्रावयतः श्रेयस्करम्–' इति सहसा विनिश्चित्य······दुःसहेन वेगेन तं समुपससर्प,······अदत्त्वैव तस्मा अवकाशं-मस्तकविधूननाय······खड्गेन तडिद्वेगेन तस्य शुण्डादण्डं वेल्लन्तं लुनाव ······वामहस्तक्षिप्तेन भल्लेन दीर्घदीर्घेण, मुखबिले वेदनाविवृते विददार ······व्यावर्तयामास च तं रणांगणात्······सभयं आक्रोशन्तं स्नपयन्तं हैमवतं तद्रणांगणं संततं निपतन्तीभिः रुधिरधाराभिः ।

अवलोकयत एव सदर्पं स्वादश्वात् व्रीडाधोनयनं प्रत्यागच्छतस्तान् स्व-सैनिकान् पुनर्योधनाय······आविर्बभूवुः तस्य पुरतः सान्द्रतरीभूतात् तस्मादेव कुहापटलात् असंख्यास्ते एव पशवः······तथैवारक्तलोचनाः, तथैव महा-काया अपि तुरगचपलाः, तथैव कज्जल-कृष्णवपुषः, आकर्ण्य स्वबान्धववेदना-ऽऽक्रंदनं क्रुद्धतराः प्रतिजिघांसया दुर्दमनीयया-तिरस्कृत्य-हस्तिपकसंयम-नप्रयासान्-तीव्रतरवेगमग्रेसरन्तः तीक्ष्णतरस्वरं चीत्कुर्वन्तः, चक्रुश्च तं क्षणान्तरे एव······विस्मयभरान्निश्चलतां निरतिशयां उपेतं······सहसा निराशया दुर्दमनीयया समाक्रान्तं,······अनवलोक्यैव चावलोकयन्तं आत्मनस्तत् पुनरायोधनाय प्रत्यागच्छत् व्रीडाधोनयनं सैन्यं······अन्यदपि च स्वं सैन्यं रणांगणप्रान्तान्तरेषु युद्धमानं······आश्चर्यभराज्जडीभवत्, पुनः पराङ्मुखीभवत्, अविगणय्य च तस्योपस्थानं विनश्यत् कुहापटला-भ्यन्तरे !

प्रदीर्घस्य सार्वत्रिकविजयपरंपराभासुरस्य स्वजीवनस्यान्तिमे प्रहरे प्रथमतः साक्षात्कृत्य भीषणं पराभवं सांमुखीनं स च यावच्चिन्तयति तत्क्षणोचितं कर्तव्यं स्वं-तीव्रं स्मरन्नेव स्वं विलक्षणमहत्वाकांक्षापरवशं आत्मजमग्रं तत्कारणं-तावदपश्यत्······स्वप्नगत एव······तत् संमुखीनं अजस्रं गजबलं······क्षणमेकं मंत्राहतमिव विचलत्······किंकर्तव्यताविमूढ़-मिव तिष्ठत्······निरपवादपराङ्मुखीभवत्······सकरुणचीत्कारं च तस्मिन्नेव कुहापटले विलयमात्यंतिकं यास्यत् ।

विस्मयगर्तादबलात् समुद्धरत एवाऽऽत्मानं कथंचित्······तस्य······ चित्तं समाकृष्यत युगपत्······तडिल्लताभिः पीतपीताभिः, दृष्ट्वेव स्वसह-चरान् जलदमेघान् अनापृच्छ्यैव ताः नैसर्गिकीः सहचरीः धरणीतले निःसंकोचं विचरतः क्रोधादातुराभिः, विद्रूपं हसन्तीभिः, तत्-क्रोधाश्रुधारा-भिरिव जलधाराभिः मूसलधारं वर्षन्तीभिः,······'हा······हा!' इति निराशातिशयं व्यञ्जयत्सु उद्गारेषु परिणतैश्च, प्रवातेऽपि तस्मिन् घोरे श्राव्यैः, 'जय······जय इति युद्धोन्माददुःसहैः भारतीयानां सैनिकानां रणगर्जनैः, ।

अश्रद्दधान इवाऽऽत्मनि······स······तथैव······स्वतुरगाधिरूढ़ एव······ अनभिज्ञ एवात्मनः स्वतुरगस्य वा निपतज्जलधाराक्लिन्नदेहस्य शैत्याति-शयकम्पमानगात्रस्य······अवलोकयामासाऽऽकुञ्चितलोचनः स्वमभितः,······ ददर्श च तत् सर्वमपि योजनाधिकविस्तृतं हैमवतं, प्रतिक्षणं स्थूलतरतामु-पगच्छद्भिः उन्मुक्तभावं प्रवहद्भिरारक्तैः जलप्रवाहैरापूर्यमाणं, निपतत् हताहत गज तुरगसैनिककलेवरभीषणदर्शनं रणांगणं······भयाक्रान्तकृष्ण-पिपीलिकासंदोहैरिव यत्र कुत्रापि प्रधावद्भिः असंख्यैः उज्झितशस्त्रैः सैनिकैराकुलाकुलं······आम्······भारतीयैर्यावनैश्च ।

उभयपक्षीयानामपि सैनिकानां तं प्रद्रावं······अदृष्टचरमश्रुतपूर्व-सदृशं पलायनं साक्षात्कृत्य 'किं नु खलु समापतितम्'–इति वितर्कप्रवृत्त एव च हठान्नियम्याऽऽत्मानमौत्सुक्यपरवशमपि······स······ आजन्मनश्चातुर्यं दाक्ष्यं च शिक्षितः······स अमीरः सुबुक्तिगीनः-'अयं······ अयं स अनुकूलतमो मे क्षण'-इति साक्षात्कृत्य तडिद्वेगेन जगर्ज तीव्रेण स्वरेण······'अल्लाहो अकबर !······अल्लाहो अकबर !' इत्युन्नमय्य

स्वं खड्गहस्तं दक्षिणं······महत्तरदेह इव ।

तस्य तया, पलायनकोलाहलेऽपि तस्मिन् तुमुले हाहाकार—ह्रेषित—चीत्कारादिभिरूपबृंहिते सुस्पष्टं श्राव्यया, रणगर्जनया प्रसह्य समाकृष्ट-चित्तास्तु तस्य पलायमानाः सैनिकाः यदा व्यावर्त्य मुखानि तद्रणदर्पकारण-जिज्ञासया दुर्दमनीयया तद्दिशि चिक्षिपुः स्वां दृष्टिं······तदाऽवलोक-यामासुः तं उन्नततरभूभागे मूर्तिवत् स्थिरभावेनावस्थाय, उन्नमय्य स्वं खड्गहस्तं दक्षिणं बाहुं, कृष्णपिपीलिकावत् कान्दिशीकं प्रपलायमानान् परसैनिकान्, वात्यायाऽतितीव्रया नीयमानान् शुष्कपल्लवानिव, अहंभाव-दुःसह्या दर्पदृष्ट्याऽधिक्षिपन्तं, असकृद् विलसद्विद्युल्लताप्रकाशोद्भास्य-मानभव्यवपुषं, प्रसन्नमुखमुद्रं, संभावयामासुश्च तं तत्पक्षपातिना साक्षात् परमेश्वरेण प्राणसंकटसमये सहसा स्वेन प्रभावविशेषेणाऽऽपूरितं,······हठात् स्मारितकर्तव्याश्च स्वयं विरम्य ऐकमत्येन प्रपलायनात् चक्रुः उपक्रमं अनुसर्तुं प्रद्रवे प्रवृत्तान् भारतीयान् सैनिकान् स्वाधिप इव विलीनभयाः······स्वाधिप इव समुद्यतशस्त्राः······स्वाधिप इव घर्घर-स्वरमुद्घोषन्तः······'अल्लाहो अकबर !······अल्लाहो अकबर' इति,—सत्यमेव विश्वसन्तः तस्य विजयघोषणायाम् ।

भारतीयास्तु सैनिकाः······आदित एव शैत्यातिशयबधिरगात्राः······आदित एव भीत्या गलितगात्राः······आदितएवावगणय्य प्रोत्साहन-परमाह्वानं स्वाधिपस्य राज्ञः जयपालस्य,······वार्धकेऽपि तस्मिन् यून इव रणांगणे सर्वत्र युगपदिव विलसतः······, स्वस्वप्राणरिरक्षिषया बलवत्त-मया समुत्सृष्टशस्त्रं प्रपलायमानाः······तमकल्पितोपनतं दुःसहवेगमनुद्रवं यवनसैनिकानां सोढुमपारयन्तः,······किञ्चिदप्यप्रतिकुर्वन्त······संख्यया-ऽतिशायिनोऽपि यवनान् निःसंदेहमतिशयितास्तैः धैर्येण मृण्मया इव,······तृणनिर्मिता इव,······क्षणेषु कतिपयेष्वेव प्रणान् स्वान् विससर्जुः, अलंक्रुश्च सह छिन्नविच्छिन्नैः कलेवरैः निपतितानां गजनां अश्वानां मृतानां मृत प्रायाणां तद्हैमवतं रणस्थलं सन्ततनिपतितवर्षाजलप्लावितं मांसमज्जास्थि कर्दमपिच्छलं भीषणदर्शनं······ग्रासा इवार्धजग्धाः 'देवस्य दुर्बलघातकस्य ।

आसन्नतमम् एकमात्रं तमात्मनः पराभवं······इत्थं······सहसा परिणत अभूतपूर्वसदृशे निरपवादे विजये······परं जहर्ष अमीरः सुबुक्तिगीनः······

तथैव समारूढ़: स्वं तुरंगमं······तथैव रणघोषकर्कश:,······सस्मार क्षण मात्रं विनतमस्तक: परमेश्वरं स्वसेवकरक्षितारमेकाग्रेण मनसा,······स्वीचकार च क्षणमात्रानन्तरं वीरोचितेन गर्वेण समुन्नततरमस्तकं······अभिवन्दनं······अभिवन्दनं······स्वसैनिकानां विजयोल्लासपूरितानां उन्नमय्योन्नमय्य स्वस्वशस्त्राणि उन्मुक्तोन्मुक्तकण्ठं समुद्घोषतां–'शाहे जयतु गजनीश्वर: ! जयतु परमेश्वरप्रिय: । गजनी जिंदाबाद !······हबीबे इलाही अमीर जिंदबाद'······इति ।

स च तस्य हर्ष: आरुरोह परां काष्ठां समवलोक्य तस्मिन्नेव क्षणे सुदूरात् रणांगणप्रान्तात् समारुह्य स्वमतिप्रियं कज्जलकृष्णं प्रचण्डमश्वप्रतिनिवर्तमानं······अक्षतशरीरं······कैशोर्येऽपि युवानमिव गर्वोन्नतं,······मूर्तं अग्निस्फुलिंगमिव धर्त्तुं दावानलस्य सर्वव्यापिन: रूपं व्याकुलं······स्व अग्रजं······महमूदं······सहपराभवम्लानेन शृंखलाविनिगडितहस्तेन पदातिनाऽधोमुखेन नृपेण जयपालेन······तत्सुतेन प्रौढ़ेन युवराजेनाऽऽन्दपालेन ······तत्पौत्रेण सुखपालेन त्रिलोचनपालेन धर्मपालेन च तुल्यवृत्तान्तेन ।

······'इत्थं तर्हि'–न्यनदत् तस्मिन् विशाले राजकीये पटमण्डपेऽपरेद्यु:सायंतनदिनकरकरसमुद्भासिताभ्यन्तरे समुन्नतमञ्चविशेषसमारूढ़स्य यवनाधिपवेषधरस्य सशस्त्रांगरक्षकरक्षितोभयपार्श्वस्य दर्पोल्लसन्मुखमुद्रस्य 'फलेन पुनर्नवीनीभूतक्लेशस्येव' व्यपगतप्राक्तनखेदस्य, गर्वोल्लसन्मुखमुद्रस्य अमीरस्य सुबुक्तिगीनस्य उपहासदु:सह:, स्वर:······हासयन् आसमन्तात् कृतसंमर्दान् उच्चावचान् स्वसैनिकाधिकारिवृन्दान्······दहत् अन्तर्मर्माणि पुरत: एव मंचस्य विनिगडितहस्तयुगलं समुपस्थापितस्य पराभवाधोमुखस्य नि:श्रीकस्योच्छूनाऽऽरक्तलोचनस्य वृद्धस्य राज्ञ: जयपालस्य, प्रतिहिंसाज्ज्वलन्नेत्रयुग्मस्य प्रौढ़स्य युवराजस्यानन्दपालस्य, अन्त:संयमितभावनाक्षोभस्य चतुराभ्यां नेत्राभ्यां घटनाप्रवाहं सर्वं निरीक्षमाणस्य राजकुमारस्य सुखपालस्य, भयाक्रान्तस्य राजकुमारस्य त्रिलोचनपालस्य, समीपे एवामीरस्य किंचिन्यूनविशेषे मंचान्तरे समुपविष्टं निर्विकारं सर्वं घटनाप्रवाहं साक्षात्कुर्वाणं अमीराग्रजमेव विशेषेण ध्यायतो धर्मपालस्य च······'भारतीयेषु नरेशेषु ज्येष्ठ: श्रेष्ठ:······अपराजेय:······राजा जयपाल:······स्वसेनया संख्याऽधिकया···क्षुद्रस्य···साहसिकस्य···बर्बरस्य······नृपब्रुवस्यामीरस्य······

अमीरस्य······शूरंमन्यस्य······सेनां······पेष्टुमुद्यत आसीत् ?······स्वगज-बलेन भापयित्वाऽमीरं······तं तत्पादतले चूर्णयितुं समुद्यत आसीत् ?'

'(सोपरोधं)······साक्षात् कृतं किं त्वया,–(अन्ते स्यान्नाम स्वजीवन-हतकस्य !–), रे, अजेयंमन्य !······यत्······युद्धे······केवलं संख्या बलं···पशुबलं वा······न निर्णायकम् ?······अपितु–किंचिदन्यत् ?······सेनानाय-कस्य चातुर्यम् ?······परीक्ष्य परदौर्बल्यस्थलं तदाघातकौशलम् ?'

तत् 'अन्यत्······' तत् 'चातुर्यं······' तत् 'कौशलं' (सकुत्सं विहस्य) अभावेनैव नेत्रदीपकेन विलसति······त्वयि······वार्धकजडमतौ······, तव···अस्मिन्······(सोल्लुण्ठं) अस्मान् नेत्राभ्यां दग्धुं प्राणपणेन प्रयतमाने पुत्रे,······तव एषु······दिङ्मूढेषु पौत्रेषु······एषु वा (सस्मितं) स्थूलस्थूलेषु सेनाधिकारिषु !······विलसति च प्रकर्षेणास्मासु······वर्बरेषु !'

'अप्यवलोकयसि (संसूच्य समीपोपविष्टं महमूदं)······इमं किशोरम् ?······(सगर्वं) अस्माकमयम् आत्मजः······समवयस्क एव तव एतैः पौत्रैः···परंतु न समः तैः···श्रेष्ठः तेभ्यः श्रेष्ठः तवैतस्मात् वृथाप्रौढात् पुत्रात् !···(सकौतुकमवलोकयन् स्वमात्मजम्) एतस्य बालस्य चातुर्येण एकाकिनः······यूयं सर्वे······निमिषाभ्यन्तरे······तथा पराजिताः······तथा पराजिताः······यथा स्वे महत्तमे राज्ये नूनमुपहसनीया भविष्यथ···कतिपयेष्वेव दिवसेषु ।'

'अनुमितमेव स्यात् अस्य तच्चातुर्यं त्वया कारावासदीर्घदीर्घायां अतीतायां निशायाम् !······किं न अनुमितं ?······नूनं यूयं पाशवेनैव बलेन संपन्नाः !······(तदपि वस्तुतः संशयास्पदमेव,······तथापि–अभ्युपगमन्या-येन तथोच्यतेऽस्माभिः) न बुद्धिबलेन् !······मनस्तु युष्माकं···विचित्रान्ध-श्रद्धाविनिडितहस्तपादं न कदापि किंचिदपि स्वतंत्रतया मन्तुमुत्सहते ।'

'विदितं खल्वनेन विगतेद्युरेव स्थानीयेभ्यः भारवाहिकेभ्यः स्कन्धा-वारेऽस्मायं उपजीविकार्थं परिश्रमद्भ्यः यत्–एतस्य रणक्षेत्रस्य समीप एवास्ति एको महान् गिरिनिर्झरः प्रवहन् निर्मलजलः (हस्तेन किंचिद्-विनिर्दिश्याऽऽसन्नवर्तिनं कुहापटलावशेषाऽऽच्छन्नतया ईषल्लक्ष्यविशेषं पर्वत-मेकं अस्मात् भूधराद्दिवानिशम्······तं गिरिनिर्झरं······यूयं भारतीयाः······मूढाः······मूर्तिपूजकाः······क्षुद्रतमेष्वपि निर्जीवेष्वपि······पदार्थेषु परमेश्वर-वासमभ्युपगच्छन्तः······परमं पवित्रं······अत्यन्तं आदरणीयं······अतश्च

नितान्तमनधिक्षेपणीयं मन्यध्वम्·····मन्यध्वं च जडमतयः यत् अपवित्र-पदार्थमिश्रणादिनाधिक्षिप्तोऽयं·····सहसा कुपितः·····दैवेन प्रकोपेण स्वय-मधिक्षिपति अधिक्षेप्तारं समुद्भाव्य प्रलयघनाः घनघटाः प्रचण्डवेगाः वात्याश्च तुहिनदाहकाः,·····कृत्वाऽस्य उक्ब धुजक्पर्वतस्य शिखरवर्तिनीः हिमततीः कज्जलकृष्णाः,, समाहूय च प्रलयंकराः घोरा वर्षाः सर्वविप्लव-कराः ! ·····विदित्वा युष्माकम् एतत् अन्धश्रद्धादौर्बल्यस्थानम् (–सकौतु-कस्मितं–)·····अनेन चतुरेण·····अद्य एव·····महतिप्रत्यूषे·····निरीक्ष्य वः अस्माभिः सहाऽऽयोधने व्यग्रान्·····कतिपयैः सैनिकैः सह·····निभृतं गत्वोन्नततरे पार्वते प्रदेशे निर्झरस्यास्य·····युष्माकं पूज्यस्य·····जलं····· रक्तार्द्रैः हस्तपादाद्यवयवैः सुलभप्रत्यभिज्ञानैः यथेष्टं मिश्रितम्·····प्रत्या-गत्य च··तेषामेव स्वसैनिकानां··निर्झरनिकट एवाऽऽ-योधने व्यग्रमिवात्मानं प्रदर्शयतां·····माध्यमेन·····युष्माकं सैनिकानां समीपवर्तिनां चित्तं····· समुद्दिश्य तद्रक्तमांसकलुषितं निर्झरजलं·····समाकृष्टमनायासमिव····· (सोल्लासम्) अवलोक्यैव तत्·····भयावसन्नगात्राः युष्माकं ते सैनिकाः··· प्रलयमेव आसन्नतमं मन्यमानाः·····साधारणेऽपि प्रवाते वात्याचक्रं····· सामान्येऽपि आसारे प्रलयंकरां वर्षां·····कृष्णमेघपटलाच्छन्नमपि तत्पर्वत-शिखरं कृष्णकृष्ण विभावयन्तः·····हताशाः·····वैयर्थ्यं विभाव्याऽऽयोधनस्य (–अतीव तत्परा यूयं भारतीयाः क्षुद्रमपिकारणमधिगत्य वैयर्थ्यस्य सर्वस्य विभावने !–)·····आत्मरक्षणेच्छयाऽन्धया केवलयाऽऽक्रान्ताः आरभन्त इतस्ततः प्रपलायितुम् !·····नारभन्त स्वमेव प्रपलायितुं,·····अपितु–आरभन्त·····उन्मत्ता इव प्रलपन्तः प्रोत्साहयितुमन्यानपि स्वसुहृदः स्व-बान्धवान् तथाकर्तुम् !·····(सुकुत्सस्मितं) अपश्यंश्चाऽऽत्मानं·····विजय-शिखरं·····प्राप्तप्रायम्·····पराजयगर्ते प्रलयादपि दुःसहतरे निपतितम् !'

'अप्यस्ति·····एतादृशं चातुर्यं·····एतच्छतांशमपि·····कौशल्यं····· त्वयि·····रे जयपाल ?·····तव पुत्रेवा ?·····'

–पृच्छन्नेवेत्थमुपहासदुःसहं स यवनराजः आरभतावलोकयितुं स्वम् अग्रजं कौतुकस्निधया दृशा ।

'तेन सह·····पराभवम्लानया दृशा स वृद्धः भारतीयः नृपः,····· अविश्वसन्त्येव दृशा तस्य पुत्रः आनन्दपालः·····विविधभावनाकूलया दृशा

च तस्य पौत्रगणः ।

धर्मपालस्तु·····अवलोकयन् तं अन्तः प्रविशत्सांध्यदिनकरकरभासितं-शरीरं स्पष्टतरदृश्यमानाऽऽरक्तगौर-व्रणांकित-कुरूपमुखमुद्रं, समुपेक्ष्य दृशः सर्वेषां·····स्वकीयानां तथा परकीयाणां विभिन्नभावमिश्रिताः·····तत्-केंद्रिताः·····सामवार्त्ता एव स्वपितुं पराभूतेन तेन पांचनदेन नृपेण सह अनु-पदमेव प्रचलिताः·····चित्तेन एकाग्रेण सर्वंकषेण श्रृण्वन्तं·····महमूदं····· आरभतानुभवितुं शतगुणितेन प्राबल्येन पुनरपि तस्य तद्वैलक्षण्यम्····· भावयदिव न्यक्कुर्वदिवाभिभवदिव परकीयान्·····वशीकुर्वदिव मोहयदिव स्वकीयान्·····दुर्निवार्यप्रभावम् ।

तथा व्यापृतचित्तश्च बभूव तस्याऽऽकलने·····तस्य विश्लेषणे·····तस्य निर्धारिणे·····तस्य भाविनां परिणामानाञ्च कल्पने·····यथा न शशाक··· श्रोतुं ताः सामवार्त्ताः···आकलयितुं साकल्येनाधिक्षेपं सुनिगूढं निहितं यवन-राजसंधिप्रस्तावेषु,·····लक्षयितुं तदस्वीकारं सहसा समुत्तेजितस्य स्वपिता-महस्य द्रष्टुं सहासमिव सकौतुकमिव मुखं यवनराजस्य,·····आकर्णयितुं तस्य सौम्यतरान् प्रस्तावान् तदनुपदमेवोपन्यस्तान्,·····निभालयितुं सहसा त्यक्त्वा ताटस्थ्यं काठिन्यमुपगतां मुखमुद्रां सदात्मजस्य,·····साक्षात्कर्तुं तस्य हस्तक्षेपप्रयत्नं, स्मयमानमुखेन तज्जनकेनावधीरितम्,·····आकलयितुं ताट-स्थ्यं कठोरतरमुपगतां तस्य मुखमुद्रां,·····लक्षयितुं सामवार्त्तानां सफलं समापनम्,·····अनुभवितुं वा सभाविसर्जनं यवनराजस्य प्रसन्नस्य सहाऽऽत्म-जेन ततः निर्गमनं जयजयकारेण सार्वत्रिकेण बहुमानितम्,·····आत्मनश्च सह पितामहेन सह जनकेन,·····सह भ्रातृगणेन समुद्दिश्य स्वां राजधानीं प्रतिनिवर्तनं, पराभवनिर्विण्णम् ।

'·····नहि·····नहि, नहि वयमावद्धाः लेशतोऽपि मर्यादाभिः क्षात्रस्य धर्मस्य·····संमानयितुं ताः संधिवार्तास्तेन म्लेच्छेन बलादारोपिताः·····' शशाक च सहसा एवमुक्त्वाऽऽवरोद्धुं विचारविनिमयप्रवाहं·····चिरात् प्रच-लितं सायंतने समये कूटमंत्रणागृहे स्वपितामहस्य·····स्वराजधानीं कतिपयैः दिवसस्य पराभवम्लानवदनं प्रत्यागतस्य ।

'नहि वयं पराजितास्तेन क्षात्रं धर्ममनुसृत्य युद्धमानेन,·····अपि तु शाठ्यं·····घोरं शाठ्यम्···अंगीकुर्वाणेन···'शठेशाठ्यं' समाचरद्भिरस्मा

भिर्यदि ताः संधिवार्त्ताः······स्वराजधानीं सकुशलं प्रत्यागतैः······न समानिताः···तर्हि न वयं लेशतोऽपि अपराधिनः क्षात्रधर्ममर्यादानां समुल्लंघनस्य,······अस्माकम् आर्यः समाजः न निंद्यात् अस्मान्,······प्रत्युत अभिनंद्यात् एवास्माकं चातुरीम्'—विरराम च सहसा स्वमतप्रदर्शनात् मध्य एव···साक्षात्कृत्य धाष्ट्र्यमात्मनोऽवसरे तस्मिन् मंत्रणार्थं समुपस्थितानां गुरुजनानां मध्ये तथा प्रगल्भापमानस्य।

'समीचीनमेव मतं प्रकटीकृतं······वत्सेन धर्मेण'-विचारविनिमयप्रवाहं क्षणमात्रं खण्डितं पुनश्चालयन् जगाद् पिता तस्य प्रत्यावर्त्याऽऽत्मनश्चकितचकितामपि सकौतुकां दृष्टिं तस्य मुखारविन्दात् लज्जाभरात् आरक्तारक्ताम्······'न वयं सत्यमेवाऽऽबद्धाः क्षात्रेण धर्मेण ता बलाद्ग्राहिताः संधिवार्ताः संमानयितुम्······सहि सुबुक्तिगीनः······मूर्तिभंजकः आततायी······हन्तव्य एवास्माभिः······निःसंकोचम्,······तत् तिरस्कृत्य ताः संधिवार्ताः अपालनेन निःशब्देन······अस्माभिः अवश्यमपि तस्य पुनराक्रमणं प्रतिरोद्धुं······समूलघातं च तमस्माकं राज्यस्य राष्ट्रस्य धर्मस्य द्वेष्टारं तं म्लेच्छं हन्तुमविलंबमेव कर्तव्यः······सेनानां संनाहः······महत्तरः बलवत्तरः।'

'समीचीनमेव मतं पुरस्कृतं मान्यवरेणाऽऽर्येण'—महता उत्साहेन उवाच अपराजितः······वरिष्ठतमः सेनानायकः राज्ञः जयपालस्य······उत्सुकोत्सुकः पुनः प्रस्थापयितुम् अभिधेयस्याऽऽत्मनो यथार्थतां······पराजित्य यवनं तं साहसिकम्।

'कर्तुं महत्तरं बलवत्तरं सेनानां संनाहं······अस्माभिः प्रेषणीया विश्वसनीया दूताः सेवायां राज्ञां भारतीयानां····सोलंकी-चामुहान-तोमर-पवार-कच्छवाह चंदेल-परिहार-सदृशानाम्······अभ्यर्थयितुं तत्सेनासाहाय्यं'-आह मंद्रस्वरं देवरक्षितः······राज्ञः सन्धिविग्रहिकः।

'प्रेषणीया अद्यैव······परंतु परिहरद्भिः मंत्रभेदम्' आचकांक्ष वक्तुं धर्मपालः न शशाक परन्तु कर्तुं तथा······दक्षः रक्षितुमात्मानं अनाधिकारचेष्टापवादात्।

अचेष्टत केवलं स्वां दृष्टिं तद्भिप्रायां निगडयितुं दृष्टया स्वपितुः
शशाक तथा कुर्तुं कतिपयक्षणानन्तरमेव।
न तु संक्रमयितुं स्वम् अभिप्रायं तन्माध्यमेन।

व्यग्रमनस्कत्वादपरस्य विविधसेनासंनहनोपायसंकल्पनव्यग्रस्य ।'
यदि नाम सः अशक्ष्यत······भाविघटनाप्रवाह् एव समग्रः अन्यथाऽ-
भविष्यत् ।

अनुभववृद्धोऽपि राजा जयपालः, सन्तुलितमतिरपि युवराजः आनन्दपालः काकचतुरोऽपि देवरक्षितः······किं बहुना···सर्वेऽपि ते तथा व्यग्रा बभूवुः··· तथा व्यापृतचित्ता बभूवुः सेनानां नवीनानां प्रशिक्षणे अश्वानां क्रये······ सर्वेषामेव भारतीयानां नरेशानां संनिधौ मधुरवचसां विशेषदूतानां संप्रेषणे ······यथा स मंत्रस्तेषां कतिपयेष्वेव दिवसेषु असंख्यकर्णो बभूव ।

बभूव च कतिपयेष्वेव सप्ताहेषु···अमीरस्य सुबुक्तिगीनस्य चारचक्षुषः स्पशकर्णस्य महत्क्षोभकारणम् । दृढं हि स विशश्वास तदवधि (अवधीरयन् स्वात्मजस्य मूकमुखरं वैमत्यं–) भारतीयानां नृपाणां वचनपालकत्वं··· चलितायामप्यचलायामचले ।

क्षुब्धश्च निश्चिकायाविलम्बमेव दण्डयितुं वचनविमुखमपराधिनम्,··· तथा दण्डयितुं······यथा भाविनि काले न कोऽपि भारतीयः नृपः उत्सहेत स्वप्नेऽपि·····कर्तुं धाष्टर्यं तथाविधम् ।······न केवलं निश्चिकाय-अपि त्वारभत् कर्तुं सेनासंनाहम्······न केवलमारभत कर्तुं सेनासंनाह्······ अपि तु (–अनुसरन् स्वात्मजस्य मतं······स्वैरमिव सूचितं) प्रयुयोज कठोरतमान् उपायान् कर्तुं मंत्रगोपम्,······दृढं हि स इयेष आक्रमितुं धृष्टं··· सर्वथा एकाकिनम्······अप्राप्तसुहृत्साहाय्यम् ।

अचिरादेव च संनह्य स्वसेनां (सदैव संनद्धप्रायां बलवत्तरां······वेगवत्तरां······चपलतरां······समर्थतरां विद्युत्संचलनेषु समये समरस्य······ प्रातिष्ठत राजधान्याः संमुखीनश्च बभूव कतिपयेष्वेव दिवसेषु······लब्ध्वा वार्तां तत्प्रस्थानस्य काकतालीयन्यायेन सहसा विचलितमनोधैर्यस्यालब्धमित्रसम्पदः स्वसेनामात्रसाहाय्यस्याऽऽकुलाकुलं स्वराजधान्याः (–अकृत्वैव शुभाशुभदिवसविचारं–) प्रस्थितस्य यावच्छक्यमाक्रामकं सीमासमीप एव प्रतिरोद्धुमातुरस्य राज्ञः जयपालस्य ।

परिहरन् तथापि सांमुख्यं समीपतः······सः······मार्गपतिते समुन्नततरे भूप्रदेशे सह स्वसेनया गहनवृक्षराजिसमाच्छन्नप्राये निलीनः······पुरःसरणं विपरीतदिशः गजगत्याऽऽगच्छन्त्या द्विपत्सेनायाः निरीक्षां चक्रे मुहूर्त-

मात्रम् । निरीक्ष्य च तां समीपतरमागतां·····आकलय्य दिवसावसानं प्रत्यासन्नं भूभागे सामरिकदृष्ट्या नात्यनुकूलेऽपि यापयितुं निशां समुद्यतां·····स्वनिवेशपरिकल्पनाव्यापृतां (–अनुसरन् महमूदस्य रणकल्पनां–) आ निशामुखं भेजे तूष्णींभावम्–अनुमाय च तां सायंभोजनादिदैनंदिननित्यकर्मव्यग्रचित्तां, स्थाने स्थानेऽन्धतमसि प्रतिक्षणं घनतरी भवति अनायासमेव परिदृश्यमानानां धूमध्वजानां साहाय्येन, विभज्य स्वां सेनां दलेषु असंख्येषु·····आकारेणानतिबृहत्स्वपि आक्रमणवेगेन प्रहारसामर्थ्येन चातिदुःसहेषु·····आरेभे आक्रमितुं तां·····कदाचित् तद्वामतः······ कदाचित् तद्दक्षिणतः·····कदाचिच्च तत्पृष्ठतः ।

सा तु·····स्मारं स्मारं विगतं स्वं पराभवं शिथिलित धैर्यावष्टम्भा·····तत्रापि अनवरतदीर्घप्रवासपरिश्रान्ता·····तत्रापि समनुभूयाऽऽत्मानं दूरदूरतरं स्वराजधान्याः प्रतिदिनमागच्छन्तमनाश्वासेनाधिकाधिकेनाऽऽक्रम्यमाणा,·····तत्रापि निशामुखे तस्मिन् स्वसंरक्षणदृष्ट्या नातिसमीचीने भूभागे विषमेऽगतिकतया क्लृप्तनिवेशमात्मानमवलोक्य साशंका·····कथं कथमपि यापयितुं निशां तामतिशीतलां समुद्यता····· अकस्मात् प्रवृत्तैस्तैः प्रत्यर्थिनः दलानामाक्रमणैः दृष्टनष्टैरपि मर्मभेदकैः··· तथा व्यग्रमनस्का भ्रान्तचित्ता च बभूव·····यथाऽऽक्रमणानि तानि निशाचराणामेव निशाचराणामसंख्येयानां मन्तुं·····रक्षितुं चात्मानं येन केनापि प्रकारेण प्राक्रमत·····उद्ध्वस्तसंनिवेशा ।

एवं समाक्रम्य मुहुर्मुहुस्तां विपक्षिसेनामविरतं, परिकल्प्य चान्ते तां कान्दिशीकां·····अमीरः सुबुक्तिगीनः·····निरीक्षमाणः उन्नततमात् स्थानविशेषात् आयोधनप्रगतिं वृद्धाभ्यामपि सूचिभेद्ये तमसि तस्मिन् निरीक्षणक्षमाभ्यां नेत्राभ्यां आदिदेश तां समग्रामपि स्वसेनां आक्रमितुं तां····· यौगपद्येन·····निनाय च तां स्वयं·····समुद्यतखड्गः कृष्णकवचाऽऽवृत सर्वांगः कज्जलकृष्णतुरगाधिरूढः·····सहितः स्वात्मजेन समानवेषेण ।

प्रतिक्षणं विभाव्य पराभवं समीपतरं·····समीपतमं·····आगच्छन्तं व्याकुलस्यापि, प्रकटतो वीरगर्जनाः कर्णकर्कशाः (–तदवस्थितिद्योतका-इत्यहो दुर्भाग्यम्–) कुर्वतः राज्ञः जयपालस्य सेना तु·····अनुभूय तदन्तिममाक्रमणं दुःसहतमं·····अमन्यत अन्तमेव स्वजीवनहतकस्य समुपस्थितम्,

अमन्यत·····स्वैरेव गजैः व्याकुलाकुलमितस्ततः प्रधावदभिर्विधूय गजपाल-निर्देशान् प्रतिक्षणं भिन्नान् यान् कानपि सैनिकान् स्वपुरतः समुपस्थितान्-अकृत्यैव पक्ष-विपक्ष विवेकं-हताहतान् कुर्वद्भिः·····दल्यमाना·····आत्मानं अनेकतां देहस्यभूतपूर्वामुपगतेन यमवाहनेनैव दल्यमानम्। अमन्यत····· तस्मिन् घोरेऽन्धकारेऽलातेन एकेनापि अनाक्रान्ते कदाचित् स्वकीयानां कदाचित् परकीयाणां खड्गैःछिद्यमाना·····आत्मानं तस्यैव यमवाहनस्य शृंगाग्रैः मर्मसु छिद्यमानम्।

साहाय्यं तस्य सेनायाः कर्तुं हस्तिनापुरस्याजामीलस्य कलिंजयस्य नृपैः, जयपालसदृशस्य ज्येष्ठस्य मित्रस्यानुरोधं बहुमानयद्भिः, महत्या त्वरया संप्रेषितानि तानि तानि धानुष्काणां रथिकानां खड्गिकानां कुन्तिनां शक्तिकानां दलानि (तु रणक्षेत्रे तथाविधे शैत्ये च तादृशे नितान्तमपरिचिते आयोधनेनापरिचितानि·····तथा भ्रान्तचित्तानि·····तथा भयातुराणि····· बभूवुः·····यथा स्वपरविवेकाक्षमाणि·····यत्र कुत्रापि स्वशस्त्राणि प्रयु-युजुः···जघ्नुश्च स्वानेव सुहृत् सैनिकान् अन्धकारे तस्मिन् चित्तभ्रामके।

अतएव·····सा राज्ञः जयपालस्य सेना·····विगलितसंहतसेनाभावा··· स्वस्वरक्षणेच्छयैव केवलया प्राणिमात्रसुलभया प्रेर्यमाणा·····परसेनया निःशब्दं निर्दयं निरतिशयं प्रहरन्त्या भयातुराणामाक्रोशमुखराणामुच्चैः रुदतां कापुरुषाणां समूहस्य स्वरूपं प्रापिता·····आरभत प्रनष्टुं····· विशीर्णजर्जरपत्रसंहतिरिव वात्याचक्रेण प्रचण्डवेगेन धूलिधूसरेण मथ्य-माना·····प्रहराभ्यन्तरे एव·····इत्यत्र किमिवाश्चर्यं ?

न किमपि।

न वा,·····कोलाहले तस्यास्तुमुले·····शशाक·····विद्युद्वेगेन बन्दी-कर्तुं यवनसैनिकदलमेकं·····विशिष्य कार्ये तस्मिन् आदित एव नियुक्तं गजनीयुवराजेन महमूदेनानागतविधात्रा·····राजानं जयपालं संततरण-घोषघर्घरस्वरं शैत्येऽपि तथाविधे श्रमातिरेकप्रस्फुटितघर्मबिन्दुलांछित-ललाटफलकं·····युवराजमानन्दपालं रक्तस्नातं समारुह्य स्वमश्वं रणक्षेत्रे विद्युद्वेगेन विलसन्तं·····सर्वान् राजपुत्रान् च रणक्षेत्रस्य विविधेषु प्रान्तेषु प्रतिरोद्धुं स्वसैनिकान् पलायनशूरान् पणीकृत्य स्वान् प्राणान् प्रयतमानान् इत्यत्र।

न वा,⋯⋯शशाक⋯⋯इयता वेगेन बन्दीकर्तुं तान् सर्वानपि यत्ते स्वयमपि न विदुरात्मानं सर्वतस्तेन कुण्डलीक्रियमाणं आक्रम्यमाणं बन्दीक्रियमाणं⋯⋯शक्नुश्च वेत्तुं आत्मानं पराभूतं⋯⋯प्रकाशेऽलातानामसंख्यानां युगपत् प्रज्वालितानां यवनसैनिकैरनुसृत्य कमपि कर्कशस्वरे सदर्पं प्रदत्तमादेशं (–स्यान्नाम्) तद्दलप्रमुखस्य⋯⋯दृष्ट्वाऽऽत्मानं बलात् निःशस्त्रीक्रियमाणम्,-इत्यत्र ।

अकस्मात् सचटचटात्कारं प्रस्फुटितेऽसंख्यानां तेषामलातानां प्रकाशे सहसा दृग्विषयतामापन्नं रणक्षेत्रं तदवलोक्य सर्वे एव योद्धारः-⋯विजयिनः विजिताश्च⋯⋯तथाऽऽश्चर्येणाभिभूता बभूवुः⋯⋯यथा न विशश्वसुः स्वे चाक्षुषे प्रत्यक्षे,⋯⋯न शक्नुः च कामपि भावनां आत्मनः प्रकटीकर्तुम् ।

रोमहर्षणं हि आसीत् तद्दृश्यम्,⋯⋯रक्तारक्तं⋯⋯मांसपिच्छलं⋯ हताहतानां सैनिकानां तुरगाणां द्विरदानां कलेवरैरितस्ततः पतितैस्तदवयवैश्च बीभत्सदर्शनम् !

अपरस्मिन्नेव परंतु क्षणे प्रकटीचक्रुस्तां आश्चर्याद्बलवत्तरीभूतां 'जयतु युवराजः !' 'शाहजादा जिन्दाबाद !⋯⋯शाहजादा जिन्दाबाद' इत्याकारकेण, 'हा !⋯⋯हा !⋯⋯' इत्याकारकेण च, उद्गारेण⋯⋯ अवलोकयन्तस्तद् दृश्यं रणक्षेत्रस्य⋯⋯आ दिगन्तेऽन्धकारसागरे प्रकाशमयद्वीपायमानस्य ।

सर्वं तं नाट्यपूर्णं घटनाप्रवाहं विपरीतम्⋯⋯आकुञ्चितलोचनं साक्षात् कुर्वतः म्लानस्य न राज्ञः जयपालस्य, न युवराजस्याऽऽनन्दपालस्य, न राजपुत्रस्य सुखपालस्य, न वा तद्भ्रातुस्त्रिलोचनपालस्य दुःखेन बधिरा मतिः शशाक लक्षयितुं सूक्ष्मं पार्थक्यं विजयोल्लासेन उत्क्षिप्योत्क्षिप्य स्वं स्वं शस्त्रं नृत्यन्त्या यवनसेनायास्तस्याः जयघोषस्य तस्य जयघोषात् प्राक्तनात् ।

शशाक सा केवलस्य राजपुत्रस्य धर्मपालस्य⋯⋯दुःखेनाऽऽक्रान्ताऽपि न तेन बधिरीकृता,⋯⋯अपितु–जन्मसिद्धया दक्षतया सर्वस्य घटनाक्रमस्य मर्मण आकलने पूर्ववत् समर्था⋯उपोद्बलितसामर्थ्येव कयाचिदनिर्वचनीयशक्त्या⋯'इतोऽपि भयंकरतराः घटनाप्रवाहाः आलिखिता विधिना⋯तव⋯ तव परिवारस्य⋯⋯तव⋯⋯प्राचीनस्य राज्यस्य⋯⋯तव देशस्य⋯⋯स्व-

कर्तव्येभ्यो विमुखीभूतस्य……ललाटफलके'—इति गदन्त्या ।

शशाक सैव मन्तुं यत्—'प्राक्तनः सः जयघोषः अघोषयत् जयं अमीरस्य सुबुक्तिगीनस्य……'……'अयं राजपुत्रस्य महमूदस्य' ।

शशाक सैव मन्तुं यत्—'पार्थक्यमेतत् निःसंदेहं सूचयति कतिपयेष्वेव विगतेषु मासेषु वृद्धिमुपगतां लोकप्रियतामस्य महमूदस्य यवनसेनासु' ।

शशाक सैव मन्तुं यत्—'पार्थक्यमेतत्……अमीरेणानेनापि स्वसमीपे आगच्छन्तमेनं महमूदं स्नेहार्द्रया सस्मितया दृष्ट्याऽभिनंदयता……अनुमोद्यमानं……निःसंदेहं सूचयति यत् सद्यःसमाप्तस्य एतस्य समरस्य संचालनं साफल्येन एतस्यैवाऽऽसीत्' ।

शशाक सैव प्रत्यभिज्ञातुं यत्—'न……अयं सुबुक्तिगीनः (—वार्धकवशादस्तंगतप्रायः)……अपि तु अस्य पुत्रः……अयं महमूदः……मम संमुखीनः, सहजमिव स्वीकुर्वन् एतं जयघोषः……एव नः वास्तविकः अहितः ।'

शशाक सैव समाकलयितुं यत्—'कतिपयेष्वेव एषु अतीतेषु मासेषु…… अहितस्यैतस्य……निशीथे तस्मिन् अनुभूतचरः……अनिर्वचनीयोऽपि अप्रत्यास्येयः……सः प्रभावविशेषः स्वाभाविकः परां काष्ठां गतः…… अचिरादेव नूनं वशीकरिष्यति स्वकीयान्……हनिष्यति परकीयान्…… चमत्करिष्यति च तटस्थान् समस्ते जगतीतले ।'

शशाक सैव समाकलयितुं यत्……अस्यैव……अस्यैव माध्यमेन प्रहरिष्यति नः विधाता……न्यायविचारविधाता……सुकृतदुष्कृतभोजयिता……स्वमर्यादायाश्च्युतान् शृंखलया विपदां दुःसहतराणां……अचिरात्……अचिरादेव ।'

……तथाऽभिभूतः नूनं स धर्मपालः बभूव तया,……यथा न विवेद… अमीरं सुबुक्तिगीनं……तिरस्कृत्य विजयोल्लासे तस्मिन् परिश्रमं सद्यः समाप्तस्याऽयोधनस्य, न्यक्कृत्य खेदं शैत्यस्य प्रतिक्षणं वर्द्धमानस्य, तस्मिन्नेव वसामांसासृक्पिच्छिले रक्तारक्ते प्रज्वलितालातसहस्रोद्दीपिते सद्यः समाप्तपिशाचराजसहभोजनस्थले इव भयंकरदर्शने भयाक्रान्तद्विरदसैनिकमलदुर्गन्धदुःसहे रणक्षेत्रे सद्यः न्यायविचारे प्रवर्तमानं……उपस्थितौ स्वात्मजस्य स्वामात्यगणस्यावस्थाय मूर्तिसमुदायवन्निश्चलं तं साक्षात्कुर्वाणस्य सान्द्रस्य स्वसैनिकसहस्रसंदोहस्य चाधिक्षेपदुःसहेन कटाक्षेण

राजानं जयपालं तिरस्कुर्वन्तं,........राजानं जयपालं........अधो-वदनं......लज्जया भूमौ मिमङ्क्षन्तमिव निःशब्दं तं तिरस्कारं विषमिव पिबन्तं,......अमीरं सुबुक्तिगीनं (–चिरात् समुपजातदयमिवावलोक्य तस्य शोचनीयां दशां वृद्धतरस्य–) संधिप्रस्तावान्......पूर्वेभ्यः कठोरतरान्......उद्घोषयन्तं,......तदात्मजं महमूदं ततसमीपवर्तिनं निशम्य तान् सहसा कुप्यन्तं......निःसंकोचं सर्वजनसमक्षं तत्प्रतिवादे प्रवृत्तं......जनकेन सह सावेशं विवदन्तं......प्राणदण्डं साक्षात् उचितत्वेन समुदघोषयन्तं... चिराच्च कथमपि विवादाद्विरमन्तं,......राजानं जयपालं...प्राणदण्डेना–प्यविचलितं......ताटस्थ्येन संधिप्रस्तावानन्तिमान् स्वीकुर्वन्तं......समर्पयन्तं सर्वेषां द्विरदानामश्वानां च संदोहं हतावशिष्टं......अंगीकुर्वन्तं समर्पणं महतो भूभागस्य लमधानपुरुषपुरान्तरालवर्तिः स्वराज्यान्तर्गतस्य...... स्वीकुर्वन्तं प्रसह्य यवनीकरणं तद्भूभागनिवासिनां बौद्धधर्मानुयायिनां स्वप्रजाजनानां निरपराधमेव बलीकृतानां......निवर्तमानं च-अन्ते–स्वराजधान्यै सह पुत्रेण पौत्रवृन्देन कतिपयसैनिकवृन्देन......पद्भ्यामेव...... निःश्रीकं......मूर्त पराभवं भारतमातुः !



## द्वितीयः परिच्छेदः

न विवेद······समाक्रम्य दीर्घदीर्घमध्वानं कष्टबहुलं, परिहृत्य मार्गपतितानां ग्रामटिकानां ग्रामाणां जनानां सांमुख्यं ग्लानिवशात्, कथमपि स्वां राजधानीं प्रविष्टेन तेनाकस्मात् वृद्धतरेण पितामहेन सह गृहं स्वं प्रत्यागतोऽपि······समतिक्रान्तेष्वपि द्वित्रेषु संवत्सरेषु······कमपि उपायं···निरन्तरं विचारयन्नपि······समर्थं बहिरानेतुं तं विषादान्धकारात् अन्धकरात्, प्रोद्दीपयितुं पुनः तत्प्रतापस्फुलिंगं, प्रोत्साहयितुं च तं पुनरप्येकवारमनुसर्तुं स्वकर्तव्यपथं तस्य प्रकाशे–'समे कृत्वा जयाजयौ ।'

विवेद च······बहोः कालादनन्तरं···तं···एकस्मिन् सायं संध्यासमये······उपविष्टः तत् संनिधौ······मंत्रणाकक्षे···आकर्णयन्, विमनस्क एव, वार्ताः निवेद्यमानाः पुरतः स्वपितामहस्य देशविदेशप्रत्यागतैश्चरैः क्रमशः ।

'राजन्-'शुश्राव हि सः अकस्मात् सांधिवार्तिकं राजानं जयपालं स्वरेण मंद्रेण संबोधयन्तं–'(विनिर्दिश्य मंत्रणाकक्षे सद्यः प्रवेश्यमानं आताम्रवर्णं प्रवृद्धश्मश्रुजालं गान्धारमिव दृश्यमानं वणिजमिव कंचित् पुरुषं मार्जाराक्षम्) अयम्···अस्ति अस्माकमतीव विश्वसनीयः गुप्तचरः···प्रतर्दनः···'बिडाल' इति सुहृत्सु अस्य विख्यातः······गजनीं अस्माभिः निशम्य राजपरिवर्तनवार्तां समुपजातदयैः विशिष्य प्रेषितः ज्ञातुं तत्रत्यं वास्तविकं वृत्तान्तं······अतीत एव दिने प्रत्यागतः······उपस्थितः निवेदयितुं स्वामिचरणयोः तत्रत्यं सत्यं समाचारम्'···अनुमाय च राज्ञः······निशम्यापि तत् किंचिदेव समुपजातकौतूहलस्य······अनुमतिं······आदिशन्तं तं वार्ताहरं–'निवेदय, प्रतर्दन ! स्वामिचरणयोः यत् किमपि त्वया छद्मवेषधारिणा तत्रत्येषु विविधेषु सामाजिकेषु स्तरेषु संचरता समुपलब्धम् ।'······पृच्छन्तं च तं सकाकु–'अप्यस्ति नूतनः स्वामी तस्य यवनराज्यस्य तत्पूर्ववर्तिनः अपेक्षया शान्तिप्रियः'–?–इति ।

'स्वामिन् !' –शुश्राव च तमपसर्पं धर्घरस्वरमसरकृतोच्चारं निवेदयन्तम् ।

'यवनराज्यस्य पूर्ववर्ती स्वामी, दिवंगत: अमीर: सुबुक्तिगीन: स्व भावेनाऽऽक्रामक आसीत्—इत्यत्र न कस्यापि वैमत्यम् ।···तथापि-तुलित सह नूतनेन स्वामिना·····स: शान्तिप्रिय: एवासीत्, स्वमहत्वाकांक्षाण समर्थ: नियन्ता·····स: संदेह प्रबभूवाऽऽत्मन: वित्तेषणाया: लोकेषणायाश्च परिसीमने ।·····परन्तु अयं नूतन: स्वामी·····तस्याऽऽत्मज:·····महमूद स्वसमयस्य वास्तविक: प्रतिनिधि:·····सर्वथा विपरीतस्तस्मात् !'

'स्वमहत्वाकांक्षाणां दासस्य तस्य वित्तेषणा लोकेषणा च न जानीत कामपि सीमाम् ।·····सप्तविंशति वर्षीयेणानेन युवकेन·····पर्याप्तं स्फुटी· कृतं·····आत्मन:··न्यक्कृत्य योगायोग्यविचारम्·····अवधूय पापपुण्यविवे· कमभीष्टस्य स्वस्याधिगमने सामर्थ्यं·····दिवंगतस्य स्वजनकस्य अन्तिमा-मिच्छां न्यक्कृत्य·····स्वबंधुना इस्माईलेन सह राजसिंहासनार्थं रक्तपात-भीषणं युद्धं कुर्वता, छलेन तं बन्दीकुर्वता, तमाजीवनावसानं कारागारे निक्षिपता, गजनीसिंहासनञ्चाधिगच्छता ।'

'अतीव प्रिय: स: आबाल्यात् एव प्रजाजानानां तत्रत्यानाम् !····· ते हि तुरुष्का:·····स्वभावेनैवाऽऽक्रामका:·····आबाल्यादेव तमात्मनो वास्तविकं प्रतिनिधिं मन्यमाना:··न भेत्तु: तद्वैपरीत्यं··वीक्ष्य तस्य तद् निघृ‍णं·····कृत्यम्·····प्रत्युत-बहु मानयामासु: तत्' ।

'तज्जन्मसमकालीने तज्जनकस्य तस्मिन् विलक्षणे भाविसमुत्कर्ष-संसूचके स्वप्ने विश्वसतां, तत्प्रादुर्भावकाल एव-इह-भारतवर्षे योजनसहस्र-दूरवर्तिनि सिंधुतीरे विद्यमानस्य देवतायतनस्य कस्यचित् स्वतोभंगं अधि-कृत्य प्रचलिते लोकवृत्तान्ते श्रद्दधतां साधारणानां तत्रत्यानां जनानां आजन्मन: कौतुकविषयीभूत:·····स: महमूद:·····स्वयमंगीकृत्वा सफल-मूढ्वा च संचालनभारमसाधारणं विगतयो: स्वामिविरोधिनो: आक्रमणयो: शौर्यं बहुमानयतां तत्रत्यानां स्वयंशूराणां सामन्तानां··तथा प्रिय आसीत् संवृत्त:·····यथा ते सर्वेऽपि·····साक्षाद्राज्यप्रस्थापकम् अमीरं बहुमन्य-माना अपि·····तदिच्छां स्वोत्तराधिकारिविषये सुष्ठु जानन्तोऽपि ·····तमेव मन्यन्ते स्म योग्यतरं शासकं भाविनं तेषाम् ।·····अतएव तु-ते·····निर-पवादमवधीरयन्त: दिवंगतस्यामीरस्य व्यवस्थां·····समुद्भूते एव उत्तरा-धिकारिकलहे (—तेषु यवनेषु साधारणे ।—)·····ऐकमत्ये । तत्पक्षपातिनो

बभूवुः……न मनसि चक्रुश्च तस्य तद्भ्रातुः बन्दीकरणमसूक्तेम उपायेन !'

'अचिराधिगत–निरंकुश–प्रशासनसूत्रोऽपि……अनुभवहीनोऽपि……सदृश्यते……निष्पक्षपातिन्या दृशाऽवलोकितः……तर्पयन्निव तेषां निर्मर्यादां महत्त्वाकांक्षां, निःसीमां धनलालसां, निरतिशयाञ्च जिगीषाम्।……दृश्यते……साकारयन्निव तेषां, लोककथासु विख्यातानां पारसीकवीर-वरेण्यानां पारंपरिक–रोमाञ्चक–कथाभिः प्रभावितानां, अद्यावधिके मानवेतिहासेऽभूतपूर्वसदृशं स्वसाम्राज्यं स्थापयितुं समुत्सुकानां, आक्रम्यासकृत् भारतवर्षं (–'स्वर्णपक्षित्वेन तेषामतिपरिचितं–) तत् स्वर्णोच्चयं महान्तं लुण्ठितुं व्याकुलानां, भारतीयान् (–तद्दृष्टौ भीरून् अलसान् हीनान्–) बलादपहर्तुं स्वगृहेषु च दासीकर्तुमातुराणां……सर्वाण्यपिस्वप्नानि……स्वतृप्तिकराणि……परपीडकानि।'

'तेषां तैः लोकविलक्षणैः स्वप्नैः……स्यान्नाम आसुर्या कयाऽपि शक्त्यालोकक्षयकारिण्या समुद्भावितैः–……स्वयमपि भावितः……अहर्निशं प्रयतते कर्तुं तानि संस्काराणि !'

'अनिर्वर्णनीयया……प्रत्यक्षमनुभूयैव विश्वसनीयया……प्रशासनशक्त्या कयाऽपि संपन्नः, क्षुद्रस्य राज्यस्य शासकोऽपि असामान्यस्य 'साम्राज्यस्य सम्राट् इव साभिमानं सात्मविश्वासं (–विना प्रयत्नं-इत्यहो आश्चर्यम् !–) व्यवहरन्……सः……आचक्राम……प्रशासनसूत्रग्रहणानन्तरं कतिपयैरेव मासैः……अबू अली सूनजूर इति विख्यातं दुर्जेयत्वेनाभिमतं खुरासानदेशीयानां धर्मभ्रष्टानां उद्वर्त्तिनां जनानामेकमात्रं नेतारं, पराबभूव नामशेषीचकार च तमनायासमिव साहाय्येन पैतृकाया, एव……बलवत्तरतां स्वाभीष्टामनापादिताया एव……सेनायाः……स्वं प्रियतरं नेतारं लब्ध्वैव प्रवृद्धसामर्थ्यायाः।

'प्रामाणिकः दासः अल्लाहतालस्य-इति ख्यातिं तया सफलतया प्रापितोऽपि किंचिदपि अनाध्मातस्तया……सः……स्वप्रजाजनानां वृद्धिंगतं समुत्साहं कौशल्येन बलवत्तसेनासंनाहने व्यापारयामास……सार्वजनीमामुद्घोषणां संकल्पितस्य वार्षिकभारतविजयस्य कृत्वा एकस्यां महत्यां जनसभायां……एकत्रागतां चत्वरेऽतिविशाले राजप्रासादपुरोवर्तिनि अभिनन्दितुं तमवसरे दानस्योपाधेः–'अमीनुल्मिल्लतयमीनुद्दौला–' इत्याकारकस्य……

यवनधर्मगुरुणा……'खलीफा अल् कादीरविल्लाह्'—इति नाम्ना प्रसिद्धेन… प्रसन्नेन !'

'अवाप च……स्वचेष्टायाऽपूर्वसदृशं साफल्यम् ।'

'एकप्राणा इवाभिन्नवृत्तयस्तस्य प्रजाजना हि……सधना निर्धनाश्च (—प्रायः सर्वे एव निर्धनाः !—)……सबला निर्बलाश्च…सैनिकास्तदन्याश्च (—संख्या तेषामासीत् अतीव क्षुद्रा नूनम् !—)……एकध्येयाः……एकलक्ष्याः……एकमनोरथाः……निरपवादं प्रयच्छन्तस्तस्मै स्वं सहयोगं…… अचिरादेव……मन्दे……अधिगमिष्यन्ति सामर्थ्यं तदपेक्षानुरूपम् !'

'स्वभावेनैवाऽऽक्रामकस्य, निसर्गत एव कलहप्रियस्य, तत्रापि दारिद्र्येण निरतिशयेन खिद्यमानस्य, तत्रापि दूरीकर्तुं तत् पशुचित्तेनापि सुकरतरेण यथेप्सितफलप्रदेन स्वस्वभावानुकूलतरेण युद्धोपायेन समुत्सुकस्य, तत्रापि चिराल्लब्ध्वा नेतारं स्वमनोरथानुकूलतरं समुत्साहेन भरितस्य, तस्य राज्यस्य……सीमावर्ति स्वामिचरणराज्यं सहजाऽमित्रं……तत्रापि परमैश्वर्यशालि इति तल्लोभास्पदं……द्विवारमास्वादितरुधिरं……समृद्धतरनिखिलभारतवर्षदेहलीवर्ति……इति निःसंशयमुल्लंघनीयं……अचिरादेवाऽऽक्रमणलक्ष्यो भवेत् समस्तमेव……प्रवृद्धसामर्थ्यस्य, स्व-धर्मप्रसारमिषेण परधनलुलण्ठिषोः, परपूजास्थलानि दूषयितुकामस्य, पराराध्य-मूर्तिभञ्जने प्रवृत्तस्य……इति वदति ममान्तरात्मा ।'

'राज्यमेतत् सीमावर्ति आकारेण क्षुद्रं…परंतु……संकल्पबलेनमहत् ।'

'स्वामिचरणयोः राज्यं प्राचीरतरं……प्रबलतरमपेक्षया तस्य……निःसंशयं समर्थं दण्डयितुं न केवलं तत्……मर्यादायाः उल्लंघनाय प्रवृत्तमात्रम्,……तथापि…तथापि (—स्वामिचरणभक्तिः मुखरयति एवं वक्तुमिमं दासम् !—)……विषजन्तुः यवीयानपि……क्षुद्र इति नावधीरणरिति विचारयन् अयं अल्पमतिः……दिनमेकमपि तस्मिन् राज्येऽवस्थातुमपारयन् अधिकं……ततः प्रचलितः……सततं प्रवसन्……अद्य समुपस्थितोऽस्ति स्वामिसेवायामभयप्रदायाम् ।'

……'विषजन्तुः यवीयानपि……क्षद्र इति न खलु अवधीरणीयः—' प्रतिध्वनन् इव तस्य स्पशस्योक्तिं गृहीत्वा तदाज्ञां कक्षात् विनिर्गतस्य, 'सनिःश्वासं प्रारभत राजा जयपालः स्वं मतं प्रकटीकर्तुं……अकस्मात्

सहस्रगुणितवार्धकभार इव श्रांततरोऽपि प्रोत्साहयन् स्वात्मानं समुद्धर्तुं अतलादवसादसागरात् बोढुं भारं दुर्वहं प्राक्तनप्रदत्तं यवनाऽऽक्रमण-विरोधस्य, नेतुं च स्वप्रजाजनान् स्वकर्तव्यपथेन विषमेणापि ।'

'अयं हि दहनः······आविर्भूतः प्राक्तनवशात् दिधक्षयाऽऽसुर्या······ सत्येव समयेऽनिर्वापितः निःशेषं······पश्यतामेवास्माकं मुखं व्यादाय······ दावानलस्वरूपं प्रचण्डं प्राप्तः······न केवलं धक्ष्यति अस्माकमेतत् रमणीयं उपवनं······अपि तु भस्मसात्करिष्यति अन्यान्यपि उपवनानि······नाम-शेषी कुर्वन् अस्माकं कुटजानि, कुटजान्तर्वर्ति-पूजास्थानानि, पूजास्थानान्त-र्वर्ति-देवताविग्रहवृन्दानि······लिखन् च नामास्माकं इतिहासपृष्ठेषु कज्जल-कृष्णैः अक्षरैः' ।

'निर्वापणमस्य······अस्माकं विशिष्य कर्तव्यम्······भारतवर्षस्य रक्षा-पंक्ती द्वे ।······उत्तरस्यां दिशि 'पृथिव्या मानदण्ड इव स्थितः देवतात्मा नगाधिराजः······पूर्वोत्तरस्यां दिशि च-अस्माकं राज्यं······, तथैवाविचलं··· अनिर्भेद्यं ······अनुल्लंघनीयं······अनतिक्रमणीयम्' ।

'इतराणामपि भारतीयानां नरेशानां साहाय्यार्थमावहनमस्माकं······ किं नोचितम् ?–'सकौतुकमवलोकयन् स्वं पितरं······चिरात् खलु अवसाद-सागरात् बहिरागतं······पप्रच्छ युवराजः आनन्दपालः मन्द्रस्वरम्' ।

'न केवलमुचितं······अपि तु आवश्यकम् एव'–सोवेशं प्रत्याह राजा ! 'दुष्टमेवास्माभिः······स्वं बलमेवाधिकतरमवलंब्य तत्प्रतिरोधार्थं प्रयत-मानैः······स्वप्रयत्नस्य फलम् ।'

'अपि च एतत् कर्तव्यं न केवलानामस्माकमेव ।······अपि तु-सर्वेषाम् । प्रदीप्ते हि दहनेन गृहैकदेशे······तन्निर्वापणं······न केवलस्य प्रदीप्ते तस्मिन् भागे निवसतः कुटुम्बकस्य······अपि तु-तस्मिन् समस्ते गृहे निवसतां सर्वेषा-मेव कुटुम्बकानाम् ।······सर्वैः मिलित्वाऽनिर्वापितः स हि दहनः न केवलं तमेकं भागं दग्ध्वा विरमेत्······कृतकृत्यमात्मानं मन्यमानः, अपि तु······ धक्ष्यति समस्तमेव तत् आश्रयस्य स्थानं······सर्वेषामेव बहुमूल्यं वस्तुजात तदन्तर्गतम् !'

'अद्यैव निशीथे प्रेषयिष्यामि स्वामिनः अनुमत्या विशेषदूतान् सेवाय सर्वेषां भारतीयानां नरेशानां सह सविस्तरैरनुरोधपत्रैः'–'सद्यः प्रबोधित इव

सोत्साहं उवाच सांधिविग्रहिकः'।

'प्रेषयतु भवान्–' अनुमुमुदे राजा अकस्मात् स्मृत्वा च उदन्तं लोक कथासु विख्यातं सिन्धुराज्यनरेशस्य दहरस्य······तस्येव वृद्धस्य······तस्येव दुष्प्रतिरोध्येन तरुणेन यवनेन समाक्रान्तस्य······तस्येव वलं स्वं केवलम-पर्याप्तं मन्यमानस्य··तस्येवाकुलाकुलं नरेशान् भारतीयान् साहाय्यार्थमाहूय-मानस्य··सहसा खिन्नः···'अपि नाम स्यात् मत्प्रयत्नानामेतेषामपि तत्प्रयत्ना-नामिव परिणतिः–' इति दुःशंकया पीड्यमानं··व्यापारयामास··अजानन्तेव ······स्वे तावत्कालपर्यन्तं रत्नदीपशिखानिगडिते सहसा म्लाने लोचने दिशि प्रियतमस्य स्वपौत्रस्य धर्मपालस्यानतिदूर एव समुपविष्टस्य, सावधानेन चित्तेन विचारविनिमयं तमाकर्णयतः,······अवलोकयामास च तं······तमेवा-वलोकयन्तं लोचनाभ्यां······तयैव दुःशंकया ननु म्लानाभ्याम्।

'अनुभवेन प्राक्तनेन शिक्षिता बान्धवा अस्माकम् अवसरेऽस्मिन् निःसं-देहं करिष्यन्ति अस्मत्साहाय्यं··एकीभूय संकटकालेऽस्मिन्–' समाश्वासय-न्निव तं······समाश्वासयन्निव स्वात्मानं प्राह सः मंद्रेण स्वरेण।

'···अपि नाम करिष्यन्ति?'–संदिदेह तस्य पौत्रः··स्वयमपि व्यावर्तित-लोचनः स्मरन् मूकामपि स्पष्टां कःपुरुषभावनां पांचनदान् भारतीयान् ग्रीक-पार्थिय-कुषाण-हूणबहुलान् अधिकृत्याऽऽर्यावर्तवासिनां आर्यमन्यानां भारती-यानां मनसि विद्यमानां,······स्मरन् स्वराजवंश-कलिजयराजवंशयोर्मध्ये शर्वनृप-कान्यकुब्ज-नृपयोर्मध्ये विद्यमानां वैरिभावनां,······स्मरन् चालुक्य-नृपचोलनृपयोर्मध्ये वर्तमानां, संघर्षस्थितिं,···स्मरंश्च वंगनृप–महीपालयोः अनिश्चितां स्थितिम्।'

न तूवाच किंचिदपि······चिन्तयन्–'क इव लाभः समुन्मूलयतो मे आहार्यां तातस्य··सर्वां एतां वास्तविकपरिस्थितिं मदपेक्षयाऽपि स्पष्टतरं जानतः–' इति।

'न खलु अभीष्टफलप्रदा भवेयुस्ताः सेनाः तेषां··यदि ता भिन्नभिन्नने-तृका एव युध्येरन् रणांगणे।······तदर्थं तासामेकनेतृत्वमावश्यकम्······ अस्मन्नेतृकत्वम्–' सावेशमाह युवराजः······अनभिज्ञःपुत्रस्य स्वस्य विचार-धारायाः।

'आवश्यकं–'मन्द्रस्वरं प्रत्युवाच राजा······अनतिविश्वस्त इव।······

'परन्तु······परन्तु······न तथा सहजसाध्यम् ।······न कोऽपि भारतीयः राजा ······अनुकूलतमोऽपि अस्माकं······स्वीकुर्यात् अस्मन्नेतृकत्वं तत्सेनायाः ।··· स हि कल्पयेत् तथाविधां व्यवस्थामस्मत् सार्वभौमिकत्व-स्वीकारतुल्याम् । ······का कथा तर्हि अननुकूलानां······तटस्थानां वा राज्ञाम् ?'

'······परन्तु–' प्रारभत वक्तुं युवराजः ।

'प्रस्तावः आयुष्मतः समीचीनः······आवश्यकतमा तादृशी व्यवस्था ।··· परन्तु–न तावती सहजसाध्या–,एतावान् एव ममाभिप्रायः–'किंचिदातुर इवावरुन्धानः तस्य भाषणप्रवाहमाह तत्पिता '······तथापि मनसि निरंतरं कुर्वन् सामीचीन्यं तव प्रस्तावस्य······प्रयतिष्येऽहं भिन्ननेतृकाणामपि······ कथमपि······अनति दृढमपि···एकीभावमापादितानां सर्वासां सेनानां संचालनार्थं युद्धसमये······अन्योन्यसामर्थ्यपूरणेच्छया !'

'कथं खल्वेतत् अपि शक्यं भवेत् ?······शक्यीभूतमपि स्वाभीष्टफलप्रदानाय समर्थम् ?······अपि नाम-अनतिदृढमेकीभावमापादिता अपि सेनाः अस्मत् पक्षस्य शक्नुयुः कर्तुं प्रतिरोधं······एकप्रणायाः एकजीवायाः यवनसेनायाः······हिंस्रया परधनलालसयाऽऽक्रामन्त्याः ?-प्रेप्सया समाधानकारिणामुत्तराणां एतेषां प्रश्नानां······अवलोकयामास धर्मपालः वदनानि समुपस्थितानां,······न तु प्राप तानि तेभ्यः अधोमुखेभ्यः ।'

'अनुज्ञया स्वामिचरणयोः······अहमविलंबमेवाऽऽरप्स्ये दृढतरीकर्तुं अस्मत्सेनायास्तुरगसादिबलं···लम्भयितुं च तत् यवनबलसमं बलम्–' उत्साहेनाऽऽहार्येण प्रारभत वक्तुं प्रमुखतमः सेनापतिः ।

'आरंभतां भवान् अविलंबमेव !–' अन्वमोदत राजा ।······तद्बलसमबलेन तुरगसादिबलेन प्रवृद्धसामर्थ्या सेनाऽस्माकं······एकाकिन्यपि नूनं······ समर्था भवेत् पराजेतुमहितम् ।'

'तदर्थं······न केवलं अश्वानां तत्सादिनाञ्च संख्यावर्धनं······अपितु क्षिप्रतरसंचलनाकस्मिकतरसमाक्रमणादियुद्धकलाकौशलेषु तेषां प्रशिक्षणमपि, कल्पनाचतुरतरमावश्यकम्,' आह युवराजः······पुनरुज्जीवितोत्साहः लोपेन यक्षप्रश्नोत्तरविचारस्य, '···तथा प्रशिक्षितमेवास्माकं अश्वसादिबलं शक्नुयात् पराजेतुं द्वेषिणम् ।'

'–तथा प्रशिक्षितम्,······अनाकुलीकृतं चास्माकं गजबलेन–' सहसा

उवाच धर्मपालः.....असमर्थः रोद्धुमात्मानं कटुतरस्यापि वास्तविकस्य मतस्य प्रकटनात्.....'गजबलमस्माकं—विगतयोर्युद्धयोर्मध्ये साक्षात्कृतमेवास्माभिः सर्वैः—परंपरानुसारं प्राधान्येन समरप्रसंग विनियोजितं.....अपकारमेवास्माकमधिकतरं करोति.....उपकारस्यापक्षेया।.....गजबलम् उपयुक्तं..परन्तु..पञ्चनदसदृशेषु भारतीयेषु रणक्षेत्रेषु.....न तु.....हिमाच्छादितेषु गांधारेषु। तेषु तु शैत्यातिरेकात् स्वतोः विचलितुमपि अनुत्सुकं.....अस्माभिर्बलाद्व्यापारितं.....हिमस्पर्श-बधिरपादतलं चपलतरपरतुरगसादिसमाक्रमणाकुलाकुलं.....अरक्षितेषु उपांगेषु निरन्तरं क्रियमाणैः तद्भल्लदंशैर्व्यग्रमनस्कं.....तत्.....संभ्रान्तचित्तं...भयकान्दिशीकं प्रबलायमानं.....अपकारायैवास्माकमधिकतराय प्रभवत्.....अनुभूतमस्माभिः'।

'—उपकारायापि—' असहमान इव स्वबलदलाधिक्षेपमिमं सावेगमाह गज-बलप्रमुखः। 'तदेव तु पर्वतप्रचण्डं.....रक्तारक्तलोचनं.....शुण्डादण्डेन पुच्छेन च विद्युच्चपलेन सशस्त्रेण सर्वतः प्रहरत्.....कर्णकर्कशं चीत्कुर्वाणं.....प्रभवत् परबलं.....पलायनैकशरणं कर्तुम्।'

'—प्रारम्भे समरस्य,.....तस्यापि आद्यस्य—' प्रत्युवाच धर्मपालः, 'अविलम्बमेव तदनंतरं तत्परिचितेन.....ज्ञात्वा तद्दौर्बल्यस्थलानि तेष्वेव तदाक्रमता.....परेण.....तत्.....अपकारकारि एवास्माकं कृते.....अप्रियमपि सत्यमेतत् न प्रतिवक्तुं शक्नोति भवान्।'

अशक्नुवंश्च प्रतिवक्तुं सत्यं तत्.....तूष्णींभावमभजत गजबलाध्यक्षः।

'—एवं तर्हि—'उपसंहरन् विचारविनिमयमाह राजा, असमर्थ इव सोढुं विचारसंघर्षं तं मनसाऽऽदित एवानाश्वस्तेनाऽऽदित एव दुःशंकाकुलेन.....'स्वसेनायाःबलवत्तरीकरणं, तस्या अश्वदलस्य परिवर्द्धनं, गजदलस्य साक्षात् समरप्रसंगेषु गौणरूपेण संयोजनं, अभ्यर्थनञ्च सर्वेषां भारतीयानां नृपाणां साहाय्यस्य....विनिश्चितमस्माभिरावश्यकं प्रतिरोधाय संकटस्याऽऽगामिनः इति।'

'संगोपनञ्च मंत्रस्य.....अस्य'—आह धर्मपालः।

'संगोपनञ्च मंत्रस्य अस्य—' स्वीचकार सः लज्जयेवाऽऽरक्ततरवलितान् नः.....क्षणमेकं स्वपौत्रमुखनिगडितदृष्टिः समुदतिष्ठच्च रात्रिभोजनाय सह युवराजेन.....वदन्.....'दृढमहं विश्वसिमि—शक्नुयामह

पराजेतुम् आततायिनमिममागामिनि समरप्रसंगे,······न्यस्तुं च राज्यभार-मिमं चिरं वोढं······तरुणतरयोः समर्थतरयोः स्कंधयोः युवराजस्य···चिरा-देव तदनन्तरम् ।'

'अहमपि······मम पुत्रकस्य–' अन्वभाषत तस्य सेनापतिः······स इव वृद्धः······स इव श्रान्तः······स इवोत्सुकः निर्वर्तितुं राज्यसेवायाः ।

अन्वमोदन्त सर्वेऽपि समुपस्थिताः······उत्थिताः······बद्धाञ्जलयः मौनं संमतिलक्षणमाश्रिताः······अन्वमोदन्त । ···न तु दृढं तथा व्यश्वसन् । ······कदाचित् न सः सेनापतिः अपि······कदाचित् न तद् भाषमाणः स्वयं राजाऽपि ।

स्मृतिर्हि–अतीतयोरपि साक्षादनुभूयमानयोरिवारुंतुदयोः समर-प्रसंगयोः······ विश्वासं तेषां दृढं रुरोध······अंकुरणात् । ······आचक्राम च हृदयानि तेषां दुश्चिन्तया ।

घनतरया तु······तरुणस्य तस्य······धर्मपालस्य ।······तीव्रतरं हि स अनुबभूव मनोवैज्ञानिकं सत्यं यत् पक्षे तस्य······संख्यया साधनसंपदा बल-वत्तरेऽपि पक्षे तस्य······अभावेनैव चकासत······जिगीषा······दुर्दमनीया जिगीषा···उत्तेजयन्ती जिगीषुमहर्निशं···शक्तिः प्रमुखतया विपक्षस्य ।······ स्पष्टतरं च स जज्ञौ यत्–जिगीषा······जिगीषा एव केवला···अतिक्रामन्ती अन्याः सर्वा अपि शक्तीः······अभिनंदयति······अन्ते······वीरं······तत्-संपन्नं······विजयश्रिया ।

यथा यथा च सः तीक्ष्णमतिः विश्लेषणनिर्भयः व्यश्लेषयत् स्थितिं स्वपक्षस्य······अतोलयच्च तां स्थित्या सिन्धुराजस्य दहरस्य,······तथा तथा स अन्वभवत्–अवश इव–साम्यं······दुर्भाग्योपहतं साम्यं······मौलिकं तयोः ।

······'धर्म ! ···धर्म ! ···'–प्रयतमानस्यैव तस्य···भेत्तुं दुर्भेद्यं तच्चिन्ता-भ्रमभ्यस्य आप्रत्यूषात् राजकीयशस्त्रागारप्रांगणे नूतनाः प्रक्षेपविधाः कुन्तस्य सद्यः स्वयं कल्पिताः······कर्णयोरापतत् दूरतः संबोधनमातुरातुरं··· मध्याह्ने एकस्मिन् तीव्रातपे······मासानाधिकेऽतिक्रांते समये उपरिवर्णित-विचारविनिमयानन्तरम् । ······प्रेरयामास च तं···किंचित् कुपितमिव । ··· द्रष्टुं प्रश्रमुखय्या दृष्ट्याऽऽननं संबोधनानुपदमेव तत् संनिधौ आगतस्य भ्रातुः······सुखपालस्य ।

'धर्मं !'······उपदिशन्निव सः प्रत्यवदत्—'नास्ति अयमवसरः अभ्यासस्य नवीनानामपि कुन्तप्रक्षेपविधानाम् !······अयमवसरः प्रयोगस्याभ्यस्तपूर्वाणाम्···! तदपि साक्षात् युद्धस्थले !

'कुतः'—?—अप्राक्षीत् धर्मपालः स्थापयन् हस्तगतं कुन्तमधः, प्रोञ्छन् च घर्मबिन्दून् ललाटफलके आविर्भूतान् ।

'यतः—आवयोर्भ्राता त्रिलोचनपालः सद्यः प्रत्यागतः सह वार्तया एकयाऽतिमहत्वपूर्णया पुरुषपुरात्'—प्रत्यवदत् तस्य श्रान्तेनेव स्वरेण ।

'प्रत्यागतः ?······अतीत एव तु सप्ताहे—मन्ये, भौमे वासरे—सः तत्र प्रेषितः पितामहेन समादिश्य कर्तुं तन्नगरं स्वसंरक्षणे, समर्थतरं, स्थापयितुं तत्र स्वं मुख्यालयं निरीक्षितुं स्थित्वा तत्र गतागतानि विपक्षिणश्चारचक्षुर्भिः, प्रेषयितुं च वार्तां तदीयां महत्वपूर्णां तत्समीपे दूतमुखेन ? ······ अश्रद्दधान इवापृच्छत् धर्मपालः ।'

'समर्थतरं तत् कर्तुं······स्थापयितुं तत्र स्वं मुख्यालयं······निरीक्षितुं च स्थित्वा तत्र गतागतानि विपक्षिणः सः नाशकत् (—समयमेव पर्याप्तं सर्वमेतत् कर्तुं नालभत वराकः !) अशकत् परंतु अत्यधिकमहत्वपूर्णां वार्त्तामिकां प्रेषयितुं-तदपि स्वमुखेन तातसमीपे !' गंभीरेण स्वरेण प्रत्यवदत् सुखपालः······निभृतं धन्यंमन्यः उपलब्ध्याऽवसरस्यानुकूलस्य प्रस्थापयितुं स्वं श्रेष्ठत्वं श्रोतुरपेक्षया ।

'का खलु एतादृशी······अत्यधिकमहत्वपूर्णा······वार्त्ता स्यान्नाम् ?'—विस्मयं स्वं प्रकटयन् अस्फुटेन स्वरेणापृच्छत् तत्सोदरः ।

'—यत्—'अकथयत् सुखपालः······सानुकम्प इव, मन्द्रेण स्वरेण······ 'आततायी सः···महमूदः···स्वबलाध्मातः अहंमन्यः······प्रस्थितोऽस्ति राजधान्याः······सहबलेन स्वेन······प्रेर्यमाणः आचिक्रंसया दुर्दमनीयया राज्यस्यास्माकीनस्य···नंक्ष्यति मूर्खः प्रतापाग्नौ अस्माकमवसरेऽस्मिन् कृतवज्रसंकल्पानां······क्षुद्रः पतंग इव दीपशिखायाम्'—उपसंजहार च क्षणमेकं विरम्य······आपूरितः आत्मविश्वासेनापारेण ।

राजपुत्रे धर्मपाले तु—निशम्य तां नितान्तमनपेक्षितां वार्तां क्षणमेकं स्तिमिते······अभावेनैव व्यराजत तादृश आत्मविश्वासः······एकं परंतु आश्चर्यजनकं परिवर्तनं समपादयत् सा वार्ता हृदये तस्य······एकं समुपोद्-

बलकं परिवर्तनम् । क्षण एकस्मिन्नेव विनाश्य तस्यासामर्थ्यं संकटदुश्चिन्ता-मात्रजनितं·····आपूरयत् सा तत् सामर्थ्येन·····मूर्तस्य संकटस्य संमुखी-भूतस्य वीरस्य हृदये स्वत एवाऽऽविर्भूयमाणेन । ·····प्रेरयामास च तं······ तस्मिन् एव क्षणे व्यावर्तयितुं स्वपदक्षेपान् दिशि मंत्रणागृहस्य प्रासाद-शिखरवर्तिनः·····अनभिज्ञं स्वभ्रातुः सुखपालस्यानुगमनस्य ।

'सत्या एव सा वार्त्ता'—स्वरेण दृढेनाऽऽह राजा जयपालः·····ज्ञात्वा तस्य पृच्छामशब्दितामेव,·····'प्रस्थितः सः स्वराजधान्याः·····कृतनिश्चय इव योद्धुं सहास्माभिः एतदवस्थैरेव·····नूनं राजधान्यां तैस्तैः मिषैः संच-रतां स्वगुप्तचराणामन्यतमेन केनचित् सत्वरं संसूचितः अस्मत् संकल्पविषये··· धूर्तः·····न वाञ्छति प्रदातुमस्मभ्यं दिवसमेकतममपि अधिकतरं·····भीतः संभावनाया अपि एकीभूतभारतीय सामर्थ्यस्य !'

'दर्शयिष्यामः' आह सः निश्चयदृढतरेण स्वरेण, 'यद्—एकाकिनोऽपि वयं समर्थाः·····न केवलमात्मानं रक्षितुमाततायिनः·····अपितु दण्डयितुमपि तं प्राणदण्डेन' । 'तद्वयं·····अकृत्वैव प्रतीक्षामानन्दपालस्य·····चामुहानां परमाराणाञ्च साहाय्यमभ्यर्थयितुं राजस्थानं गतस्य·····अकृत्वैव प्रतीक्षां मंगलस्य प्रस्थानमंगलस्य·····श्व एव·····प्रातः·····प्रणम्य भगवन्तं सहस्र-किरणं सर्वमंगलकारिणं·····करिष्यामः प्रस्थानमितः सह स्वसेनया·····तव, वत्स·····मतानुसारं पुनर्गठितया·····कृतनिश्चयाः संमुखीभवितुंद्वेषणस्य····· यावच्छक्यं सीमाप्रदेश एव राज्यस्य !'

'बलमस्माकं·····दशसहस्राश्वसादि—पंचदशसहस्रपादातिक—त्रिशतद्विरद प्रबलं·····एकाक्यपि·····समर्थं·····पणीकृत्य प्राणान् युद्धमानं···पराभवितुं तं·····अपुनरुत्थानायाह सेनापतिः ।'

'समर्थं'—अन्वमोदत सः वृद्धः राजा·····अवलोक्य क्षणमात्रं नयनयोः पौत्रस्य तत्प्रियतमस्य···क्षमं···पणीकृत्य प्राणान् युध्यमानं·····(निःश्वस्य) संचाल्यमानं समरप्रसंगेऽनुभवसंपन्नेन·····अथ च·····तरुणतरमनसा····· नवनवसेनासंचालनरीतिकल्पनाचतुरबुद्धिना सेनाधिपेन !'

'तरुणतरमनसा·····नवनवसेनासंचालनरीतिकल्पनाचतुरबुद्धिना सेना-धिपेन ?'—पप्रच्छ मनः धर्मपालस्य·····निशम्य वार्धकस्वीकारं स्वपितामह-मुखात्·····अश्रुतपूर्वं·····क्षणमेकं स्तब्धस्य·····मूकस्य,·····साक्षादकरोच्च

पुनरेकवारं,···तरुणतरमनसं नवनवसेनासंचालनरीतिकल्पनाचतुरं सेनाधिप यवनबलस्य·····यवनराजं महमूदम् !'

'अन्यतमः अस्माकं भविष्यति तात! तव तरुणतरं मनः·····तव तरुणतरा नवनवसेनासंचालनरीतिकल्पनाचतुरा बुद्धिः !'–चक्रन्द हृदयं धर्मपालस्य सद्यःकृततारुण्यप्रवेशः स्व·····पितामहं स्वादर्शपुरुषमिवाहर्निशं बहुमन्यमानस्य ।

आक्रन्देन तेन तारुण्यमात्रसुलभेन (–को हि अन्यथाऽपरस्यापिपरस्य भवितुं शक्नोति मनः बुद्धिर्वा·····अत्यन्तमिच्छन्नपि ?–) प्रेर्यमाणश्च प्रारभत निरीक्षितुं सर्वां व्यवस्थां अपरेद्युः संकल्पितस्य प्रस्थानस्य····· व्ययीचकार च सर्वमपि अपराह्णं···संध्यासमयं·····निशाकालं च तस्मिन्नेव कार्ये ।

अथावलोक्य तेषां भारतवर्षीयाणां वज्रसंकल्पप्रतापं म्लानप्रताप इवारुणाचलादल्पोदिते भगवति तपने···निरीक्ष्य स्वपुत्राणां सहसा समुत्थितानां तत्संरक्षणेच्छया दृढ़या स्वात्माहुतिसंकल्पमपूर्वं ससमाधानं निःश्वसन्त्या भारतमातुः निःश्वास इव मंदं मंदं वहति प्रातःसमीरे···तद्रक्षणार्थं भगवन्तं भावविह्वलं प्रार्थयन्त्याः राज्यश्रियः गीतस्वरेष्विव समुद्गच्छत्सु राजप्रासादात् मधुरमधुरेषु मंगलवाद्यनिःस्वनेषु·····चचाल राजा लोहकवचावृतसर्वांगः गंभीरमुखमुद्रः गजराजे राजगजे लोहमणिनिर्मितपरिस्तोमाऽऽवृतसर्वांगे वीरोचितयामुद्रयाऽऽसीनः·····स्वीकुर्वन् मुहुर्मुहुः नमयित्वा स्वं मस्तकं प्रणामान् आशीर्वादान् जयवादान् प्रतिक्षणं समुद्गच्छतः अपारजनसंमर्दात् आरुह्यापि समुत्तुंगप्रासादशिखराणि विविधलघुतरराजपताकालंकृतानि पूरयित्वाऽपि सौधवातायनानि विस्तृतानि आप्लावयित्वाऽपि राजमार्गमतिविस्तृतं दीर्घंदीर्घतरं जलसिक्तमुभयतोबद्धं पंक्तिभिः सुरक्षासैनिकैः दण्डहस्तैः संरक्ष्यमाणनिर्गमनमध्यभागम् अमातात्,उभयपार्श्ववर्तिनीषु उपरथ्यासु नातिविस्तृतासु कृतसंमर्दात्,·····अंगीकुर्वन् अस्फुटेन स्मितेनासकृन्निपतन्तीं कुसुमवर्षां सौधशिखरेभ्यः रमणीजनकृतसंमर्देभ्यः··· अनुगम्यमानश्च किंचिन्न्यूनवृत्तान्तान् गंधगजान् स्वान् स्वान् समारुह्य अनुचलद्भिः वीरवेषरमणीयदर्शनैः तारुण्यसुलभसमुत्साहाऽऽपूरितैः प्रसन्नवदनैः पौत्रैः, स्वस्वाधिकारसंसचकविशिष्टवेषधारिभिः विविधराजपदक-

विभूषितवक्ष: कपाटैः शस्त्रोदग्रैः वीरोचितस्वाभिमानाऽऽध्मातैः अधिरुह्य तुरंगमान यथोचितं चलद्भिः सेनाधिकारिभिः उच्चावचैः, स्वस्वबलस्य प्रतिनिधित्वं कुर्वाणैः द्विरदतुरगपादातादिदलैः······सर्वैरपि सानुशासनं सोत्साहं चलद्भिः······सर्वैरपि भीषणभवितव्यताऽनभिज्ञैः······सर्वैरपि दुर्दैवाभिशप्तैः ।

······चचाल राजा······प्रयतमानः······यथाशक्ति प्रयतमानः···विस्मतुं प्रस्थानात् पूर्वं राजकुलदेवताऽऽयतने राजप्रासादान्तर्वर्तिनि प्रणत्यवसरे कुलदेवतायाः सकरुणमसकृत् प्रार्थितस्य प्रसादचिह्नस्य शुभभाविसंसूचकस्या-लाभं······ततः पूर्वं ब्राह्मे मुहूर्ते क्षणमात्रं विश्रमितुं राजशयने निपतितस्य श्रमाधिक्यात् तथाकर्तुमसमर्थस्य क्षणमात्रं तन्द्रितस्य तद्दुःस्वप्नदर्शनं··· ततोऽपि पूर्वं कथमपि राजप्रासादारामे भित्तिपंक्त्या सर्वतः संरक्षिते प्राप्त-प्रवेशायाः सारमेय्याः कस्याश्चित् तस्यैव शयनकक्षस्याधस्तात् आगत्य सकरुणं विलपन्त्यास्तद्रुदनं च ।

विसस्मार तु तत् सकलं······बहिरागत्य राजधानीमहाद्वारात् सशस्त्रैः प्रहरिभिः महाकायैः अहोरात्रं संरक्ष्यमाणात् तन्निष्क्रमणार्थमपावृतमहा-कपाटात्······अनभिज्ञः भाविनस्तत्पुनःप्रवेशप्रकारस्य तत्प्राक्तनलिखितस्य ······निकटवर्तिनः सेनामहाकटकादागत्य बहिस्तदागमनमेव सोत्साहं अथ च सानुशासनं प्रतिपालयद्भिः अवलोक्य तं बहिरागतमुन्नमय्योन्नमय्य स्वानि स्वानि शस्त्राणि जयं तस्य एकस्वरेणोद्घोषयद्भिः समस्तस्य बलस्यांगैः पूर्णतया संनद्धैः (—विजय ? यात्रार्थं—?)अभिवन्दितः, स्वीकृत्य तदभिवादनमवतीर्य गजराजात् स्वं प्रियं प्रजविनम् अश्वंसमारूढः······ अनुसृत्य तं स्वं स्वं अश्वमारूढैः पौत्रैः सेनाधिकारिभिः सैनिकैश्च सहितः ······क्षणमात्रं निक्षिप्य दृष्टिं तं विजयं कांक्षन्त्याः प्राचीनाया अक्षुण्णगौर-वायाः स्वराजधान्या दिशि······दृढमुद्रितौष्ठपुटः······कठोरतरलोचनः······ प्रारभत······यातुं क्रमशः परिवर्द्धमानेन वेगेन पूर्वोत्तरदिशि दण्डयितुमा-क्रामकं ।

विसस्मार सकलमेवान्यत् ।

प्रबलप्रभावा हि दिदण्डयिषा······साऽपि न्याय्या······धर्म्या ।

गच्छन् चाहोरात्रमाविष्ट एव तया दुर्दमनीयया, स्वीकुर्वन् मध्ये-मार्गं

निपतितानां नगराणां ग्रामाणां ग्रामटिकानां प्रजाजनानां, निशम्य तद्-यात्रावार्तां तत्स्वागतं कर्तुमादित एव संनद्धानामभिवन्दनाः, विश्राम्यत् यामद्वयमेव प्रतिदिनं समवलोक्य सुलभजलं हैमवातप्रवाहात् सुरक्षितं स्थानं मार्गपतितं, गच्छन् चान्यथा संततमविगणय्य श्रमखेदं······प्राप सः कतिपयैरेव दिवसैः सीमां तद्दिक्वर्तिनीं स्वराज्यस्य······निर्मनुष्यां शून्यशून्यां निर्वृक्षां सुलभपराक्रमणामिति कृषीवलैरपि सदा परिवर्जिताम्, अतिचक्राम च ताम् । सफलंमन्यश्च स्वे उद्देश्य ऐच्छत्······दृष्ट्वाऽस्तगमनप्रवृत्तं निरातपं तपनं······आक्रामकस्य प्रत्याक्रमणमेव वरमिति मन्यमानः ।

परन्तु-नाकरोत् तथा सहसा······सुष्ठुजानन् तत्रत्यां भौगोलिकस्थितिम्, कतिपयक्रोशानन्तरमेव हि अग्रे इयाय स मार्गः······निष्प्रशासकः······भीमकायैः घनीभवति तमसि वेगेन अदृश्यतां प्राप्नुवद्भिः पाषाणखण्डैः हिमाच्छन्नैराकुलाकुलं भूप्रदेशं विभजन् अतय्योः गगनस्पर्शिनोः मध्ये महता प्रयत्नेन समाविष्टाया इवातिसंकीर्णायाः दर्याः······प्रवासिभिः एकाकिभिः दिनेऽपि स्पष्टातपे परिहृतायाः······मध्यात् । सम्भावयंश्च तस्यां प्रविष्टे······समाविष्टे एव स्वसैन्येन मार्गाक्रमण-व्यापृतचित्तेन सह······सहसाऽऽक्रमणं तावन्तं कालं तेषामासन्नवर्तिनः असंख्यान् भीमकायान् पाषाणखण्डान् समाश्रित्य कदाचिन्निलीनायाः यवनसेनायाः······संनियम्य स्वसेनां······समादिश्य तां विश्रामितुं अकृत्यैव निवेशं प्रतीक्षितुं च तस्याग्रिममादेशं······अकरोत् विचारविनिमयं सत्वरमाहूतैः स्वपौत्रैः सेना प्रमुखैश्च सह ।

आदृत्य तन्मतं (तद्वैयक्तिकमतसदृशं) योद्धुमग्रिमं युद्धं यवनराज्याभ्यन्तरे समुत्सुकं······अनादृत्य मतमेकाकिनः (–अन्ये तु राजपुत्राः तूष्णीं भावमेव तस्मिन् समयेऽभजन् किंकर्तव्यताविमूढाः–) धर्मपालस्य तदविपरीतं, प्रवृत्तप्रायश्चलितुमग्रे,······सहसाऽपश्यत् तमसि,······तावता कालेन एकछत्रं प्रशासति······आकृतिमेकामस्पष्टप्रायां धवलधूसरां कांचित्······शनैः शनैः समीपे तस्य समुपसर्पन्तीं······प्रयतमानामिव मज्जितुं भूतले हिमपटलाच्छन्ने, स्वभावेन कल्पनानां अद्भुता-नामवशंपदोऽपि······प्रायः यथार्थदर्श्यपि स राजा–(अहो प्रभावः वातावरणस्य !–) तां खल्वादौ आधिदैविकीमेवामन्यत······फलोन्मुखेन तदननुकूलेन प्राक्तनेन जनितां,······समीपतरमागतां पाशवीं (–प्रदेशो हि सः प्रसिद्ध आसीत् आसमन्तिकलोक-

प्रवाहेषु विचित्रतमानां क्वाऽपि अन्यत्रानुपलभ्यानां पशूनां यथेच्छभ्रमण-स्थलीत्वेन ! ),·····समीपतममागतां च मानवीं·····अन्ते च तद्विश्वस-नीयतमगुप्तचरसम्बन्धिनीम् !

यदा तु तत्पुरतः आगतायाः दीर्घदीर्घं श्वसन्त्याः श्रान्तायास्तस्या अलभत सूचनामतिमंद्रस्वरां यत्-शृगालचतुरो यवनराजः·····जानन्निव तद्विचारं भाविनं·····सत्यमेवासीत् निलीनः तस्मिन् प्रदेशे इतस्ततो-विकीर्णपाषाणखण्डदुर्लक्ष्यसैनिकदलसहितः·····समुत्सुकः अवरोद्धुं तम् अकस्मात्·····प्रविष्टमन्तः तस्याः विदीर्णभूरेखाया इवातिसंकीर्णार्याः दर्याः·····स्वसैनिकदलैः उभयतः, चूर्णीकर्तुं च तं ससैन्यं·····श्वासनिरो-धेनेव व्याकुलं, कथमपि बहिर्निर्गन्तुं पणीकृत्य प्राणान् प्रयतमानं, अव-रुद्धोभयपार्श्वतया निरुद्धमार्गमुखतया कर्तुं तथाऽक्षमं, पारस्परिकेण संघर्षेणैव सूचिभेद्येऽन्धतमसि तीव्रतरतामुपगतेन विदीर्यमाणं·····अविर-तया सान्द्रया पाषाणखण्डवर्षयाऽतटद्वयशिखरवर्तिन्या निराकुलया स्वसेनया-ऽवशिष्टयाऽनवरतं क्रियमाणया·····तदा सः·····चकितः·····स्तब्धः·····तां आधिदैविकीम् एवामन्यत·····आम् ! आधिदैविकी·····परंतु चिरात् खलु यदनुकूलीभूतेन प्राक्तनेन संप्रेषिताम् !

अभिनंद्य च धर्मपालं स्वपार्श्ववर्तिनं सकौतुकेन मूकेनापि वाचालेन दृष्टिपातेनैकेन न केवलं तत्याज स्वां पूर्वं संकल्पम्·····अपि तु-निश्चिकाया-पसर्तुं तस्या अन्तकस्मितरेखायाः सामीप्यात् अविलम्बमेव·····निभृतमेव ·····अदत्त्वैवावसरं पराय धूर्तवराय ज्ञातुं ततस्तस्य अपसर्पणमाक्रमितुं च तमपसर्पणव्यग्रमेव,·····शशाक च कर्तुं तथा·····लब्ध्वा दरीमुखात् प्रचण्ड-वेगेन तदभिमुखं प्रवहतः प्रभंजनस्य घोषस्याऽऽवरणं भाग्यवशात्तदा उप-लभ्यम् ।

घटनयानयापरिवर्द्धितमनोबलश्च·····अपससार·····अन्येद्युरपि, प्रवि-वेश स्वं प्रदेशं करतलगताऽऽमलकवत् परिचितं·····प्रारभत च-प्रतीक्षितुं, ·····आश्वस्तचित्तोऽपि सावधानः·····सह सेनया विदित्वा कर्णोपकर्णिकया तां घटनां सर्वथाऽप्रत्याशितां भाग्यमनुकूलं मन्यमानया,·····आगमनं स्वसेनादलानां, राज्यस्य स्वस्य दूरतरेषु दाक्षिणात्येषु भागेषु विद्यमानानां, आगन्तुं समादिष्टानामपि तावत्कालपर्यन्तमनागतानां, परंतु कतिपयदिव-

साभ्यन्तर एवापेक्षिमानाम् ।

अपरेद्युरेवागतानां, आदित एव सोत्साहानां, तत्रापि विदित्वा तां घटनां······काल्पनिकावांतराद्भुताविशेषमिश्रणरुचिरतरां······उत्साहेनाधिकतरेणाऽऽपूरितानां तेषां (–केवलं तेषां······अपितु-अन्यैः निकटवर्तिभिः आदृत्य तदभ्यर्थनां प्रेषितानां सेनादलानामपि धानुष्कबहुलानां–)साहाय्यं ······अधिकतरप्रवृद्धमनोबलश्चाऽऽरभत विचारयितुमग्रिमं पदक्षेपम् ।······ न तु शशाक निश्चेतुं किमपि,······अनभिज्ञः यवनराजस्याग्रिमपदक्षेपस्य ······सर्वतः परिभ्रमच्चारचक्षुरपि असमर्थः ज्ञातुमेव तस्यावस्थितिम् !

निश्चिकाय चान्ते कर्तुं प्रतीक्षामग्रेऽपि······विश्वसन् न केवले ज्ञाने तदवस्थितेः······अपितु-स्वसामर्थ्यपरिवर्द्धनेऽपि नवीनतमसैन्यदलागमनैः······ तावता कालेन ।

परंतु (–अहो विडम्बना विधेः परवञ्चनाऽऽहितमतेः !–) स तस्य कृतान्त दृष्टस्य विश्वासः पर्यणमत सप्ताहाभ्यन्तरे एव······अनाश्वासे······ प्रतिदिनमुग्रतरीभवत्यनाश्वासे क्रमशः ।

प्रवाहो हि यातायातस्य······ओघः हि परस्परसंपर्कस्य······अनन्तहैममरुस्थलमध्यवर्तिनस्तत्सैन्यनिवेशस्य पार्ष्णिवर्तिनस्तद्राज्यप्रदेशस्य च विस्तीर्णस्य मध्ये तावत्कालपर्यन्तमहोरात्रं निर्बाधं प्रवहन्······समाचाराणां सैनिकानां नागरिकाणां वा, सेनादलानां नूतनानां हिमबाधितानां वा, भोजनाद्यत्यावश्यकवस्तुजातानां वा विनिमयार्थमत्याश्यकः······अकस्मात्··· विनैव लेशमात्रामपि पूर्वसूचनां······सहसा व्यरभत वहनात्······त्रोटित इव कयाऽपि आधिभौतिक्या विपत्त्यातिप्रचण्डया भूभागविहारमया ।

आदौ न तं विराममतिगंभीरसंकटतया विभावयन्ती तत्सेना······अचिरादेव बभूव······अस्वस्था······तत उन्मनस्का······ततः क्षुब्धा······अन्ते च व्याकुला······अवलोकयन्ती स्वरवाद्यसामग्रीसंचयं प्रतिदिनं······प्रतिप्रहरं··· संक्षीयमाणम्,······अनुभवन्ती चाभावं आच्छादनप्रच्छादनाद्यत्यावश्यक सामग्रीणां वेगेन उग्रतरीभवन्तं,······आतुरीभवन्ती ज्ञातुं कुशलवार्त्तां स्वसंबंधिनां क्रोशशतैरन्तरितानां,–जगदन्तरवासिनामिव भासमानां तस्मिन् दिगन्तप्रसृते निरुद्भिज्जे निर्मनुष्ये निर्जन्तुके हैमे मरुस्थले निष्क्रिये निस्पंदे ।

स्वयं तथैव (–वस्तुतः तत आदितं एव-संवेदनक्षमतरा हि अनुभूतिशक्तिः नेतृणां नेयापेक्षया–) अस्वस्थचित्तोऽपि······तथैवोन्मनस्कोऽपि······

तथैव क्षुब्धोऽपि······तथैव व्याकुलोऽपि······सः वृद्ध. राजा······कृतस्वाकार-गूहन······स्वस्थचित्त इव······शान्तमनस्क इव······निराकुल इव······प्रकटत आत्मानं दर्शयामास······'मय्येव नेतरि अन्यथा व्यवहरति कमिवावलम्बेत इयं मम प्रचण्डा सेना······आधारस्तम्भत्वेन······' इति मनसि कुर्वाणः ।

परन्तु-प्रेषयामास निभृतं प्रतिनिशं दलानि चतुराणि······प्रत्युत्पन्नमतीनि······सर्वासु दिक्षु······पार्ष्णिभागे ज्ञातुं कारणं वास्तविकं तस्य यातायाताप्रवाहविरामस्याऽऽत्यंतिकस्य निराघातं घालयतः तत्-सैन्यं प्रचण्डम् ।

यदा तु अधीरचित्तः निष्क्रियताव्याकुलः अवलोकयामास तान्यपि···गूढया कयाऽपि अमानुष्या शकया—परिवृत्य तत्सेनासंनिवेशं क्रोशद्वयविस्तीर्णं निषण्णया स्वरेखितलक्ष्मणरेखोल्लंघिनः सर्वानपि धसन्त्या निभृतं धस्तानीव······अप्रत्यागच्छन्ति रहस्यनिवेदनाय······तदाऽभवत् सत्यमेव किंकर्तव्यताविमूढः ।

नैकदापि परंतु अन्वमोदत राजपुत्रस्य धर्मपालस्य सचिन्तस्य प्रस्तावं स्वयंगमनस्य······स्वयंगवेषणस्य······स्वयंप्रत्यागमनस्य !

एवं व्यतीते पक्षे एकस्मिन् युगकल्पे···सेनायां तस्यां एवं व्याकुलाकुलायामुत्प्रेक्ष्योत्प्रेक्ष्य क्षुधामरणं···तृष्णामरणं (—पेयं जलं हि तत्र दुर्लभमेवासीत् तस्मिन् हैमे मरुस्थले !—) कापुरुषोचितं······प्रतिक्षणं म्रियमाणायां निर्विरोधं (—कथंकारं हि विरोधः संभवनीय आसीत् ?—), चिन्तातन्द्रायामपारायां निमज्जति च स्वपटवासाभ्यन्तरे प्रवृद्धश्मश्रुजाले निस्तेजस्के तन्नायके जयपाले (—जयपरित्यक्ते !—)······अकस्मात् उद्भवन् आसमन्तात् तेषां सर्वेषां······एकस्मिन् हिमतलप्रतिफलनेत्रदीपकचन्द्रातपभासुरे निशीथे······असंख्येया धवलकार्पासिकाऽऽच्छादनाऽऽच्छादितसर्वांगाः, हिमनिर्मिता इव भासमाना, मानवाः समुद्यतखड्गाः समुद्धृतभल्लाः छुरिकाहस्ताः, आरभन्त च कुण्डलीकृत्य तान् सर्वान् विस्तीर्णभूभागप्रसृतानपि उपसर्प्तुं तान्, निःशब्दं प्रविश्य तत्तत्सैनिक पटवासाऽऽभ्यन्तरे हन्तुं च तान्!

दूरोत्सृष्टशस्त्राः क्षुत्पिपासाव्याकुलाः मृता इव स्वस्वशय्यायां पतितास्तंद्राजडस्ते राज्ञः जयपालस्य सैनिकास्तु यदाऽपश्यन्—कथमपि पटवासाभ्यन्तरेषु प्रविष्टेषु चंद्रकिरणेषु······तान् धवलवेषान् आच्छन्नप्रायवदनान्

स्वसमीपे निःशब्दमागतान् निःशब्दं समुद्यत शस्त्रान् निःशब्दं तद्व्यापादन-प्रवृत्तान्......तदा तंद्राजडमतय आदौ तावदमन्यन्त तान् सर्वान् क्षुद्व्या-कुलस्वमतिमात्रनिर्मितान् काल्पनिकानेवामानुषान् !......दूरादन्तिकाच्च पटवासात् अन्यस्मात् श्रुतिपथे समापतितैः वेदनाविह्वलैः स्वबान्धवानां तुल्यवृत्तान्तानामकस्मादाहताहतानां क्षणिकैः हाहाकारैः किंचिद्विलीनतंद्राः ......क्षणमात्रानन्तरं......किंचित् सावधानाः......भयविह्वला अमन्यन्त तान् सर्वान् तद्व्यापादनोद्यतया पैशाचिकशक्त्या कयाचित् संप्रेषितान् अति-मानुषानेवमनुष्यान् !......अकस्मादपसार्येव सर्वान् हाहकारान् कर्णयोरा-पतितयाऽतिपरिचितया राजपुत्रस्य धर्मपालस्य......'यवनाः!......यवनाः !' —इत्युद्घोषणया हठादविनाशितबुद्धिजाड्या विदितयाथार्थ्याः......क्षण-मात्रानन्तरं इयतावेगेन......इयतावेगेन......चक्रुः प्रतिरोधं......प्रज्वलित-प्रतिहिंसाग्निदंदह्यमानचित्ताः......यत्......आक्रामका यवनास्ते......क्षण-मात्रंस्तब्धः......अमन्यन्तात्मानं विनष्टविजयाशम् ।

'यः पलायते सजीवति'—इति नीतिमेव ते नूनमन्वसरिष्यन्......यदि हि अकस्मात् कर्णपथे आपतितास्तेषामतिपरिचिता 'दीन !......दीन !' इत्युद्-घोषणाः यवनराजस्य तेषां मनोबलं बलत्तरं नाकरिष्यन् !

कतिपयान् क्षणान्......तस्मिन् लोकविलक्षणे युद्धक्षेत्रे......तस्मिन् अनन्यसदृशे समरांगणे......तस्मिन् कतिपयक्षणपूर्वमेव चंद्रिकायां दिगन्त-वर्षिण्यां धवलधवलायामर्द्धमृत इव निश्चेष्टं पतिते सेनासंनिवेशे......? जयश्रीः......वराकी......बभ्राम एव मध्ये उभयोः पक्षयोः......विजयमालास-नाथकम्पमानबाहुलतिका......भ्रान्तेव......उद्भ्रान्तेव......किंकर्तव्यता-विमूढा !

'कं नु साऽवरिष्यत् पक्षं......यदि अकस्मात् समुद्भूतः......सेनासंनिवेशैकदेशे आबद्धानां, तदारोहकवत् कतिपयक्षणपूर्वमेव निश्चेष्टं निपतितानां, तदा-रोहकवत् अकस्माज्जागरितानां, तदारोहकवत् आहन्यमानानां, आत्मरक्षणे-च्छया समुन्मूलयित्वा स्वानि स्वानि आलानानि पलायमानानां विभ्रान्तानां क्षुब्धानां कर्कशं चीत्कुर्वतां द्विरदानां तुरगाणां च प्रद्रावः पक्षं यवनानां नाचग्रहीष्यत्—' इत्येतत् कठिनं......अतिकठिनं......वक्तुम् !

अनुगृहीते तु तस्मिन्......इतरः पक्षः......आदित एव हतबलः......

हृतबलः साकल्येन·····इयाय विनाशमात्यंतिकं कतिपयेष्वेव क्षणेषु······ प्रयतमानस्यैव राजपुत्रस्य धर्मपालस्य······'मायाभिः पुरुरूपस्येव' सेनासंनिवेशे स्वे तत्र तत्र विद्युद्वेगेन परिभ्रमित्वा सैनिकान् स्वान् प्रोत्साहयतः··· सह स्वपितामहेन·····सह स्वभ्रातृगणेन ।

आरभत च सः······कतिपयेष्वेव क्षणेषु ····स्वपितामह इव·····स्व भ्रातृगण इव·····हठान्निगृहीतः·····बलान्निःशस्त्रीकृतः·····हताशः··द्रष्टुं तदेव दुःस्वप्नं द्विवारं दृष्टचरं·····अनेकवारं दृष्टचरमिव स्मृतौ उट्टंकितम्·····आरभत अनुभवितुं यथापूर्वं·····तदेव·····नहि नहि अपशब्दप्रयोगदुःसहतरं शरणगमनं,·····तदेव च विजयिनः·····विशालतरपटसभागृहमध्ये उन्नततरसिंहासीनस्य·····गर्वोद्धततरस्य·····गूढ़तरस्मितप्रफुल्लव्रणांकिताननस्य·······प्रौढ़तरावस्थस्य·······पराक्रामकतरभासमानव्यक्तिवैष्टि्यस्योभयपार्श्वविलसत् सचिवगणस्य ····राजोचितवीरवरवेषधरस्य·· यवनराजस्य 'यमीन्–उद्–दौलह् अमीन उद्मिल्लह् सुलतान् मह्मूद जिन्दाबाद !·····हाकिमे-आला-ए-खुरासान् मह्मूद जिन्दाबाद !– हाकिमे-आला-ए-हिन्दुस्तान मह्मूद जिंदाबाद !' इति जयघोषणाः सभागृहाद-वहिः कृतसंमर्दैः असंख्यैर्विजयोन्मत्तैः यवनसैनिकैः निरंतरं क्रियमाणाः प्रसन्नवदनमाकर्णयतोऽपि तावतीभिः पदवीभिरसंतुष्टस्येव···अधिकतरास्ताः कांक्षत इव भासमानस्य·····अधिकतरं विजयं·····अधिकतरमैश्वर्यं····· अधिकतरमाधिपत्यं कामयमानस्येव भासमानस्य·····नियतिलिखितेषु तेषु विश्वसत इव·····प्रचण्डस्वात्मविश्वासस्याविचलितस्यानाध्मातस्य····· मह्मूदस्य पुरस्तात् समुपस्थानम् ।

अयथापूर्वं तु ततः परम् ।

नहि तत् संमुखीनः सः द्वेषणः तज्जनक इव प्रावर्तत स्वयं संबोधयितुं पराभूतं राजानं तत्पुरतः तथा समुपस्थापितम् । तत् हि सः स्पष्टमेवानन्यत क्षुद्रं कार्यं·····अयोग्यं तत्सदृशस्य नियतिनिश्चितस्य सार्वभौमस्य सम्राजः कृते·····योग्यं च तद्भालदर्शिनः·····अमात्यप्रमुखस्य ।·····संबोधितेऽपि तस्मिन् अमात्यप्रमुखेन व्यंग्योक्तिसिद्धहस्तेन, न सद्वेषणः तज्जनक इव प्रावर्तत स्वयमुद्घोषयितुं संधिप्रस्तावान् । तदपि सः स्पष्टमेवामन्यत तुच्छं कार्यं·····अयोग्यं तत्सदृशस्य नियतिनिश्चितस्य सुल्तानुल्मुअज्जमस्य कृते

······योग्यं च तद्वशंवदस्य संधिविग्रहिकस्य। उद्घोषितेषु च तेषु संधि-प्रस्तावेषु······न सः द्वेषणः तज्जनक इव प्रावर्तत विवदितुं राजा जयपालेन सहाधिकृत्य तान् पंचदशलक्षस्वर्णमुद्रासमर्पण-सार्द्धैकशतसंख्यकमद-मत्तद्विरणसमर्पण-स्वरूपान्,······अपितु-व्यग्रमनस्क इव, समुत्सुक इव कर्तुं कार्यमन्यत्······महत्तरं कार्यं अन्यत्,······अनिच्छुक इव कर्तुमपव्ययं स्व-समयस्य बहुमूल्यस्य सांमुखीनसदृशे क्षुद्रे व्यवहारे······समुदतिष्ठत् स्व-सिंहासनात्······प्रोद्घोषयन् स्वमुखेन किंचित् सस्मितेन किंचिद्भावप्रकाश केन······सद्यः समाप्ते समरप्रसंगेऽसाधारणं चातुर्यं मनोबलं शौर्यं च प्रदर्शितवतां स्वसैनिकानां कृतेऽनुज्ञां······अधिकुर्वन्तीं सर्वानेव तान् निरपवादं लुण्ठितुमपरेद्युः······अपरेद्युरेव······अपरेद्युमात्रं······शत्रुपक्षीयं एकं तौल-निकदृष्ट्या समीपवर्तिधनाढ्यं नगरं यथेच्छम्।······व्यसृजच्च सभां सहसा ततः प्रस्थानेन······मध्ये जयघोषणानां······सर्वतः परिवृत्य पटसभागृहं कृतसंमर्दानां, संधिवार्तां सर्वां चित्तेनैकाग्रेणावलोकयतां, निश्चलानां, निःशब्दानां, अकस्मात् निशम्य तामप्रत्याशितामनुज्ञां स्वस्वामिसदृशस्यानु-शासनकठोरतया स्यातनामस्य तथा च स्वयमनुभूतचरस्य साक्षान्मुखात् क्षणमात्रं विस्मितानां, क्षणमात्रं अविश्वसतां, दृष्ट्वा तन्मुखारविन्दं स्मय-मानं समुपजातप्रत्ययानां हर्षातिरेकविह्वलानां, उन्मुक्तभावं नृत्यतां, स्वानि स्वानि शस्त्राणि उत्क्षिपतां यवनसैनिकानां मुखेभ्यः सततमुद्गच्छन्तीनाम्, ······अवमानयन् राजानं जयपालं······तमेव भस्मावृतांगाराभ्यामिव क्लांत-क्रुद्धाभ्यां नयनाभ्यां निर्निमेषाभ्यां पश्यन्तं, क्षणिकेनापि चिरदाहकेन दृष्टि-क्षेपेण एकेन।

तथाऽवमानितमात्मानममन्यत राजा जयपालस्तेनैकेन······एकमात्रेण-······तस्य दृष्टिक्षेपेण······यथा न दीर्घदीर्घेणापशब्ददुर्गन्धितेन भाषणेन तद-मात्यप्रमुखस्य !

तथाऽमन्यन्त तस्य सर्वे पौत्राः······तस्य पार्श्ववर्तिनः······स इव विनि-गडितहस्तपादाः······आश्यानरुधिररक्त वेषाः।

विशेषतः—राजपुत्रः, धर्मपालः······अगाधा हि आसीत् तस्य श्रद्धा······तस्यानुरक्तिः······स्वे पितामहे······(तद्दृष्ट्या) सर्वगुणगणाढ्ये······वैपरीत्यादेव विधेः तथा पराभूते।

तथा नूनं जज्वाल सः तेन निर्धूमं ज्वलताऽवमानज्वलनेन ..... यथा न विवेद क्षणमात्रमपि स्वात्मानं ..... सह स्वबन्धुगणेन पितामहेन च बन्दीकृततुच्छपशुवत् ततः सावहेलं नीयमानं स्वबंधुगणान्मूकमूकात् पितामहाच्चाधोमुखात् पृथक् क्रियमाणं, ..... यवन सेनासंनिवेशैकदेशे, समुपेक्षितप्रायेऽपि अहर्निशं परिरक्ष्यमाणे, आदित एव क्लृप्तानां (–अहो, आत्मविश्वासो यवनराजस्य !) पटनिर्मितानां संकीर्णानां काराकक्षाणामन्यतमे सावहेलं निक्षिप्यमाणं ... जनदर्शनात् कदाचित्कादपि क्षुद्रतमादपि वर्ज्यमानं, ... प्रातः सायं च द्विवारं प्रतिदिनं क्षुधापनयनाय किंचित् भक्षणार्हमपि तद्विपरीतमिव दृश्यमानं कदन्नं दीयमानं, ..... समुपेक्ष्य तदपि पीत्वा जलमेव हिमशीतलं ..... दहदिव कण्ठनलिकां ... क्षुधामात्मनोऽपनयन्त ... इत्थञ्चाति वाहयंतं दिवसान् पञ्चानधिकान् युगकल्पान् लोहपादान् ।

तथा निक्षिप्तश्च घोरे एकान्तवासे प्राणान्तकरे ..... न विवेद ... घटनाक्रमं ..... वेगेन घटितं तेषु दिवसेषु ..... भागान्तरे तस्यैव विस्तीर्णस्य यवनसेनासंनिवेशस्य ।

न विवेद, ..... उदाहरणार्थं, ..... कथं खलु लुलुण्ठिषोत्सुका सा विजयोन्मत्ता यवनसेना यथानुज्ञं प्रतिष्ठतान्येद्युरेव प्रातः आक्रमणाय लुण्ठनाय च तस्य नगरस्य निरपराधस्य निराशंकस्य, प्रत्याजगाम निर्द्धारितसमयावधौ (–अहो प्रभावः यवनराजानुशासनस्य यत् प्रहरमात्रमपि अधिकं न विललम्ब सा ! –) एव कृतकृत्याऽपारसंपत्संपन्ना, ..... कथं तत्पितामहः ..... प्रदत्तसमयावधौ विनिश्चितस्यार्थदण्डस्य प्रदानादपराद्धः ..... यवनराजस्य कोपविषयीभूतः ..... तेनापशब्दैस्तथा ताडितः मर्मणि विद्धः, अन्ते स्वीचकार द्वेषणस्याधिक्षेपदुःसहस्य प्रस्तावमुभयलोकविरुद्धं, उररीचकार स्वयं ततो निर्गन्तुं, गन्तुं स्वां राजधानीं, प्रेषयितुं च गत्वैव तत्र निर्द्धारितदण्डद्रव्यराशिं, ..... स्वीचकार च-सति तस्मिन् अंगीकृतकार्यकरणादीषदपि विचलिते चिरायिते वा मृत्युदण्डं यवनराजेन तस्य पौत्रेभ्यः, यवनराजस्य काराकक्षेष्वेव विनैव मरणं म्रियमाणेभ्यः, दीयमानं !

विवेद तु ..... हठात् ..... आत्मानं ..... दुर्गन्धिन्यां कठिनायां शय्यायां तन्द्रामग्नं ..... दत्वा लताप्रहारं नितंबभागे उत्थाप्यमानं ..... गृहीत्वा गले बहिः पटकाराकक्षात् प्रक्षिप्यमाणं ..... अपशब्ददुःसहं संबोध्यमानं च

केनचित् अपरिचितेन यवनसैनिकप्रहरिणा······प्रातःकाले एकस्मिन्······ युगैरिवान्तरितैः !

तादशाक्षिक्षेपकुपितकुपितः कोपातिरेककम्पमानतनुवपुः प्रयतमान एव प्रतिकर्तुं तमधिक्षेपकं······निःशस्त्र एव······सशस्त्रं······अविगणय्य भाविपरिणामं······अद्राक्षीत् स्वपुरत एव तमिवाधिक्षेपविह्वलं तमिव कोपातिरेककम्पमानतनुवपुषं तमिव प्रतिचिकीर्षातुरं···स्वं भ्रातरं······त्रिलोचनपालम् ······अन्वभूत्-कशाघातं स्वे पृष्ठभागे।······अपश्यच्चात्मानं सह भ्रात्रा निष्कास्यमानं यवनसेनासंनिवेशात् स्वस्वप्रातःकार्यकरणव्यग्रव्यग्रात्······ साट्टहासं····दयनीयामवस्थां तयोरवलोक्यावलोक्य प्रसादमपारमनुभवद्भिः पञ्चदशाधिकैः नग्नखड्गहस्तैर्यवनसैनिकैः !

प्राप्य नेत्रसंकेतं त्रिलोचनपालात्, विनिश्चित्य 'संयम एवावसरेऽस्मिन् उचिततरः प्रतिरोधात्, प्राणान्तमात्रकरात्······अतएव सफलप्रतिशोधावसरविलोपकात्' संनियम्य कथं कथमप्यात्मानं······सः प्रसह्य पराङ्मुखीबभूव तस्मात् यवनसेनासंनिवेशस्थलात् ।

विगणय्य च निरन्तरप्रवहत्-हिमशीतल-प्रतीप-पवनाघातं गत्यवरोधकं, ······सद्यो व्यतीते बन्दिजीवनेऽन्धकारस्यैवाधिकतरमभ्यस्तयोः आकुंचितयोः नयनयोः पीडाकरं निर्मलहैमावरणाऽऽवृतभूतलप्रतिफलनाधिकतरप्रकाशमानं स्वच्छतपनातपं, आश्यानरुधिररक्तं दुर्गन्धनिःसहं मलिनं वेषं च,···प्रवृद्धश्मश्रुजालाऽऽवृतक्षीणवदन एव······चचाल······सह सहोदरेण······ समुद्दिश्य–स्यान्नाम स्वराज्यप्रदेशम् ।

अनादृत्य······क्षुत्पिपासापीडनं······तावत्कालपर्यन्तमुपेक्षितं······प्राप्य स्वातन्त्र्यं सहसाऽनुभूयमानं वेगेन वर्द्धमानं······आचक्राम अपथं स्वाभीष्टं व्यतीतनिशांतपतितहिमवृष्टयाऽऽच्छादितप्रायं···अधोमुखः भूमितलनिबद्धाऽऽरक्तोच्छूनलोचनः मूकः स्वे परस्परविमर्दि विचारकल्लोले एव निमग्नः······ प्रहरद्वयस् ।

यथा यथा तु दूरीबभूव तच्छरीरं तस्मात् नारकीययातनास्थलात्······ ज्वरोन्मत्तकल्पनानिर्मितादिव भासमानात् तस्मिन् स्वच्छे स्वतंत्रे सूर्यातपे तस्मिन् निर्बाधे निःसीमे भूमिप्रदेशे, तस्मिन् यथेच्छं क्रीडति मरुति,······ तथा तथा समुत्सुकीबभूव तच्चेतः ज्ञातुं स्वसहोदरात् वृत्तान्तं सर्वं······

तद्वियोगानंतरं घटितानां सर्वासां घटनानां, तयोरेव केवलयोर्मुक्तौ अन्ततः परिणतानां,······व्याकुलीबभूव तद्हृदयं च ज्ञातुं कुशलं पितामहस्य, क्षेमं सुखपालस्य, शं च स्वजनकस्य ।

असकृच्चिक्षेप च कटाक्षान् प्रश्नमुखरान् दिशि आननस्य त्रिलोचनपालस्य । न तु शशाक प्रष्टुं किमपि प्रकटतः······भीतभीत इव तस्यार्द्धविक्षिप्तस्येवार्द्धविभ्रान्तस्येवमृतप्रायस्येवाऽविर्भावात् ।

यदा तु अजानात् सर्वं तं······न क्रमिकं······न सुसंबद्धं······न संगतं ······अपितु सर्वथा तद्विपरीतं······तस्मात्······चक्रनेमिक्रमेणास्तंगते दिनकरे······हृदये तयोः युवकयोः मातुम् अपारयति, बहिरागत्य सर्वं चराच वस्तुजातमपि मज्जयति स्वपूरे नैराश्यतिमिरे इव सर्वतः प्रसृतेऽनान्धकारे······सह तेन एकस्य कस्यचित् प्रतिकृत्य शैत्यप्रभावं कथंचिद्विधृतप्राणस्य निष्पर्णस्य चित्रलिखितस्येव निश्चलस्य पैशाचिकस्यावासस्येव भयावहस्य कस्यचिद्वृक्षस्याधस्तात् विश्रांतात् स्वसहोदरात् निमीलितनयनात् स्वगतमिव मंद्रस्वरमस्फुटाक्षरं भाषमाणात्······तदा······प्रहरमात्रं न विश्वास आत्मनः सहोदरे······विभ्रांतचित्तमेव तं यत्किंचिदपि भाषमाणं स अमन्यतासह्यविपत्पातोन्मूलितं······न विशवास स्वकर्णयोः,······अमन्यत तौ संततनीरवताभ्रांतभ्रांतौ काल्पनिकानेव शब्दान् आकर्णयंतौ,······न विशवास आत्मनि,······अमन्यतात्मानं यथापूर्वं काराकक्षनिपतितं काल्पनिकमेव सहोदरं आकर्णयन्तम् ।

शनैः शनैः समुपजातविश्वासः······अवसन्नप्रायः······दिगंतव्यापि संतमसनिमग्नः·········एकाकिनमिवाऽऽत्मानमनुभवन्·······चिरमतिष्ठत्······· पाषाणखण्ड इव······विलुप्तचेतनः ।

शनैः शनैः आरभमाणः विचारयितुं न स अपारयत् विनिश्चेतुं······'किं पितामहस्य वर्तनमधिकं विनिन्दनीयं······आहोस्वित् सुखपालस्य····स्वयमेव गत्वा यवनराजस्य संनिधौ इच्छां स्वामंगीकर्तुं यावनं धर्मं तत्परतां च स्वां सेवितुं यवनराजमाजीवनावसानं तथा प्रकटीकुर्वतः'–इति ।

पराजयजनितस्य दुःखस्य पितामहव्यवहारजनितस्यापराधबोधस्य सोदराचरणजनितस्य क्षोभस्य,······'महतीयं विपत्परम्परा····इतोऽपि महत्तरायां विपदि नूनं परिणमेत' इति प्रतिक्षणं वर्द्धमानयाऽऽपातता

निर्मूलयापि अप्रत्यास्येयया दुराशंकया तथाऽऽरभत मनस्तस्य व्याकुलीभवितुं—यथा न तत् पारयामास······लक्षयितुं, तद्दुर्निशावसानं, श्रान्तश्रान्तयोस्तयोस्ततः पुनः प्रस्थानं, आदिवसावसानमकृताऽऽहारयोरेवाग्रे प्रवसनं, तद्दिनावसाने कस्मिंश्चिदेकस्मिन् विध्वस्तप्राये उलूकैकशरणे देवतायतने कथंचित् त्रियामापनयनं, पुनश्च ततः प्रस्थानं एवं क्रमेण च मार्गाक्रिमणं······निःशब्दं······सत्यपि सहप्रवासिनि अत्यंतमैकांतिकम्। न पारयामास च लक्षयितुमात्मनः प्रवेशं स्वराः। यस्याऽऽभ्यंतरिके भागे, नागरिकाणां तत्रत्यानां, प्रत्यभिज्ञातुं तौ कंकालमात्रशेषौ क्षामवदनौ रक्तारक्तलोचनौ दृढाबद्धौष्ठपुटौ प्रवृद्धश्मश्रुजालौ विदीर्णवसनौ अपारयतां, अर्द्धविक्षिप्तत्वेन तौ सम्भावयतां, भीतभीतानां, स्वयमेव तन्मार्गादपसरतां, साकूतं तद्वेक्षणं,······शनैः शनैः कुलपरम्परागतामैश्वर्यगर्वितां राजधानीं चोपसर्पणम्।

लक्षयामास तु सहसाऽऽत्मानं······हठात् समुद्धृतमिव तस्मात् दुराशंकावात्याचक्रात् काकतालीयन्यायेन कर्णयोरापतितेन, हृदये न जाने केन समुद्घुष्यमाणेनापि तावत्कालपर्यंतमनाकर्णितेन श्रावणेनेन्द्रियेण, स्वपितामहाभिधानेन, केनचित् अपरिचितेन सकुत्समिव सावज्ञमिव समुच्चारितेन सहसा तैक्ष्ण्यं भूतपूर्वं सदृशं चित्तस्याऽऽपादितं बहिरेव स्वराजधानीप्राकारात्, सायंप्रभोज्ज्वलितविशेषादपि निस्तेजस्कादिव भासमानात्, वात्यपि नभस्वति निर्जीवेनेवाधः लम्बमान महावस्त्रेण······राजध्वजेनालंकृतशिखरात्······सहसोदरेण तिष्ठन्तं········एकस्यातिविशालस्य, चित्रलिखितस्येवावस्थाय निश्चलं स्थलविशेषमेकं चितोपचितोपरितलं अत्युन्नतं मंचविशेषमिव भासमानं मध्यवर्तिनं निरीक्षमाणस्य, विविधवयोवेषवृत्तांतस्यापि ऐकात्म्यमिवापन्नस्य जनसागरस्य मध्ये।

प्रयतमान एवानुमातुं प्रयोजनं तावतो विशालस्य जनसंमर्दस्य एकत्र समवेतस्य······आकर्णयामास अभिधानं स्वसोदरस्य सुखपालस्य तेनैव व्यक्तिविशेषेण सकुत्समिव सावज्ञमिव समुच्चारितम्। व्यापारयामास बलादात्मानं व्यावर्तयितुं स्वे लोचने मंचविनिगडिते दिशि वक्तुः।

अवलोकयामास एकं नागरिकं साधारणवेषं साभिरुचि इव महता विस्तरेण कथयन्तमेकं तत्समीपवर्तिनं ग्रामीणं······सर्वं राजकुलवृत्तांतम्

आहोपुरुषिकया······प्रेरयामास चात्मानं तन्निकटे समुपसर्तुम् ।

तन्निकटे समुपसृतश्च सः धर्मपालो विदांचकार······अंततोगत्वा······ राजकुलसम्बद्धं घटनाचक्रं व्यतीते मासे महता वेगेन घटितम् ।······विदांचकार–कथंतत् पितामहः सर्वथा स्वभावविरुद्धं व्यवहरन्······स्वीचकार यवनराजस्य प्रस्तावं, प्राचलच्च एकस्मिन् निशीथे यवनराजसेनासंनिवेशात् कतिपयसेवकसहितः विहाय स्वपौत्रान् यवनराजबंदिगृहेष्वेव । बंधकरूपेण··· कथं स कतिपयैरेव दिवसैः प्राविशत् स्वां राजधानीं प्रासादं च घोरे निशीथे कुमार्गेषु केनचित् मलिम्लुच इव परिहरन् जनसंपर्कं,······कथं प्रदाय स्वर्णमुद्राराशिं देयत्वेनांगीकृतं प्राहिणोत् स्वान् अधिकारिणः कांश्चित्······अनिच्छुकानपि बलात्, अयापयच्च तामवशिष्टां निशां तदन्वागतं च दिवसं दिवाभीत इव निलीनः स्वे कक्षे,······कथं राजधानीजनः अपरेद्युरेवाजानात् सर्वं तस्य व्यवहारं,······कथं स······आदौ अश्रद्दधानस्तस्य तादृशे व्यवहारे कर्णोपकर्णिकया श्रुते······पश्चात् समुपजातविश्वासः ······तस्मै कुलमर्यादाः पदमर्यादाः आर्यसंस्कृतिमर्यादाः मानवधर्मोचिताः मर्यादा······सर्वा अपि······समुल्लंघ्य कापुरुषोचितं व्यवहरतेऽक्रुध्यत्,······ कथम् अनुपदमेवागतां सुखपालव्यवहारसम्बद्धां वार्त्तां निशम्य तस्य सः क्रोधः परां वृद्धिं गतः······प्रेरयामास तं साक्षात्कर्तुं प्रतिनिधिमण्डलमाध्यमेन, निन्दितुं तं तदाचरणमधिकृत्य······उद्घोषयितुं च तत् समक्षमेव तं राजपदविभ्रंशितं ऐकमत्येन,····कथं सः······गुप्तचरैः आहोपुरुषिकया प्रच्छन्नया संसूचितः प्रतिनिधिमण्डलागमनात् पूर्वमेव तद्विषये, अकृत्वैव प्रतीक्षां प्रत्यागमनस्य युवराजस्य राज्यान्तरं गतस्यानभिज्ञस्य गृहवृत्तांतस्याप्रत्याशितस्य, समुद्घोषयत् स्वं संकल्पं त्यक्तुं राजपदं कर्तुं च स्वकृतपाप प्रायश्चित्तमात्मदाहेन ।

'एवं तर्हि······अनुष्ठीयते जयपालेन प्रायश्चित्तं स्वकृतपापस्य दग्ध्वाऽऽत्मानं अन्न !······हं !······परंतु······किमिव प्रायश्चित्तं तेन सुखपालेन ······(आहोस्वित्-सुखदासेन !–)······कृतस्य पापस्य ?······कश्च तत् तेन कारयिष्यति ?······कथं खलु–······'

अविरतवचस्येव तस्मिन् ग्रामीणे,······सहसा समुदभवत् कोऽपि······ सूक्ष्मोऽप्यप्रत्याख्येयः······कल्लोल इव तस्मिन् दिगंतप्रसृतेजनमहासागरे······

आकर्षयन्निव तं तस्य नागरिकस्याप्तं पुरुषं धर्मपालं तद्भ्रातरं च······ सहान्यान्यैः······दिशि तस्यैव जनसंमर्दमध्यवर्तिनः मंचस्य दिशि,······हठात् परिवर्तयन् मस्तकानि तेषामन्यजनानामिव दिशि तस्याम् ।

शक्त्या कयाचिदतीद्रिंयया समादिष्टानीव लोचनानि तेषां, परित्यज्य विषयान्तरं विनिगडितानीव बभूवुः उपरिमार्गस्य तस्य,······अवलोकयामासुश्चानुपदमेव–एकं महाप्रमाणं किंचिदवनतवृषस्कंधं धवलाधोवस्त्रमात्रवेषं कांचनगौरवर्णं प्रवृद्धधवलश्मश्रुजालं अवनतमुखं······अवस्थायां तस्यामपि गौरवमण्डितमिवानुल्लंघनीयमिवाघर्षणीयमिव भासमानं प्रोन्नतवलितललाटफलकं कृतवज्रनिश्चयमिव दृढाऽऽबद्धौष्ठपुटं पुरुषविशेषं······जनसागरं निबिडं द्विधाविभाजयंत्यां मंचयायिन्यां नातिविस्तीर्णायां धनजनसंमर्दनिबद्धोभयपाश्र्वायां पदव्यां अवतीर्णं······समुपेक्ष्य च दृष्टीः असंख्याः······विविधभावनामुखराः······काश्चित् विस्मयविस्फारिताः, काश्चित् कुत्सादु.सहाः, काश्चित् भक्तिस्निग्धाः, काश्चित् क्रोधदंदह्यमानाः, काश्चित् कौतूहलातुरातुराः, काश्चित् दुःखिताः, काश्चित् सुखिताः······ तन्मात्रनिगडिताः······गत्या धीरगंभीरया······गच्छन्तं दिशि मंचस्य ।

अवततार च तस्य जनसारगस्य······निरुद्धश्वासमवलोकयतस्तां पदयात्रां लोकविलक्षणां······उपरि निबिडा नीरवता······कादाचित्केन······ न विद्मः कस्माद्भागात् तस्य जनसागरस्योद्गच्छता······स्त्रीरुदनस्वरेणेवासकृद्भज्यमाना ।

न शशाक······भंक्तुं तामायह्यां······आक्रंद्य उच्चैःस्वरं 'तात !······ तात !······'–कण्ठागतप्राणः धर्मपालः······इच्छन्नपि तथा कर्तुं पणीकृत्य प्राणान् ।

आ शैशवात् दृष्टचरमपि अदृष्टपूर्वमिव······असंपृक्तमिव···तटस्थमिव भासमानं तं स्वं पितामहमवलोक्य तामवस्थामापन्नं······सहसा तस्य हृदयमापूर्यन शोकपूरेण नेत्रयुग्मं चाश्रुपूरेण ।

इच्छन्नपि समुपसर्तुं तत्समीपे न शशाक पदमेकमपि समुत्क्षेप्तुम् ।

अपि तु–अतिष्ठत् तदवस्थ एव······आबद्ध इव कयाऽपि अलौकिकशक्त्या यत्किंचित् कारिण्या सर्वतंत्रस्वतंत्रया ।

यदि नाम······स अभविष्यत् यथेच्छं कर्तुं समर्थः······यथेच्छमाक्रन्दितुं

······यथेच्छं गन्तुं समीपे तस्याबद्धुं च तं भग्नप्रायमपि आत्मगौरववशात् अभग्नमिवानमन्तं स्वे बाहुबंधने······अप्यभविष्यत् सः समर्थः प्रतिरोद्धुं क्रमं घटनानां तदनन्तरमेवाऽऽयोजितपूर्वाणामिव वेगेन घटितानाम् ?

अशक्यं खल्वेतत् वक्तुम् ।

यदि नाम ······

अथवा–किमनेन वृथा तर्कवितर्केण ?

प्रस्तुतमेव······घटितमेव······अनुसरामः

अवलोकयतामेव तेषामसंख्यानां जनानां निरुद्धश्वासानां मूर्तिवत् स्तब्धानां······आरोहत् स वृद्धः राजा तं मंचं तयैवाविचलितया गत्या,······ अतिष्ठत् क्षणमात्रं निश्चलः प्रतीच्याभिमुखः,······अपश्यद्राजधानीं दूरवर्तिनीं क्षणमात्रमनिमेषया दृष्ट्या,······अवानमत् समीपे चितायाः,······ अगृह्णात् तत्समीपवर्तिनम् आदित एव सधूमं ज्वलन्तं अलातं महान्तं,······ अदीपयत् तेन तां चितां निष्कम्पदक्षिणहस्तविधृतेन,······अनमत् तत्र समुपस्थितं विशालाकारं सहस्राक्षं सहस्रहस्तं सहस्रपादम् जनताजनार्दनं······ अज्ञात्वैव गूढमुद्देशं कापुरुषोचितस्य तद्वर्तनस्य मूले प्रभावशीलं तं तथा दण्डयन्तं,······आरोहच्च तां सचटचटात्कारं निर्धूमं ज्वलन्तीं शान्तेन चित्तेन··· सुषुप्सुरिव सुखशय्यायां कुसुमकोमलायां प्रापञ्चिक्लेशमुक्तिप्रदायाम् !

अगच्छच्च स्वर्गं कतिपयक्षणाभ्यन्तरे एव······परिवृतः······अन्तर्हितः ज्वालाभिः तमार्यसंस्कृतेः रक्षणार्थं सर्वस्वं तथा हुतवन्तमभिमानिनं वृद्धं पुरुषसिंहं सशरीरमेव स्वर्गं नेतुमातुरातुराभिरिव चिताग्नेः !

साक्षात्कृत्य तत् स्वात्माहुतिदृश्यं······कल्पनामनोरमं प्रत्यक्षभयंकरं··· अभिभूतः सः विशालः जनसागरः चित्रलिखित इवातिष्ठत् चिरम्······ तस्मिन्नेव चिताग्नौ निबद्धदृष्टिः···अन्तेचारभत–अपसर्तुं ततः स्वान् स्वान् आवासान् समुद्दिश्य······स्वस्वविचारमग्नः······अनुताप-समाधान-संकल्प-विकल्प-तर्कवितर्कादिषु-विविधेषु मानसिकेषु व्यापारेषु व्यग्रः······मूकः······ वास्तविकस्थित्यनभिज्ञः ।

आरभत च अस्माकं राजपुत्रः अपि अपसर्तुं ततः···तथैव विचारमग्नः ······तथैव व्यग्रः······तथैव मूकः,······चचाल अपसर्तुं ततः,······परन्तु-न स्वम् आवासं यथापूर्वं समुद्दिश्य।······अपितु-तदविरुद्धायां दिशि······उत्तर-पश्चिमायां दिशि······यवनराजसेनासंनिवेशस्य दिशि······निभृतं निःशब्द प्रहाय स्वसहोदरसाहचर्यम्······एकाक्येव······ज्वलन्नयनः ।

अपसृत्य च क्रोशमात्रं तस्मात् चिरस्मरणीयात् आत्माहुतिस्थलात्··· क्षणमात्रं विरराम प्रवासात्·····व्यावर्तयामास स्वं मुखं नक्षत्रप्रकाशे दृषदुत्कीर्णमेव भासमानं दिशि तस्य स्थलस्य,·····ददर्श तं चिताग्नि अस्पष्टास्पष्टम्,·····बधान स्वे करकमले कुर्वन्निव पश्चिमं प्रणामं,······ पुनरारभत च स्वं प्रवासं निर्निमेषाऽऽरक्तलोचनः ।



## तृतीयः परिच्छेदः

'तात !'—संबोधनेनानेनास्फुटास्फुटेन किंचिदसंस्कृतोच्चारणेनापि भाव मधुरेण बलात् समाकृष्यत चित्तं·····स्वैरं परिभ्रमत् असंबद्धप्रायासु भाववीथिषु राज्ञः आनन्दपालस्य·····प्रसह्याक्रम्यमाणस्याकालजरया एभिः व्यतीतैः कतिपयैः वर्षैः युगकल्पैः।

प्रायोज्यत निपुणे समुच्छ्वसदाशासमुत्फुल्ले विलोचने तस्य विश्रामकक्षस्य प्रतिक्षणं निविडतरीभवति निशामुखसन्तमसि निमज्जतः।

बलादशीर्यत च कतिपयक्षणानन्तरमेव निराशया दारुणयाऽनवलोक्य कमपि स्वसंनिधौ·····ऋते तत्संमुखं भूमौ समुपविष्टात्, प्रसार्य तत्पुरतः बहुमूल्यं यावनं पण्यजातं तन्निरीक्षणाय विनीतयाऽपि आशामुखरया दृष्ट्या तन्मुखमेव समवलोकयतः गांधारात् तस्मात् वणिग्विशेषात्·····उत्पन्नया।

'कः खलु·····मां तथा समबोधयत् ?'—चक्रन्द तत्।

'न खलु वत्सः त्रिलोचनः।·····द्वित्राण्येव तु दिनानि व्यतीतानि गतस्य तस्य काश्मीरप्रदेशं समुपलब्धुं साहाय्यं तद्देशीयान्यतमानां खोकराणां ह्रस्वकायानामपि स्वविक्रमेण स्वधैर्येण चासाधारणेन निखिलेऽपि भारतवर्षे ख्यातिं परमां गतानाम्'।

'न खलु वत्सः·····धर्मपालः,·····(सनिःश्वासं) वर्षाणि खलु पञ्चाधिकानि व्यतीतानि दीर्घदीर्घाणि गतस्यतस्य·····न जाने कुत्र·····न जाने किं निधाय मनसि·····तथाऽदृश्यताम् !'

'मया खलु·····राज्यान्तरात् प्रत्यागतेन···अप्रत्याशितपराभवनिर्विण्णेन·····प्रत्यग्रपितृशोकविह्वलेन·····एतदेवाज्ञायि तदा कारावासात् यवनस्य एकाकिन एव प्रत्यागतात्·····पितामहशोकावसन्नधैर्यात् त्रिलोचनात्·····यत्·····पितामहस्यात्मदाहप्रायश्चित्तदृश्यावलोकनपर्यन्तं·····सः तेनैव सहाऽऽसीत्·····स इव क्षुब्धः·····स इव विह्वलः·····स इव मूकबधिरः ततः ऊर्ध्वं तु कुत्रगतः सः-न स अजानात्·····प्रयत्यापि बहुदिनपर्यन्तम् !'

'नाप्यहम्·····अद्यावधि·····व्यापार्यापि असंख्यानि स्वानि चारचक्षूंषि

······देशविदेशेषु अहर्निशम् !'

'न खलु······सः······सः······(सकष्टं) सुखपालः······(सकुत्सं) सुखदासः। न स उत्सहेन संबोधयितुं माम् एवम् !······(साधिक्षेपं) व्यापृत एभिः वर्षैः निमज्जने स्वकुलस्य रौरवे नरके······अंगीकृत्वा दास्यं तस्य गोभक्षकस्य यवनराजस्य, कृत्वा च साहाय्यं तस्य देवताविग्रहभंजन कर्माणि।'

'(सोद्वेगं) श्रूयते मया स्पशकर्णेन-पापैरेतावद्भिरर्जितैरसंतुष्टः······प्रयतते स मम किंसुतः······परिवर्द्धयितुं स्वस्वामिसामर्थ्यं स्वीकृत्य सोत्साहं भारतवर्षीय प्रदेशपरिचितान् भारतवर्षीयजलवायुपरिचितान् सैनिकात् शस्त्रोपजीविनस्तत्सेनादले नवीनतमे !'······कस्य खलु प्राक्तनस्य पापस्य फलं मम······रूपेण तस्यावतरितमेतस्मिन् जन्मनि······न जा–!'

'तात !–'तदेव संबोधनं······तथैवात्संस्कृतोच्चारणं······परंतु पूर्वापेक्षया स्फुटतरं······पूर्वापेक्षया मधुरतरं······अभनक् सहसा तस्य विचारतन्तुं कष्टप्रदम्।

प्रैरयच्चतं······'संबोधनमेतत् अनेन पण्याजीवेनैव समुच्चारितम्' इति संदेहं जानन्तं······अवलोकयितुमागन्तुकस्य वदनं चकितचकितं··निरीक्षितुं तत् कतिपयक्षणपर्यन्तमकस्मात् स्फुटितस्मितं,······प्रत्यभिज्ञातुं च तत्··· विद्युत्प्रकाशप्रकाशितामिव······अनायासम्।

'धर्म !'–उच्चारयन्नेवास्फुटाक्षरं तत् संबोधनं, मनसि अहर्निशं जपितं ······उद्तिष्ठत् स राजाऽकस्मात् विगलितवार्धकभार इव सावेगं स्वासनात्, ······अबध्नात् तं कृतकवणिजं······तमिव समुत्थितं······तामेव सोत्साहं······ बाहुबन्धने,····अघ्रात् तं अवनते स्ववक्षः कपाटसंलग्ने चिकुरिले मस्तके,··· अचुंबच्च तं······उन्नमिताननं······कपोलेऽश्रुधारासिक्ते······आतुरातुरे।

'धर्म !······धर्म !'–जपित्वा च तन्नाम कतिपयक्षणपर्यन्तं······ प्रारभत स्नापयितुं तं······'कुत्र गत आसीः त्वं ?······वत्स ?······सर्वाणि संवत्सराणि एतानि युगदीर्घानि ?······किमिति गत आसीः······?······ छायामात्रद्वितीयः ?······किमिति अजहास्त्वं सर्वान् अस्मान् मंक्तुम् अपारे खेदसागरे······अप्रेषयित्वा एकमपि क्षेमसंदेशम् ? इत्याद्याकारकाभिः स्नेहसुगंधिनीभिः प्रश्नधाराभिः।

'गत आसं शत्रुप्रदेशं !⋯तात !⋯शत्रुप्रदेशराजधानीम् ।⋯द्रष्टुं⋯तं सुखपाल !–' सस्नेहं परामृशन् स्वपितरं पृष्ठे–प्रत्युवाच धर्मपालः⋯⋯ चिरान्नूनं लब्ध्वावसरः ।

'द्रष्टुं⋯⋯तम् ?'–अविश्वसन्निव⋯. स्वकर्णयोः⋯⋯पुनरप्यपृच्छत् तत्पिता तन्मुखनिगडितनयनः ।

'आम् ?⋯⋯तात ?' कठोरतरस्वरं प्रत्यवदत् तत्पुत्रः । 'प्रष्टुं च तं किमिव सुखमलभत सः⋯⋯कृत्वा तत्⋯⋯उभयलोकविरुद्धं⋯⋯कृत्यम् !'

असमर्थः वक्तुं किमपि⋯⋯तस्थौ तत्पिता तथैव विनिगडितलोचनः ।

'नाशकं⋯⋯द्रष्टुं⋯⋯तं⋯⋯हं⋯⋯समीपतः,⋯प्रष्टुं च तं यक्षप्रश्नम्'– अग्रे जगाद धर्मपालः⋯अनुमाय तत्प्रश्नमपृष्टं⋯खेदजडेन स्वरेण⋯'अपारयं तं द्रष्टुं ।⋯⋯परन्तु दूरतः ।⋯⋯तदपि क्षणमात्रम् ।⋯तदपि एक वारम् । ⋯⋯एकदा⋯⋯एकदैव⋯⋯दृष्टी आवयोः⋯⋯नूनं⋯⋯अमिलताम् ।⋯⋯ नत्यशकतां संभाषितुम् ।⋯⋯अपरिचितस्येव व्यग्रस्येव तस्य सा दृष्टिः⋯ मां⋯⋯(सकष्टं) प्रत्यभिज्ञातुमपि असमर्थैव नूनं प्रतिभासते स्म तदा' ।

'गोमांसभक्षणेन परिवर्तिता⋯⋯दृष्टिः तस्य स्वं सोदरं प्रत्यभिज्ञातुं नाशकत्–इत्यत्र किमिवाश्चर्यम् ?'– आत्मगतमिव मन्द्रस्वरं उवाच राजा ।

'अन्यत् तु कार्यं⋯⋯ततोऽपि अधिकमहत्वपूर्णं कार्यं⋯⋯कर्तुं अशकम् अहं, तात !'–उत्साहेनाऽऽहार्येण जगाद धर्मपालः⋯⋯आतुर इव समुद्धर्तुं स्वं पितरं पुनरपि निराशापंके निमज्जन्तम् ।

'अशकम् अहं द्रष्टुं तं यवनराजं महमूदं अनेकवारं⋯⋯परीक्षितुं च तं समीपतः⋯⋯प्रशासनव्यापृतं⋯⋯सैन्यसंगठनव्यग्रं⋯⋯युद्धसंचालनमग्नं– गांधारदेशीयस्य राजकीयपटवासवाहीकस्यान्यतमस्य छद्मवेषं धृत्वा !'

'तं वेषं धृत्वा–अशकम् अहं अनुसर्तुं शीर्षस्थानप्रदेशे गतं तं⋯⋯ उद्वृत्तं तत्रत्यं शाशकं दण्डयितुम् ।⋯सेनानायके⋯योद्धरि⋯तस्मिन् नाहमशकम् अवलोकयितुं दोषं कमपि ।⋯⋯प्रशासके तु तस्मिन् अपारयं द्रष्टुं एकं⋯⋯चाटुप्रियतारूपम् !⋯⋯अद्राक्षं तं वशंवदीभवन्तं साक्षात् तस्योद्वृत्तस्य शीर्षस्थानशासकस्यैव⋯⋯शस्त्रव्यापारे पराजितस्यापि अन्तेजिह्वाव्यापारे विजयिनः ! (–अविश्वसन्निव स्वम् अनुभवं⋯⋯साश्चर्यं–)

चाटुकारिणस्तस्य धूर्तस्य जिह्वया विजितः सः पराजितं तं द्वेषणमेव······ शीर्षस्थानस्यापि अपेक्षया संपन्नतरस्य प्रदेशस्य शासकं व्यदधात् !'

सम्राट्पदाभिलाषिणि तस्मिन् दुर्दान्ते·····अन्यमपि दोषं द्रष्टुं अपारयं अहं शनैः शनैः।·····अद्राक्षं तमहं तथाऽनपकारिणेऽपि यथापेक्षमनुपकारिणे तटस्थप्रायाय शासकाय क्रुध्यन्तं क्रोधं तं मनसि जुगुप्समानं, प्राप्यैव अवसरं च स्वानुकूलं तं दण्डयितुं तत्परम्'– क्षणमेकं तूष्णीमवस्थाय उवाच धर्मपालः।

'स्वे शीर्षस्थानाभिधाने–उदाहरणार्थं–अपेक्षते स्म सः साहाय्यं निकटवर्तिनः भाटीयप्रदेशशासकान्·····तत्पितुः सुबुक्तिगीनस्य मित्रात्,······ नालभत परं तु तत् ···विनैव तत्साहाय्यं··सः अभियाने तस्मिन् साफल्यं त्ववाप्नोत्,·····परंतु दीर्घद्वेषी इव न व्यस्मरत् तं स्वापेक्षाभंगं।·····अपि तु–कालभुजंग इव पादस्पृष्टः·····अतिवाहयित्वा कंचित्कालं·····आचक्राम राज्यं तस्य शासकस्य।'

'(सनिःश्वासं) श्रुतमेव स्यात् कर्णोपकर्णिकया भवता–कथं तच्छासकः वज्रः·····वज्रसंकल्पोऽपि·····दृढं प्रतिरुन्धानोपि तदाक्रमणं·····वैपरीत्यद्दैवस्य पराजितः·····परित्यज्य राज्यं स्वं कुलपरम्परागतं·····ततः प्रपलायितः·····शरणीचकार गहनानि वनानि असूर्यंपश्यान्तर्भागानि सिन्धुसरित्तीरवर्तीनि·····कथं ततोऽपि निष्कासितः प्रयत्नैः प्रारब्धान्तगमनशीलस्य तस्य द्वेषणस्य·····विहाय 'असंभवम्' इति स्वं समाश्वासकं संकल्पं भवच्छत्रछायायां अशरणशरण्यायां सामर्थ्यपुनरूपलब्धेः,·····न्यलीयत चान्तेऽन्तकछत्रछायायामेव सर्वव्यापिन्यां·····कृत्वाऽऽत्मघातम् !'

स्मृत्वाऽन्तिमामिच्छां तां स्वमित्रस्य ज्येष्ठश्रेष्ठस्य वज्रस्य रुरुदिषोरिवानन्दपालस्यौष्ठौ विवर्णौ प्रस्फुरतुः किंचित्।

'निशम्यापि स्वस्पशकर्णैः समाचारं करुणकरुणस्य जीवितावसानस्य स्वपितृव्यतुल्यस्य तस्य वज्रस्यासमुपजातप्रत्ययः सः यवनराजः समाश्वासयदात्मानं साक्षात्कृत्वैव तन्मस्तकं·····मीलितलोचनं·····वृन्ताल्लूनमिव कमलं निलीनभ्रमरम्।·····तावताऽपि अकृतकृत्यंमन्यश्च·····प्राप सन्तोषं संवत्सरेणैकेन··हत्वैव समग्रं सैन्यं तस्य संन्यस्तशस्त्रमपि·····लुण्ठित्वैव संपूर्णां राजधानीं तस्य भयातुरामपि·····विलाय्यैव तस्य राज्यमतिप्राचीन-

मपि साम्राज्ये स्वेऽप्रतिहतगति प्रत्यहं वर्द्धमाने,......कारयित्वैव बलात् धर्मपरिवर्तनं तस्य प्रजाजनैः ।'

'अलभत उन्मार्गगामी आत्मनः पापस्य फलमचिरादेव...प्रतिनिवर्तन-मार्गे'–सोद्वेगमुवाच तत्पिता सहसा ।

'एवमामनन्ति साधारणाः जनाः,......तद्राज्यबहिर्वर्तिनः,......ते अपि सनातनधर्मानुयायिनः'–तत्क्षणं प्रत्युवाच नीरक्षीरदर्शी तत्पुत्रः ।...... 'तद्राज्यान्तर्वर्तिनस्तु......तद्धर्मानुयायिनस्तु......तद्धर्मेतरधर्मावलंबिनां दण्डधारणं प्राणहरणं बलाद्धर्मपरिवर्तनं वा परमपावनं कर्तव्यं स्वं मन्यमानाः......नतमुन्मार्गगामिनमामनन्ति....न तत् कार्यं पापं......न वा तदनुपदमेव ससैन्यस्य तस्योपरि अकस्मात् आपतितं प्राकृतिकं संकटं भीषणं तत्पापस्य फलं । अपितु–सर्वथा काकतालीयन्यायेन तेनानुष्ठितायाः अपरिचितनिवर्तनमार्गस्वीकाररूपिण्याः स्वाभाविक्याः त्रुट्याः फलम् ।'

'परंतु–श्रुतं मया–स्वभावेनावशंवदोऽपि अन्यस्य......सः...परिस्थितिषु सर्वथाऽपरिचितासु......करोति मनः......परिस्थितिभिस्ताभिः परिचिततराणामाप्तसदृशानां......तटस्थानाम्वा......मतेष्विति'–स्वगतमिवावोचत् राजा आनन्दपालः ।

'समीचीनमेव श्रुतं भवद्भिः'–प्रत्यवोचत् धर्मपालः ।......ज्ञातं मया ......छाययेव तत्सैन्यानुगामिना......यत् अवसरे तस्मिन्नपि अकरोत् स मनः मतेषु तद्देशवासिनां तत्रत्याभिः परिस्थितिभिः परिचिततराणां तद्धर्मानुयायिनां नागरिकाणाम् ।'

'अलभत च फलं तस्य......दुर्गमतरेण मार्गेण गृहराज्यं स्वं प्रतिनिवर्तमानः......मूर्खः......घोरं वर्षता पर्जन्यदेवेनाहर्निशं प्रताडितः......निष्फलस्य स्वसैन्यविनाशस्य रूपेण,' उपहसन्निवावदत् राजा ।

'मन्ये-प्रवंचितः सः केनापि कृतकयवनेन......तद्देशीयानां मार्गोपदेशकानां मध्यात्–'स्वगतमिव मन्द्रस्वरमाह राजपुत्रः......बभूव च सहसा मूकः ......प्रभावित इव कयाऽपि सद्यःस्फुटितया संभावनया ।

'मूलस्थाननरेशोऽपि अकरोत् अनल्पं सहकार्यं प्राकृति-कविपदस्तस्याः–' अकस्मात् जागरित इवाग्रे उवाच सः,......'असकृत्......अकस्मात्...आक्रम्य तत् विगलितधैर्यं सैन्यं तस्यानपेक्षितेषु दुर्गमतमेषु स्थलेषु सर्वथाऽप्रत्याशितेषु ।'

'श्रुतं मया ।......नत्ववगतं याथार्थ्येन ।......मूलस्थानाधिपः......स्वयं म्लेच्छः......किमिति अपचकार स्वधर्मानुयायिनम् एवम् ?'—पप्रच्छ राजा सहसा जागरितकौतूहल इव ।

'मूलस्थानाधिपः...फतेह दाऊदः...शेख हमीद लोदिनः...सुबुक्तिगीन-सुहृदः पौत्रः...स्वयं म्लेच्छः...परंतु...अतीतैः कतिपयैः वर्षैः स्वीकृतेस्माईली-संप्रदायः......यवनराजस्य ईस्माईलीसंप्रदायमात्रविद्वेषिणः महमूदस्य......वैरी ।......अतएव सः अवसरं तं स्वानुकूलममन्यत! '—विश्लेषयन् आन्तरिकीं राजनीतिं यवनाजगतः आह तस्य पुत्रः ।

'—परंतु-न साफल्यमध्यगच्छत् पर्याप्तं स्वे कुटिलकुटिले प्रयत्ने तस्मिन्'—स्वगतमिवावोचत् राजा ।'

'न केवलं नाध्यगच्छत् साफल्यम्,......अपितु-अपाकरोत् आत्मन एव पक्षं......घातकीकृत्य यवनराजस्य वैरभावम्' ।

'—कथमिव ?'

'किमपि कर्तुमसमर्थोऽपि हि तस्मिन् विपद्ग्रस्ते प्रवासे एव......सः महमूदः......अमर्षणः......स्वां राजधानीं प्रतिनिवृत्त एव......प्रारभत स्वसेनापुनर्गठनं......वैरप्रतिनिर्यातनेच्छयाऽहोरात्रं ज्वलन् ।......स्वभावादेव निरपेक्षः अन्यस्य मतस्य......न स अमंत्रयत् आत्मनः ज्येष्ठानपि मंत्रिणः...लक्ष्यमात्मनः अधिकृत्य ।......आजन्मनः कपटाक्रमणकुशलश्च न स अकरोत् मंत्रभेदं कथयित्वा उद्दिष्टं स्वमभिन्नहृदयाय मित्राय कस्मैचिदपि ।'

'श्रूयते-नास्त्येव तस्याभिन्नहृदयः सुहृत् कोऽपि !' सकौतुहलमिवापृच्छत् राजा ।

'आम् !......' आह तत्पुत्रः 'एकका एव हि तत् सदृशाः पुरुषाः,......उपकाराय......अपकाराय वा जगतः असाधारणाय नियत्या सर्वतंत्रस्वतंत्रया संप्रेषिताः' ।

'कथं तर्हि......वत्स !......अध्यगच्छस्त्वं वार्त्तां तस्यैतस्योद्दिष्टस्य ?'

'सर्वथा......प्रातिभासिकविश्वमात्रसंभवनीयया ईत्या'-प्रतिध्वनन्निव तदाश्चर्यभावं प्रत्यवदत् धर्मपालः ।......'अध्यगच्छं तां......एकस्मिन् मेघा-च्छन्ने कुप्रभाते......दैनंदिनात् नित्यकर्मणः दैहिकात् प्रत्यागतः स्वमावासं...जीर्णं दिवापि अन्धकारितं कुटिरं भारवाहिकोचितं......माध्यमेन एकस्य

शीर्णप्रायस्य पत्रस्य······तृणशय्याया उपरि मम आदित एव निक्षिप्तस्य !'

अविश्वसन्निव तत्कथने······न किमपि उवाच राजा ।

'अतिसंक्षिप्तम् आसीत् तत् पत्रम् ।······संक्षिप्तं कुलेखं मलिनं च ।··· यदि हि तत् लिप्यां भाषायां चास्माकं नाभविष्यत् लिखितं······तर्हि तत् मम ध्यानविषयतामेव नाध्यगमिष्यत् !'

'लेखकेन तर्हि तस्य······अस्मद्देशीयेन भाव्यं······अस्मद्हितैषिणा च–' स्वगतमिव मंद्रस्वरमवदत् राजा ।······

'अपि नाम सन्ति बहवः एतादृशाः···तद्राजधान्यां ?'–पप्रच्छ अग्रे सः ।

'न बहवः ।······अंगुलिगणनीया एव ।······अस्मद्देशहितैषित्वंतु तेषां तन्मात्रवेद्यम्'–प्रत्यवदत् धर्मपालः ।······'येऽपि अस्मद्देशीयाः······तेऽपि······ भारवाहिकाः वा ·····साधारणसैनिका वा······क्षुद्रवाणिज्यवृत्तयो वा······' ।

'–न खुल तेषां अन्यतमः एतादृशं महत्वपूर्णं रहस्यं ज्ञातुं शक्नुयात् ।··· रहस्यसूचकेन खलु यवनराजस्य परमविश्वासभाजा······उच्चतमसामाजिक-राजकीयस्तरवर्तिना नूनं भाव्यम् ।······अस्ति नाम कश्चित् एतादृशः भारती-यस्तत्र ?'–पप्रच्छ राजा, अबध्नात् च स्वां दृष्टिं साभिप्रायामानने······ कतिपयैरेव संवत्सरैरतीतैः सहसा विहाय कैशोर्यसुलभां कोमलतां प्रौढतामा-पन्ने······स्वपुत्रस्य चिरम् ।

अनुभवन्तीव उष्माणं तस्याः······दृष्टिः तत्पुत्रस्य······सहसा प्रत्यागतेव वर्तमानं कालं भूतकालात् नातिसुदूरात्······विनिगडिताऽभवत् सह तया ।

न त्वशकत् लब्धुं साहचर्यं स्वानुरूपाया वाचः ।

'कठिनं खलु वक्तुं तत्'–अन्ते उवाच धर्मपालः······असमर्थ इव सोढुं तां नीरवताम् अधिकतरं कालम् ।······भग्नाश इव······न किमपि प्रत्युवाच तत्पिता । व्यावर्तयामास केवलं······सहसा निर्वापितामिव स्वां दृष्टिं शून्य-शून्यां तन्मुखात्,······बबन्ध च तां भूतलास्तरणस्य पुष्परचनायां······ अवलोकयन्निव तां प्रथमतः ।

'सूचयामास तत् पत्रं भाविनं तदभियानमार्गम् अस्मद्राज्यप्रदेशम-ध्यगामिनं',–सहसा समुपजातस्मृतिरिव उवाच धर्मपालः······समुद्धर्तुं समुत्सुकः स्वं जनकं······पुनरपि निराशापंके मिमङ्क्षुम ।

'अस्मद्राज्यप्रदेशमध्यगामिनं ?'–सहसा समाकृष्टचित्तः पुनरुच्चरति

स्म तद्वाक्यांशं राजा······अश्रद्दधानं इव स्वौ कर्णौ ।

अस्मद्राज्यप्रदेशमध्यगामिनं !'—दृढस्वरं प्रत्युवाच राजपुत्रः, ।

'विनैव अस्मत् संमतिम् ?'

'प्रदत्तपूर्वैव सा'—शुष्कस्वरं प्रत्यवदत् राजपुत्रः 'तातेन-अस्माभिः······ संधिवार्त्तावसरेऽन्तिमे ।'

'हूं !'-स्वीचकार मन्द्रस्वरं तत्पिता ।

'अवलोक्यास्मान् अकिंचिदपि कुर्वाणान् विगतेषु एषु कतिपयेषु वर्षेषु ······दृढं विश्वसति नूनं स यवनराजः-न वयम् उत्सहेमहि आमंत्रयितुं नवीनतमामापदं समुल्लंघ्य तां सहमतिं······अनतिहानिकारिणीम्'—इति ।

'अनतिहानिकारिणीम् अस्माकं भौतिकस्य धनस्य ।······न तु तथाऽस्माकं अभिमानधनस्य'-आक्षिपत् राजा सहसा समुत्तेजितः ।

मूकतामेव मुखरामभजत राजपुत्रः ।

'किं खलु कर्तव्यमस्माभिः······तव मते ?'—अनुभवन्निव सहसाऽऽत्मानं निःसहायं······असमर्थं निश्चेतुं किमपि······पप्रच्छ राजा ।

'न पारयामि निश्चेतुं-किं मया······अनुज्ञातव्यः······एकः विषनागः उपसर्तुं अन्यस्य नागस्य बिलं दष्टुं तं······मद्गृहमध्ययायिना मार्गेण,······ आहोस्वित् प्रतिरोद्धव्यः दृढं मद्गृहप्रवेशादादित एव······आशंक्य तस्मात् ······चिरादचिरादेव वा······परंतु······अवश्यंभावि प्राणसंकटम् । प्रत्युवाच धर्मपालः ।

अनुभवन्निव निमज्जनोन्मज्जनेऽनिश्चयसागरे वितर्ककल्लोलिते······ चिरमभजत तूष्णींभावं राजा ।

'तात !······अतिशीघ्रमेव विनिश्चेयः······दृढं विनिश्चेयः······भवता स्वपर्यायः'—जागरयन्निव तं तंद्रामग्नं उवाच राजपुत्रः ।······क्षिप्रकारो हि सः न दद्यात् भवते अवसरमधिकं विनिश्चेतुम्' ।

वदंश्चैवं समुदतिष्ठत्,······अस्पृशच्च चरणारविंदयुगलं पितुः ।

'कथं······प्रस्थितोऽसि ?'-अपृच्छत् सः चकितचकितः ।

'प्रस्थितोऽस्मि'—प्रत्यवदत् तत्पुत्रः ।

'द्रष्टुं मातरम्?'—

'दृष्टा मया······सर्वमाता······भारतमाता !'

'कुत्र तर्हि ?'

'गजनीम् ।'

गजनीम् ?......पुनः ?......सद्य एव ?

'सद्य एव'—दृढस्वरं प्रत्यवदत् तत्पुत्रः......कृतकवेषं स्वं यथापूर्वं पर्यवस्थापयन् ।......'दृष्टै्व सुखपालं......पृष्टैवच तं-किमिति तेन तथा समाचरता कुलद्वयमात्मनस्तथा कलंकितं......लभेय मनःशान्तिं......जीवनं यापयितुमत्यावश्यकीम् ।......अथवा......शंके......तदनन्तरमपि न लभेय......(निःश्वस्य) प्रतिभातभीषणभवितव्यः' ।

गदंश्चैवं सः समाहरत् स्वानि पण्यानि वस्तूनि......निरीक्षणाय नाम राज्ञः पुरतः प्रसारितानि...अपिबत् क्षणमात्रं आननं क्लान्तं सचिन्तं वलितभालफलकं तन्मुखविनिगडितलोचनं स्वजनकस्य चिरपिपासुभ्यामिवापुनर्दर्शनाऽऽशंकाकुलाभ्यामिव नयानाभ्यां......अतिष्ठत् क्षणमात्रं मूर्तिवन्निश्चलः पुरस्तात् स्वजनकस्य प्रस्फुरदोष्ठः......वक्तुकाम इव किंचित्,......निरगच्छच्च कक्षात् तस्मात् अपरस्मिन्नेव क्षणे दृढ़ैः पदक्षेपैः......अनुक्तवक्तव्यः ।

यथापूर्वं च तस्थौ तज्जनकः......चित्रचित्रित इव......सांध्यरत्नदीपप्रभोद्भासिताननैकदेशः.........निर्गमद्वारनिबद्धनयनः.........अवलोकयन्निव स्वंपुत्रं धर्मपालं.........कृतकवेषं......पराङ्मुखं......नमयित्वा स्वशिरः द्वारेण तेन बर्हिगच्छन्तं...भूमेरिव समुद्गतं भूमावेव विलीनं...शून्यपादिव प्रादुर्भूतं शून्ये एव तिरोहितं......प्रातिभासिकाल्लोकादिवाऽऽगतं प्रातिभासिके लोके एव गतं ।

आरभत च तत्क्षणात्......दैनंदिनकार्यचक्रपरिभ्रयन्नपि......प्रतिक्षणं चिन्तयितुं यक्षप्रश्नस्य तदुपस्थापितस्य समुचितं प्रत्युत्तरम् ।

'किं नाम—उचितं स्यात् कृते मम ?......मद्राज्यप्रदेशयायिना मार्गेण गन्तुमनुज्ञाप्रदानं द्वेषणाय......तथाऽपकारकारिणे ?......अथवा—तत्प्रत्याख्यानम् ?......किं नाम—उचितं स्यात् कृते मम......?......मद्राज्यप्रदेशमध्ययायिना मार्गेण गन्तुमनुज्ञाप्रदानं द्वेषणाय......मत्पितृघातकाय...मत्पुत्रापहाराय अथवा मत्प्रत्याख्यानम् ?'—अहर्निशं अक्रोशत् तस्य मनः......कर्तव्यबोधेन वास्तविकस्वशक्तिज्ञानेन च स्वस्वदिशि समाकृष्यमाणं

······आकुलाकुलं······संमुखमासीनं भवितव्यतायाः···सोपहासमाकुलतां तस्य ताटस्थ्येन पाषाणकठोरेण साक्षात्कुर्वंत्याः······न किंचिदपि प्रतिवदन्त्याः ।

उत्तरं च तस्य यक्षप्रश्नस्य समुपस्थापयामास तत्पुरतः स्वयमेव······ तदपि कतिपयदिवसानन्तरमेव ।

अन्ते सप्ताहस्य तस्यैव हि एकस्मिन् मध्याह्ने······ललाटंतपं तपति तपने······आलस्यतंद्रां अनुभवति चराचरे विश्वे······आविर्बभूव तस्य पुरतः······वामकुक्षिस्वापात् हठाज्जागरितस्य शयनकक्ष एव······दूतो द्वेषणस्य······महाप्रमाणः भीषणदर्शनः तपनतापतप्तः क्रोधादिवारक्तमुखः समुद्गच्छद्घर्मबिंदुपंक्तिरेखितभालफलकः प्रवृद्धश्मश्रुः आकुंचितलोचनः··· सह तत्तुल्यवृत्तान्तवयोवेषैः कवचाऽवृतकायैरंगरक्षकैः उपानद्गूढपादैरिव—तिरस्कृत्य सर्वाः मानमर्यादाः-शयनकक्षं बलात् प्रविष्टैः ।

आ गर्भवासात्परिचितः सादरेण सभ्येन सस्नेहेन व्यवहारेण सर्वेषां··· स राजा आनन्दपालस्तु···आदित एव विमनस्कोऽनुभूय तत् हठाज्जागरणं, आदित एवाप्रसन्नस्तेन तंद्राभंगेन दुर्लभमनः शान्तिविलोपकेन, आदित एव समुपजातप्रतिकूलमनोभावः अवलोक्य स्वपुरतः तं यवनदूतमुद्वमन्तमिव औद्धत्यं······यदाऽशृणोत् तत्पितृघातकस्य रात्रंदिनं मनःसंतापकरस्य द्वेषणस्य संदेशं······सुशब्दितमपि भावदुःसहं स्वेच्छामात्रसंसूचकं···तदा··· क्षणमात्रं जज्वाल अन्तर्बहिश्च निर्ज्वालं क्रोधज्वलनेनासह्येन,······प्रावर्तत च दातुं तथैव सुशब्दितमपि तथैवदुःसहं तत्प्रत्युत्तरं प्रत्याख्यायकम् ।

प्रवृत्तमात्र एव च विरराम सहसा तथाकरणात्···निवारितोऽकस्मात् मनसि तस्य समुद्भूतेन वितर्केणैकेन—'तातो मे द्वेषणेनानेन कपटेनासकृत् पराजितः······यमसदनं च प्रेषितः,······तर्हि······यदि नामाहं स्वयमपि कापट्यमेवावलंबमानः एनं पराजयेय ?······'शठे शाठ्यं'—इति हि राजनीतेः प्रथमः पाठः ।'

प्रावर्तत च कृतनिश्चयः······सिद्धहस्तः नट इव······तस्मिन्नेव क्षणे परिधाय स्मितं सादरं दासोचितं······चिरं जजल्प मधुरमधुरं······प्रकटयन् अहोभाग्यमात्मनः सम्राजा स्वसेवायां तथा नियुक्तस्य······प्रदर्शयंश्चात्मनस्तीव्रामिच्छां सेवितुं तं परंतपं स्वयमपि दत्वा सहकार्यं तस्य दिग्विजये सह स्वसैन्येन ।

प्रोत्साहितश्च निश्चयेन तेन······न मनश्चक्रे······निशम्य तस्य क्रीत-दासोचितं चाटुलोलं भाषणं यवनदूतस्य तस्य मुखारविंदे (!) सहसा प्रसृते सकुत्से स्मिते,······अनापृच्छ्यैव तदनुज्ञां, अनभिवाद्यैव तं, गर्वोद्धततरे सहांगरक्षकैस्ततो गमने,·····अविलंबमेव तदनंतरं स्वयं सहेतुकं सान्तःस्मितं प्रसारितां सहकार्यकरणाय यवनसम्राजः दिग्विजये स्वप्रस्थानवार्तां निशम्य राजधान्यां सहसा समुद्भूते विस्मये,······प्राप्याऽपि तन्निशामुखे प्रस्थान-स्याऽऽदेशं अपरद्युतनं यवनराजनेतृत्वे योद्धुमनिच्छुकस्य आत्मनः सैन्यस्य स्वतःस्पष्टे आलस्ये,······अपरेद्युः प्रस्थानसमये राजपरिवारे राजपरिजने राजप्रासादे राजधान्यां च घने धूमे इव सर्वतः प्रसृते च तिरस्कारे······ सुलक्ष्ये आननेषु निस्तेजस्केषु जनानां······कौतूहलात् मानवस्वभावसुलभात् द्रष्टुं तस्य कुलकलंकिनः प्रस्थानं तल्लोकविलक्षणं रथ्यासु आपणपरंपरासु प्रासादवातायनततिषु च कृतसंमर्दानां मूकमूकानां निश्चलानां······मनसि विचारयतामग्रिमं स्वपदक्षेपम् ।

समाकर्षंश्चानवरतम् एकाक्येव बलात् स्वां सेनां मूकमूकां निरुत्साहां लोहपादामिव मंदगतिं·····प्राप अन्ते तस्य दिवसस्य प्रखरतापस्य, संगम-स्थलं निर्जनं निम्नोन्नतं अविदितप्रायं तत्प्रदेशवासिनामपि ग्रामीणानां पंच-नदराजधानीमार्ग-मूलस्थानमार्गयोः ।

अकृतविश्राम एव च ततः प्रारभत प्रवासं (—स्वां योजनामनुसरन्—) मार्गेण मूलस्थानयायिना ।

प्राप्य च निःशब्दं······तृतीये प्रहरे घनतिमिरायाः निशायाः······ स्थलविशेषं तन्मार्गवर्तिनं·····विज्ञाय कूटाक्रमणसंकल्पं स्वस्वामिनः मार्गमध्य एव समुत्साहाऽऽपूरितेन तत्सेनापतिप्रमुखेन निर्दिष्टपूर्वं—अत्यंत-मुपयुक्तमाक्रमणायाऽऽकस्मिकायेति—अवलोकयामास तत् सत्यमेव तथा ।

विभेद्यैव हठात् आसमन्तिकं पार्वतं प्रदेशमग्रे यायिनः, मूलस्थान-मार्गस्य क्रोशार्द्धदीर्घं तत्स्थलं······उभयतोबद्धपार्श्वमुन्नताभ्यां कटकाभ्यां ······गण्डशैलैराकुलाकुलं······वीक्ष्य च······सहसाऽऽत्मविश्वासेनातीतेषु प्रहरेषु वेगेन क्षीयमानेनाऽऽपूरितः······आज्ञापयामास मंद्रेण स्वरेण स्वं सेनापतिप्रमुखं व्यूहरचनार्थं संकल्पानुसारम् ।

अवलोक्य च तेन·····विज्ञाय निभृतं कूटाक्रमणसंकल्पं स्वस्वामि-

नस्तस्मात् विस्मितानां तत्तत्सेनादलाधिकारिणां साहाय्येनाऽऽसमन्तिके तस्मिन् प्रदेशे तथा विरचितां,······तावत्या कालकलया कर्णोपकर्णिकया निशम्य कूटाक्रमणयोजनां आदित एव स्वस्वामिना संकल्पितां पुनरुज्जीवितामिव सोत्साहां,······रणावेशेन जयघोषं स्वामिनः कर्तुमातुरामपि स्मारंस्मारं आदेशान् नीरवतापरिपालनचोदकान् कथमपि धृतमौनां,······'अपेक्षितः यवनः स्वसेनया सह तृतीयेऽह्नि अत्र,······पर्याप्तः नूनं काल स्तदवधिकः मार्गश्रममपनयनाय सामर्थ्यपुनर्लाभाय। तथाऽपनीतश्रमा पुनर्लब्धसामर्थ्याऽहं अवसरेऽस्मिन् द्विषत्सेनां तथा नाशयिष्यामि यथा न एकोऽपि सैनिकस्तस्याः लभेतावसरं निर्गन्तुं मद्बाहुबन्धनात् कण्ठोपमर्दं निष्पीडयतः, कथयितुंच बाह्याय विश्वा घटनामत्रत्यां तथा नाशयिष्यामि तां यथा बाह्यं विश्वं तां भूम्या······सर्वंसहयाऽपि तत्पापभारमुग्रया······निगलितामिव निगीर्णामिव······मन्येत नूनम् इत्येवमादि मनोरथशतं मनसि कुर्वाणां,······शनैः शनैः स्वे स्वे दैनिके कार्ये प्रवृत्तां······स्वां सेनां अलभत् परमं समाश्वासम्।

अनवसिते एव······परंतु······तस्य निशाया अन्तिमे प्रहरे विलयम् आत्यंतिकम्-अहो-ययौ सः समाश्वासः तस्य······तले एकस्य महावृक्षस्य, जिजागरिषुपतत्रिगणकूजितव्याजेन निवारयत इव तं तथाकरणात्, कल्पिते साधारणसैनिकोचिते शयने पतितस्य······सन्ततजागरणप्रवासश्रान्तश्रान्तस्यापि विश्रमितुकामस्यापि कर्तुं तथाऽपारयतः······निबद्धलोचने आरक्ते क्लान्ते विस्मृतनिमेषे उत्तरस्यां दिशि सुलक्ष्ये निमेषोन्मेषाभ्यामस्फुटाभ्यां स्वतेजसः कथयति इव तं किंचिद्गूढं नक्षत्रे एकस्मिन् घटनाः पर्यालोचयतः ······भाव्याश्च संभावयतो व्युत्क्रमेण······क्षणे एकस्मिन् आशाशिखरमधिरोहतः अन्यस्मिश्च निराशागर्ते निपततः······शनैः शनैस्तंद्रायां निमज्जतः क्षणार्द्धे······समाकर्ण्य······तस्यामपि अवस्थायां······तुरगपदरवमिव······सुगोपितमपि सर्वतः प्रसृतायां नीरवतायां सुलक्ष्यं,······समाघ्राय च तुरगस्वेदगन्धमिव······प्रसरद्विविधप्राभातिकगंधसंमिश्रितमपि सुघ्रेयम्!

यावच्च समाशंकितचित्तः वितर्कितसंकटः सहसा समुत्थितः विस्फारितलोचनः पर्यालोचयति उद्गमनस्थानं तस्य तुरगपदरवस्य तस्य तुरगस्वेदगन्धस्य······तावत् आकर्णयामास कर्णाविदारकं गगनमिव स्पृशन्तं दिक्चक्र-

वालमिव चालयन्तं भूगोलमिव कंपयन्तारावम्……उपबृंहितं ह्रेषारवैराक्रामकानामिवापरिचितनां तुरगाणां आक्रान्तानामिव च स्वहयानां, संरवैश्चाऽऽक्रामकानामिवापरिचितानां योद्धॄणां आक्रान्ता-नामिव च स्वसैनिकानाम् !

यावच्च समुत्प्रेक्ष्य संकटस्वरूपं परिगृह्य स्वं खड्गं आरोहति स्वं तुरंगमं शृण्वन्तं तमाराममुत्कर्णं……'कः खलु आक्रामकः स्यात्'—इति दोलायमानचित्तः……तावत् शुश्राव……विदीर्य तं महान्तमपि कोलाहलं समुद्गच्छन्तं……संरावे तस्मिन्नपि स्वेन वैशिष्ट्येनाविश्लेषणीयेनापि अप्रत्यास्येयेन श्रोतृमात्रस्य भयभ्रान्तस्यापि युद्धाकुलाकुलस्यापि चित्तंहठात् समाकर्षन्तं……रणावेशतीक्ष्णमपि अनाकुलितम् आज्ञास्वरं……एकम् !

प्रत्यभिज्ञाय च तं……अनेकसंवत्सरपूर्वं श्रुतमपि एकदा……आम् ! तस्मिन् संधिवार्ताविसरे……असकृत्श्रुतमिव भासमानं……दुःस्वप्नेषु मर्म-पीडकेषु अनेकदाश्रुतं……बभूव सहसा निश्चलः……स्वतुरंगमस्कन्धनिहित-वामहस्तः……मूर्तिरिव !

'स्वरः……अयं'—चित्तं हि तस्य सहसा चुक्रोश कालसर्पदष्टमिव वेदनाविह्वलं……'तस्य……द्वेषणस्य !……महमूदस्य !……स खलु तर्हि आक्रमकः !……परंतु……सतु अत्रापेक्षितः……द्वित्रदिवसानन्तरम् ! ……अद्य……कथम् उपस्थितः ?…किं खलु समुत्प्रेक्ष्य मम कूटाक्रमणयोजनां त्रिगुणीकृतवेगः ?…… उत देशविघातकेन केनचित् कर्णे दष्टः ?…… मत्पितृघातकः अत्याचारी—'

स्मृत्वैव तस्यापराधं तं हठात् विच्छिन्नविचारतन्तुः……विद्युद्-वेगेनाऽऽरुरोह स्वं तुरंगमं चंचलं प्रज्वलदलातशतप्रकाशभीषणखड्गपाणिः, ……कुर्वंश्च कर्णकर्कशां रणगर्जनां……प्रावर्तत प्रेरयितु तं……दिशि तस्यैव स्वरस्य तावत्या कालकलया युद्धक्षेत्रे तत्र तत्र श्रूयमाणस्य……आतुरा-तुरः स्वीकर्तुं अध्वर्युत्वं रणयज्ञकुण्डस्य सद्यः प्रज्वालितस्य ।

प्रवृत्तमात्र एव……परंतु……अवलोकयामासात्मानं सर्वतः परिवृतं पंचषैः तद्व्यक्तित्वसुपरिचितैरिव तं बन्दीकर्तुं उत्सुकैः चतुरतमैः यवन-सैनिकैः ।

युद्धमानश्च तैः सह……सर्वतःप्रसृतालातसहस्रप्रकाशनृत्यदात्मछा-

यामाद्वितीय·····सर्वतो व्यापारयायास आत्मनो दृष्टिं·····दिदृक्षया तत्पितृघातकस्य।·····अवलोकयामास परंतु सर्वतः स्वान् सैनिकानेव तुरंगमानधिरूढान् आकस्मिकाक्रमणात्मरक्षाप्रयासाकुलाकुलान् अपनीत-कवचान् निःशस्त्रप्रायान्·····प्रतिक्षणं छिद्यमानान् आहन्यमानान् विदीर्यमाणान् संख्ययाऽनधिकैरपि तुरंगमानधिरूढैरपि कवचोपनद्धैः सशस्त्रैः पूर्वसंकल्पितसुनियोजिताऽऽक्रमणदुःसहैः यवनसैनिकैः·····निर्दयम् !

अवलोक्य तान् तदवस्थान् प्रतिक्षणं धरायां शयानान् अपुनःप्रति-बोधाय विनैव विरोचितं युद्धं, स्मृत्वा च तेषां उत्साहमतीते एव प्रहरे सीमाः सर्वा उल्लंघयन्तं शत्रुजिगीषुणां सहसा खेदाक्रान्तोऽपि·····जगर्ज सः उच्चैः सिंहगर्जनां आपूरयितुं तां रणोत्साहेन·····बहिराजगाम तस्मात् यवनसैनिककुण्डलात् हत्वा सर्वानपि तान् सैनिकान्·····प्रावर्तत च····· आरोढुं विभ्रष्टसादिनं स्वसमीपत एव कान्दिशीकतया धावन्तं भय-विस्फारितेक्षणं कमपि अश्वमेकमपरिचितम्·····कृतनिश्चयः नेतुं तान् दिशि विजयश्रियः·····कौतूहलेनावलोकयन्त्या असमं तं समरप्रसंगम्।

प्रवृत्तमात्र एव कर्तुं तथा·····आकर्णयामास पृष्ठतः सवेगमागच्छतोर-श्वयोः कयोश्चित् खुररवं,·····निरुच्छ्वासं श्वसतोः कयोश्चित् तदारोहयोः श्वासोच्छ्वासशब्दं,·····इयेष व्यावर्तयितुं मस्तकं स्वं जिज्ञासया तस्मिन्नेव क्षणे आविर्भूतया·····न तु शशाक कर्तुं यथाभीप्सितम्।

अपरस्मिन्नेव हि क्षणार्द्धे···अनुबभूव सः तडिदाघातवेदनामिवातितीव्रां पीडां कूर्परे स्वे वामेतरे,·····ददर्श विस्फारितलोचनः स्वं तं भुजार्द्धं, छुरिकया निशितया लूनमिव, विलुट्य सहसा कूर्परादधः रणांगणे वसामांसासृक्कर्दमिते निपतन्तं,·····आकर्णयामास एकं यावनमिव सैनिकं विजयोन्मत्तं,·····अपरंच परिचितमिव भारतीयं सैनिकं–'नीच!' इति सावेषं तं संबोधयन्तम्।

'कस्य खलु परिचितस्येव स्वरोऽयं?'–इति बुभुत्सया·····तीव्र याऽपि सर्वतः प्रसरन्मूर्च्छातिमिरे सवेगं लोपमात्यन्तिकं यान्त्या····· यतमान एव व्यावर्तयितुं स्वं मस्तकं तद्दिशि·····सहसा ममज्ज निवि-डेन्धकारे मोहस्य सर्वविलोपकस्य।

न च शशाक·····लक्षयितुं·····पार्श्ववर्तिनं तं यवनसैनिकं भारतीयेन

तेन सैनिकेन उरसि खड्गेन विदीर्यमाणं,'अहह!' इति अस्फुटास्फुटं गदन्तं, अश्वात् अधःपतन्तं,···प्रत्यभिज्ञातुं समीपतममागतं तं भारतीयं महाप्रमाणं सामान्यसैनिकवेषधारिणमपि सहजप्रत्यभिज्ञेयमहाकुलसंभवं सद्यःसमाक्रान्त-कैशोर्यावस्थमपि हिमाचलाचलात्मविश्वासपूरितमिव भासमानं 'सुहृदयं मम धर्मस्य·····अभिन्नहृदयः·····देवपाल' इति,·····अनुभवितुमधःपतन्तं स्वं देहं तं स्वेन भुजेन सत्वरं प्रसारितेन धरन्तं धृत्वा समुत्थापयन्तं, समुत्थाप्य तुरगे स्वे संस्थापयन्तं संस्थाप्य च वेगेन वहन्तं तं लम्बमान-मस्तकमेवार्द्धमीलितनयनमेव·····बहिस्तस्मात् रणक्षेत्रात्···प्रतिक्षणमाहन्य-मानानां हन्यमानानां भारतीयानां सैनिकानामाक्रोशैः करुणकरुणैः, प्रतिक्षणं समीपतरं समीपतमम् आगच्छन्त्या विजयश्रियः स्वागतमिव कर्तुं घर्घर-घोषं जयनादं कुर्वतां यवनसैनिकानां जयघोषैः कर्णविदारकैः, स्वयं तत्र तत्राहतानां वियुज्य स्वस्वामिभ्यः विस्फारितनासारन्ध्रमाकुलाकुलं धावतामश्वानां भयतीव्रैः ह्लेषारवैः, उद्धृत्योद्धत्य गण्डस्थलनिःसरद्रुधिर-धाराक्लिन्नं शुण्डादण्डं असकृद्विधूय स्वं पुच्छदण्डं स्वपक्षीयानेव सैनिकान् प्रायः मारयतां द्विरदानां बृंहणैश्चाऽऽकुलाकुलान् ।

द्वेषणस्तु तस्य·····निरीक्ष्यावशिष्टां समस्तामपि भारतीयां सेनां समवलोक्य स्वं स्वामिनं तथा उह्यमानं सहसा विगलितधैर्यविशेषां 'यः पलायते स जीवति' इति नीतिमेव कापुरुषोचितामवलंबमानां संजात-संतोषोऽपि·····दूरदर्शितया तत्क्षणमेव नियंन्त्रयामास स्वां विजयोन्मत्तां सेनां तदनुधावनात्,···तोषयामास तां अनुभूय तन्नियंत्रणं किंचिद्हतोत्साहा-मपि तदादेशमनुल्लंघनीयं धैर्येण महत्तां शिरसि कुर्वाणां प्रदाय तस्यै स्वां दुर्लभामनुज्ञां लुण्ठयितुं मार्गे पतन्तं शत्रुप्रदेशं यथेच्छं,·····आरभत च····· सह मयाऽधिगत्य तामनुज्ञां उत्साहेन द्विगुणितेनाऽऽपूरितया·····आक्रमितु-मध्वानं मूलस्थानराजप्रदेशयायिनं·····ईषदपि अविस्मितः मार्गलब्धेन तेन अवान्तरविजयेन·····ईषदपि अविपालितः सुनिश्चतपूर्वात् स्वलक्ष्यात् ।

दिवसैश्च कतिपयैरेव·····आविर्बभूव पूरतः राजधान्याः·····आहित एव रणभीरुस्वभावस्य तत्रापि निशम्य पंचनदराजस्य रणभंगवार्त्तां विद्युदवेगेन सर्वत्र प्रसृतां (—चतुरेण मनोवैज्ञानिकयुद्धकलाकोविदेन यवन-राजेन वस्तुतः साभिप्रायं सर्वत्र प्रसारितां—) खिन्नस्य, तत्रापि

आकर्ण्याकर्ण्य प्रतिप्रहरं समापतती: विजयोन्मत्तयवनसेनाया: सवेगं मार्गं- आक्रमन्त्या: मार्गंपतत् शत्रुप्रदेशलुण्ठनवार्ता: भयावहा: भयविह्वलस्य, पिधायार्द्धमृतस्वनगरप्राकारमहाद्वाराणि, आश्रित्य मूषकनीतिं प्रासादे स्वे निरुच्छ्वासमवलीनस्य······मूलस्थाननराधिपस्य······फतेह् दाऊदस्य !

आडंबरेण च महता (स्वे उत्तुंगे प्रासाद दिवाभीतेनेव निलीनेन कंप- मानगात्रेणोच्छुष्कमुखेन फतेह् दाऊदेन सहृदयपरिस्पदमवलोक्यमानेन- दृढं खलु विशस्वास स:) सर्वत: कुण्डलीकृत्य निरुच्छ्वासं तद्राजधानी- प्राकारं शून्यशून्यं च······आरभत निराकुलेनात:करणेन प्रतीक्षितुं शरणा- गतिमवश्यंभाविनीं मूलस्थानराजस्य निरपवादाम् ।

इयान् प्रसृत आसीत् चतुर्दिशं आतंक: वयसाऽनतिप्रौढस्यापि परा- क्रमेण प्रौढतमानपि वीरान् अतिशयानस्य तस्य, इयान् प्रताप: निर्द्वंद्वस्य संख्ययाऽनतिमहतोऽपि आत्मविश्वासेनानुशासितव्यवहारेण युद्धकौशल्येन च महत्तमानि अपि सैन्यानिन्यक्कुर्वाणस्य तत्सैन्यस्य,······इयांश्चातंक: निर्दययोस्तयोरुभयोरपि दत्वा तिलाञ्जलिं कारुण्याय परधनलुण्ठकयो: ······यत् प्रतीक्षा सा तस्यान्तनियाय तृतीय एवाहनि ।

अवलोकयामास हि स: मध्ये एव तस्य······पटप्रासादस्य स्वस्य भव्यस्य रमणीयस्य स्वर्णकलशभूषितशिखरस्य स्वसैन्यनिवेशमध्यमलं- कुर्वाणस्य विश्रामकक्षे शय्यायां सुखं शयित्वा वातायनात् तस्य परराज- धानीप्राकारमहाद्वारं अलसालसं निरीक्षमाण:······किंचिदपावृतात् तस्मात् निर्गच्छन्तं एकाकिनं नि:शस्त्रमाबद्धकरयुगलमधोमुखं पद्भ्या- मेव निर्जीवाभ्यामिव जडाभ्यां तन्निवेशं समुद्दिश्याऽऽगच्छन्तं······पुरुषवि शेषम् एकम् ।

अनुमाय च तं 'शरणं मामागन्तुं आतुरस्य तस्य दाऊदस्य अयं दूतो विशिष्ट:' इति प्रतिपालयामास तदागमनं सोपहासं स्मयमान: न प्रादात् तस्मै दर्शनं याचमानायानुज्ञां सद्य एव तत्सेवायामुपस्थातुम् अन्ते च तस्य प्रहरस्य······कृते तस्य वराकस्य दीर्घदीर्घस्य······महत्तरात् कार्यान्तरात् कथमपि उपलब्धावकाश इव······अन्वमोदत द्रष्टुं तम् । ······दृढाऽऽबद्धौष्ठ पुटपिहितहासश्च······कठोरमुखमुद्र:······आकर्णयामास तन्मुखारविन्दात् भयातिरेकवशाद्विवर्णभावमुपगतान् स्वामिनस्तस्याभ्यर्थनां कातरां

जीवनदानस्य:······विचार्य च सुदीर्घं प्रादात् तां तस्यै······निन्दित्वा तमादौ कटु ईस्माइलीसदृशस्य धर्मबाह्यस्य संप्रदायस्याधमस्य स्वीकारमधिकृत्य, प्रतिपादयित्वा च तदनंतरं आवश्यकतां ऐक्यस्य सर्वेषां यवनधर्मानुयायिनां भारतवर्ष सदृशे मूर्तिपूजके देशे सद्धर्मप्रसारार्थं महतोत्साहेनाऽऽगतानाम् ······प्रादात् तां तस्यै······परंतु सापेक्षाम्:······प्रकटयामास च ताः अपेक्षाः ······व्योमगगनाम्बराकाशनयनसहस्रमितस्वर्णमुद्राप्रदान् तद्वशंवदीभाव स्वीकार ईस्माईलीसंप्रदायसद्य :परित्यागरुपाः······विस्पष्टम् ।

प्राप्य जीवनदानं स्वस्वामिनाऽभ्यर्थितं दुरापं स्वयं विनष्टोपलब्ध जीवनाशे इव प्रफुल्लितमुखमुद्रे तस्मिन् राजपूते चालयित्वा स्वं लाङ्गूलम् अवलिह्य तच्चरणरजःपटलं स्पृष्ट्वाऽसकृन् प्रणमता स्वशिरसा धरणीतलं सर्वा अपि अपेक्षाः जीवनदानसंबद्धाः······च······अदर्शनं याते चाटुवचनवाचालेऽपराङ्मुखेऽधोमुखे······एकाकी······चिरं जहास निःशब्दं समाधानाधिक्षेपादिविविधभावनाऽऽलोडितहृदयः ।

ममज्ज······परन्तु······अन्ते एव तस्य प्रहरस्य······संयमितस्वन्तः गहने विचारणे स्वस्य भाविनः कार्यक्रमस्य,

'मनुष्यसंख्यामतिवर्तितुमभियोगभाजो' हि न सहन्ते कालापव्ययम् आहोपुरुषिकायां सामान्यजनप्रियायाम् ।

तस्थौ च तथा मग्नः······चिरम् ।

दृढं खलु इयेष तस्य हृदयं······अतृप्तमिव विजयेन तेनानायासलब्धेन ······निर्वातितु तस्मात् मूलस्थान्प्रदेशात् कापुरुषबहुलात्······अनुधावितुं तं विश्वासघातिनमपि अप्रत्याख्येयपौरुषं पांचनदप्रदेशराजमानन्दपालं केनचित् सैनिकापसदेन तदीयेन रणक्षेत्रात् तस्मात् काश्मीरप्रदेशं (अकथितमेव तत् हि स्पष्टमासीत् कृते तस्य तीक्ष्णमतेः ।) नीतं,······दण्डयितुं तं प्राणदण्डेन,······स्थापयितुं च कृत्वा तथाऽविस्मरणीयं उदाहरणं पुरस्तात् सर्वेषां अपि भारतीयराजानां······कर्तुं तद्विश्वासघातं भाविनि काले धृष्णुवताम् ।

दृढं परंतु तस्य विवेकः न्यषेधत् तस्य तामिच्छां······सदा जागरुकः ······सदाऽप्रमत्त······सदा सत्यद्रष्टा······अत्यधिकमहत्वाकांक्षामात्रप्रेरितां ······वास्तविकस्वबलाबलविचारासहां······स्यान्नाम अन्ते घोरानर्थं

वहामिति ।

यौवनसुलभोत्साहसपत्संपन्नोऽपि प्रकृत्यैव संतुलितमतिः सः यवननरपतिश्च यावच्चिन्तयति प्रतिनिवर्तितुं स्वं गृहराज्यं, संवर्द्धयितुं स्वं बलं तत्र, कर्तुं च तत् काश्मीरसदृशदुर्गमराज्यप्रदेशाक्रमणसमर्थं·····तावदुपतस्थौ सेवायां तस्य एकः महाप्रमाणः सशस्त्रः प्रवृद्धश्मश्रुजालभीषणतरमुखमुद्रः अनवरतप्रवासपरिश्रान्तोऽपि महासत्वतया तज्जनितं खेदं मनसि अकुर्वाणः हितमितवचनः अतिविश्वसनीयः दूतविशेषः तद्राजधानीतः·····सह संदेशेनातिगुप्तेन तदमात्यप्रमुखसंप्रेषितेन·····आदित एवानियंत्रितस्वभावदुःसहानां, कशाहस्तेन तेन नियंत्रणे स्वे महता प्रयत्नेन स्थापितानां, दीर्घकालिकतदनुपस्थितिप्रवृद्धसाहसानां, पैतृकस्य तद्राज्यस्य औदीच्यायाः सीमायाः परस्ताद्वर्तिनां, संततभ्रमणशीलानां, वन्यानां तुरुष्काणां, अहरहः वर्द्धमानमुद्वर्तनं आन्तरिकव्यवस्थाविलोपकं निवेदयता·····प्रार्थयता च तत्प्रत्यागमनं सत्वरं तच्छासनाय ।

अकुप्यच्च क्षणमात्रं आकर्ण्य तं संदेशं रहसि–'ख्वाजा अहमद बिन् हसन मैमंदी-सदृशः अनुभवसमृद्धोऽपि प्रधानामात्यः न धृष्णोति-शासितुं अंगुलिगणनीयान् असभ्यान् बर्बरान् स्वयम्'–इति कृत्वा मनसि ।

न तु साक्षादकरोत् मनोवैज्ञानिकमाधारमापातविचित्रस्य तस्य परावलम्बित्वस्य ।

न तु साक्षादकरोत् आत्मानं·····सर्वविधं शासनभारं साग्रहं साभिनिवेशं स्वयं वहन्तं·····तदुत्तरदायित्वेन ।

कुपित एव च·····कृतप्रतिनिवर्तननिश्चयः·····'प्राप्तस्य गतिः चिंतनीया'–इति न्यायमविदन्नपि अनुसरन्, (-बुद्धिमत्तो हि···भाषाधर्मदेशकालादिभिर्भेदैः विभक्त अपि परस्परतः·····समानासु परिस्थिषु समानमेवाऽऽचरन्तो दृष्टाः–) अयुनक् स्वं चित्तं तदनुकूल-पदक्षेप-चिन्तायाम् ।

सर्वप्रथमं आशंकमानः अपायं संदेशात् तस्मात् परदेशे तस्मिन् सर्वविदितान्·····अपायं बाह्यम्·····आभ्यन्तरिकं च·····न्यषेधत् संदेशवाहकं तं तत्स्फोटनात्,···व्यसृजत् तं विश्वासार्थं,···न्ययोजयत् गुप्तचरान् तदपरिचितान् तत्सेवकमिषेण पर्यवेक्षितुं तद्व्यवहारं निवेदयितुं च तस्मै

सत्वरं स्वल्पमपि वैलक्षण्यं तदव्यवहारे आशंकितमात्रं (-सर्वतोऽपाया-शंकिनो हि राजनीतिचतुरा:–,.....आरभत च चिन्तयितुं स्वनुकूलतमां व्यवस्थां सद्योविजितस्य भारतीयस्य प्रदेशस्य.....अवश्यंकर्तव्यां प्राक् प्रतिनिवर्तनात् ।

प्रवृत्तस्यैव च तस्य सा चिन्ताभ्राऽऽच्छन्ना मुखमुद्रा सहसा प्रसादं उपागच्छत। अनुकूलतमा हि एका व्यवस्थाऽस्फुरत् तस्य मनसि अकस्मात् ।

प्रत्युत्पन्नमतयो हि राजनीतिचतुरा:

न परंतु पर्यणमयत तां कार्यं पेण सहसा।.....चिरं पर्यालोचयत तस्या: अनुकूलप्रतिकूलौ पक्षौ.....स्वयमेव,.....अवगणयन्.....अहंमन्य:... परपरामर्शम् ।

विनिश्चित्य चान्ते तामधिकतरलाभप्रदां.....प्रसन्नमुखमुद्र: समादिशत् आकर्ण्य तद्घण्टानादमन्त:प्रविष्टं विनतमस्तकमधोनयनं महाप्रमाणं चिकुरिलमस्तकं मसीवर्णं स्थूलौष्ठसंपुटं कृष्णद्वीपाद्बन्दीकृत्य तद्बाल्या-वस्थायामेव जनकेन सुगृहीतनामधेयेन सुबुक्तिगीनेनाऽऽनीतं, तस्मै उपायनीकृतं, चिरसहवासात् तत्परमविश्वासपात्रीभूतं दासं आनेतुं सादरं नवासशाहं तत्पुरत: ।

स्वविनिश्चितताया व्यवस्थाया: लाभान् बहुविधान् पर्यालोच्य अधिकाधिकं हृष्यन्नव,.....समुत्प्रेक्ष्य नवासशाहस्य मनसि समाकर्ण्य तस्य तां व्यवस्थां नियतं समुद्भविष्यन्तीं विस्मयलहरीं मंदं मंदं हसन्नेव,...... अनतिदीर्घं कज्जलकृष्णं मृदुलमृदुलं मन्दसुगंधिनं स्वं श्मश्रुपाशं करतलेन दक्षिणेन वारंवारं परामृशन्नेव.....अपश्यत् स्वपुरत: नि:शब्दं समुपस्थितं ......मनस इव तस्य बहिरागत्य तत्संमुखीभूतं.....अवनतोत्तमांगं आबद्ध-कराञ्जलिं यवनसामन्तवेषधरं श्मश्रुलमुखं तच्चरणयुगलनिगडितलोचनं नवासशाहं.....आम्!.....साक्षादात्मजं तस्य द्वेषणस्याऽऽनन्दपालस्य, त्यक्त्वा स्वजनकपक्षं, त्रोटयित्वा सर्वान् स्नेहपाशान् दत्वा तिलांजलिं स्वधर्माय मूर्तिपूजकाय, अविगणय्यावश्यंभाविनं लोकापवादं, तस्य धर्मं... "कमात्रं सत्यं धर्मं–सत्यनिष्ठावशात्–अंगीकृतवन्तं, कतिपयेष्वेव व्यतीतेषु संवत्सरेषु स्व-बहुमूल्य-भारतीयनृपसंबद्धान्तरिकभेदज्ञान-प्रदानस्य स्व-

भारतीयसैन्यदलसंगठनचातुर्यस्य निरलसस्य च सेवाभावस्य बलात् तस्य परमविश्वासास्पदीभूतं सद्यश्चिंतितव्यवस्थायाः मूलाधारं·····नवासशाहम् !

अवदच्च तं···सहसा स्नेहस्निग्धमुखमुद्र···विनिर्दिशन् स्वमंचकस्यार्द्धं भागं–'एहि !·····एहि····· !·····उपविशात्र'–स्वं सहोदरमिव (–स्वः सहोदरः वास्तविकः तेन आजीवनकारावासे निक्षिप्त आसीत्–इति तु अन्यदेतत् !–)

बहुमानयित्वाऽपि तत्प्रणयमतिदुर्लभं अवनमय्य स्वं उत्तमांगं अधिकतरं···तदधीनराजपुरुषोचितं किंचिद्दूरवर्ति आसनमेवैकमंगीकृतवन्तं, पूर्ववत् तच्चरणयुगलनिगडितलोचनं च तं···अगदत्–'प्रस्थास्यामहे···शाह !···वयं श्व एव···समुद्दिश्य आस्माकीनां राजधानीम्!'

निशम्य तां वार्त्तां (–स्यान्नाम अनपेक्षिताम्–) किं खलु स यवनसामन्तः अचिंतयत् स्वमनसि इति तु कठिनं कथयितुम् । मुखमुद्रा परंतु सा तस्य पूर्ववदेव तस्थौ·····स्वस्वामिनः निर्देशान् प्रतीक्षमाणस्य, कार्यरुपेण परिणमयितुं तान् सदासन्नद्धस्य सेवकस्य मुखमुद्रा·····स्वस्वामिसान्निध्यमात्रतृप्ता·····अनपेक्षमाणा किमपि अन्यत् पारितोषिकं

(-यदि हि पिता तस्य अद्रक्ष्यत् तां·····आत्मघातमेवाकरिष्यत् सः·····ग्लानिभारभुग्नः! ·····यदि च भ्राता·····तद्घातमेव,····· संतप्तः !–)

'अभियानमेतत् अस्माकीनं साफल्यमधिकतरमध्यगच्छत् संकल्पितापेक्षया !'–क्रीडन्नाम स्वांगुलीयकरत्नेन रत्नदीपप्रकाशेऽसकृन् प्रकाशमानेन ·····(सूचयतेव तं किमपि किमपि–)–आह स मंद्रमंद्रेण स्वरेण ।····· 'न खलु एतत् केवलमदण्डयत् दाऊदमुद्वृत्तं असन्मार्गानुगमनमवृत्तं,····· अपितु-अबोधयत् जयपालपुत्रमपि यद् वचनभंगः -सोऽपि महमूदप्रदत्तवचनभंगः–सर्वथाऽनिष्टकर इति ।

'यथाऽऽज्ञापयति सम्राट्'–आह नौशाहः·····क्षुत्वाऽपि तथा साधिक्षेपं स्वपितुः नाम्नः उल्लेखं अविचलितमुखमुद्रः

'न खलु मंदधीः·····अनुभूयापि असकृत् पराभवं र–

णांगणेषु·····संजातः परिचितः सुष्ठु अस्माकं सेनायाः शौर्येण

'लोकविलक्षणया तन्नायकस्य समरकुशलतया प्रत्युत्पन्नमतिसंपदा च–सकौतुकमवलोकयन् सम्राट्वदनकमलं,'–आह नौशाहः ।

'मित्रसंपदा च परमेश्वरेण परमोदारेण तस्मै प्रदत्तया'–प्रत्याह सहेतुकं यवनराजः ।

अनभिज्ञ इव तत् प्रशंसायास्तद्वाक्यध्वनिताया अतिदुर्लभायाः······ तस्थौ स भालदर्शी······मूकः,······सारमेय इव······पूजकाभ्यां नयनाभ्यां सभाजयन् स्वं स्वामिनम् ।

'न खलु एतन्मधुभाषणम् ।······नहि अयं महमूदः विश्वसति मधु-भाषणे ।······अपि तु–वास्तविकवस्तुस्थितिपर्यालोकनम्,'–आह तत्स्वामी । 'विना तव निरंतरेण निरलसेन परिश्रमेण······अभियानमास्माकीनमेतत् साफल्यमेतादृशं न कदापि अध्यगमिष्यत्······श्रेयः एतस्य······वस्तुतस्तव सहकार्यस्यैव ।······(सावेगमिव)–सत्यं ब्रूमः······शाह !······अनेकान् अद्वितीयान् मणीन् अस्याः स्वर्णभूमेः अनयाम वयं,······परंतु–सर्वानपि तान् अतिशेषे त्वम् !'

'स्नेहः खलु मुखरयति सम्राजं एवम्'–आह अवनततरोत्तमांगः तत्-सेवकः ।

'एकमेव तु विशेषम् अभियानस्य सद्यः समाप्तिं नीतस्य······अस्मा-भिरपि अनुत्प्रेक्षितपूर्वं······नापारयाम ज्ञातुं याथार्थ्येनाद्यावधिपर्यन्तं······ प्रयतमाना अपिबहु'–अवदत् यवनसम्राट् उद्विग्न इव ।

अकस्मात् स्वयमपि उद्विग्न इव······आरभत नवासशाहः······प्रती-क्षितुं उद्वेगकारणं स्वामिनः ।

'आनन्दपालः······सः······कथं खलु अपारयत् ज्ञातुम् आस्माकीनस्या-भियानस्य वास्तविकमुद्देश्यम् ?······अधिगन्तुं वा तस्य मार्गम् ?······ सुगोपितं हि तद्द्वयमपि आसीत्······अस्माभिः !'

अक्षिपत् इव सः यवनसामन्तः निभृतमेकं कटाक्षं दिशि स्वामिमुखस्य, अवलोक्य च तत् चिन्तामग्नं सहसा सुगोपिताकारः अतिष्ठत् पूर्ववदेवा-धोमुखः ।

'वयं,······त्वं अस्माकमभिन्नहृदयः सुहृत्,······सेनापतिः प्रधानः, अस्माकं वंशपरंपरागतः सेवकः, परमविश्वासभाजश्च तदधीनाः केचन

सेनादलाध्यक्षाः……एते एव……रहस्यमेतत् अविदन् आदितः……पंच… षड्वा……'

'अस्ति खलु एका सूक्तिः एतेषां मूर्तिपूजकानां अर्थनीतौ……अन्यथा मूर्खनीतौ……'षट्कर्णो भिद्यते मंत्र' इति'–समुपजाताश्वास इव मध्ये एवाब्रवीत् तत्सामन्तः।

'कथं खलु सः दधर्ष आक्रमितुमस्माकं सैन्यं कूटाक्रमणेन लोक-विलक्षणेन……एतदपि'।

'सत्यं ब्रूमः……शाह !……यदि नामास्माकं सहजमतिः नाकथयिष्यद् अस्मान् आक्रमितुं तद्राज्यप्रदेशमध्यपातिनं मार्गं एतत्स्थानयायिनं निर्धारितात् समयात् पूर्वमेव……जुगुप्सितुञ्च तदपि……(तर्हि……), (सकटुस्मितं) अभियानस्यास्य सर्वथा विपरीतमेवाभविष्यत् फलम् !'

'अपि स्मरसि……शाह ?'–अपृच्छच्च स उन्मुक्तहासः, '……त्वमपि अमंस्थाः तदा त्वरामस्माकं अनावश्यकीम् ?'

कथं खलु एतज्जनसदृशः दासानुदासः…क्षमेत तथा द्रष्टुं अनागतं… यथा स्वामी ?'–तत्सामन्तः,……क्षणमात्रं पुनः साशंकचित्तः।

'भवतु।……अधुना……सांप्रतिकस्यानागतस्य चिन्तां कुर्मः'–सपदि स्मारित इव कालातिपातस्य,……संयमयन् अतीतस्मृतिप्रवाहं आह स यवनेश्वरः……'वयं तर्हि प्रस्थास्यामहे श्व एव……समुद्दिश्याऽस्माकीनां राजधानीम्……अतिमहत्वपूर्णं कार्यमेकंतत्रत्यं स्वयं विदधातुम्,……तव कृतेऽपि संकल्पितमस्माभिः तत् समानमहत्वं अन्यत् कार्यम्……अत्रत्यम् ! ……संतुष्टाः खलु वयं तव व्यवहारेण निर्मलेन, चारित्र्येण निष्कलंकेन साहाय्येन च निरपेक्षेण।……अतः सूचयितुं अस्माकं संतोषं……अस्माकं प्रसादं……प्रयच्छामः तुभ्यं राज्यपालपदं (–आसमन्तादवलोक्य–) एतस्य सद्योधिगतस्य भारतभागस्यास्मत्साम्राज्यान्यतमप्रान्तरूपेण संगठितस्य !'

'परंतु'–चकितचकितः निशम्य स्वामिनः सर्वथाऽनपेक्षितां तां समुद्घोषणां……आरभत सः यवनसामन्तः प्रतिवक्तुं किमपि।

'अलं परंतुवादेन'–रुन्धानस्तं स्वाक्षेपप्रकटीकरणात्, मध्ये एवाह यवनसम्राट्।……'जानासि त्वं एतावता कालेन……अयं महमूदः…… असहिष्णुः परंतुवादस्य।……अनुरोधोऽपि अस्य……आदेश एव।'

लुप्तवागिव जोषंभावं आश्रित्य तस्थौ यवनसामन्तः।

'अपि च'–अनुनयन्निव विमनीकृतं तमग्र उवाच यवनेश्वरः, 'उत्तरदायित्वमेतत् त्वत्स्कंधे सक्षमे विनिक्षिप्तं……वोढव्यं त्वया न केवलमस्मत प्रसादव्यंजकमिति……अपि तु–अत्यधिकं कठिनं…अतश्च त्वत्स्वीकाराहंमित्यपि।……अस्मत् संतोषप्रदस्य एतन्निर्बाहस्य कृते एतद्देशज्ञानं मौलिकं,……एतद्देशीयजनमनोभावपरिचयः प्रगाढ़ः, बुद्धिस्तीक्ष्णा सर्वंग्राहणी, मतिश्च प्रत्युत्पन्ना……सर्वमपि अत्यावश्यकम्।……तच्च विद्यते त्वयि……प्रचुरमात्रायाम्।……स्थित्वाऽत्र……वहन् एतदुत्तरदायित्वं…… त्वं……शाह !……तथा उपकुर्याः अस्मद्ध्येयं……यथा न कदापि…… स्थित्वा राजधान्याम् !'

(वातायनात् बहिः नैशे गगनैकदेशे नक्षत्रे एकस्मिन् निबध्य स्वां दृष्टिं) '……अभियानानि अद्यावधिपर्यन्तिकानि आस्माकीनानि अस्यां स्वर्णभूमौ उपोद्घातमात्रस्वरूपाणि।……गभीरतराणि…गहनतराणि… तु……भावीनि इतःपरं……, (निःश्वस्य)……अभियानानि बकधूर्तमूत्युपजीवक-पूजकवर्गवञ्चितेभ्यः एतद्देशीयेभ्यः साधारणेभ्यः जनेभ्यः सत्यधर्मप्रदर्शनेच्छामात्रप्रेरितानि।……दृढः अस्माकं विश्वासः–यदभियानेषु तेषु साफल्यमभूतपूर्वमधिगमिष्यामः…तव साहाय्येन तव…दृढमवस्थाय अत्र, प्रयुज्य कूटनीत्युपायान् भारतीयान् एतान् अत्रत्यान् नृपब्रुवान् अहर्निशं प्रेरयतः अपव्येतु स्वं सामर्थ्यं पारस्परिके कलहे क्षुद्रनिमित्तके…सामर्थ्यं… एकीभावमापन्नं सत्……अस्माकं कृतेऽपि अजय्यम् !'

एतावन्तो भावनाकल्लोलाः…महत्वाकांक्षाप्रवातोत्थापिताः…समुद्भवन्त मनसि तस्यैवं किमपि किमपि वदतः, स्वभावेन मितभाषिणः, यवनाधिपस्य……भावनाकल्लोला कादाचित्काः……तदन्तरतममनोरथव्यंजकाः……यत् वर्षैस्तावद्भिः स्वभावेन तस्य……स्वेनैव…परिचितस्तस्य स सामन्तोऽपि परं विस्मयमन्वभवत्।

साक्षात्कृत्य तान् भावकल्लोलान्……तत्कृते सर्वथाऽपरिचितान्…… कीदृशा भावनाकल्लोलाः समुद्भवन्त मनसि तस्य यवनसामन्तस्य–एतत्तु अशक्यं नूनं वक्तुम्।……परंतु–शक्यं तु कथयितुमेतत् निःसंदेहं यत् तत् स्वमनोरथविस्तारं मुखात् स्वस्वामिनः…साधारणतया नात्मनिवेदिनः……

श्रुत्वा आविरभवन् विविधाः परस्परविमर्दिनः भावनाकल्लोलाः शोभने मुखारविन्दे तस्याशोभनस्यांकुरस्य······प्राचीनतमस्य सुविख्यातस्य पांचनदीयस्य राजकीयस्य वंशस्य,······तिरस्कृत्यैहलौकिकापवादभारं पारलौकिकपापभारं च यावनं धर्ममंगीकृतवतः यवनसामन्तस्य······भूतपूर्वस्य सुखपालस्य······सांप्रतिकस्य नवासशाहस्य······कल्लोलाः भावनानां······ विस्मयाभूतपूर्वविपद्बोधवज्रसंकल्पनिभानाम् ।

एतावता संवेगेन समुद्बभूवुः ते कल्लोलाः······अवस्थाय च क्षणार्द्धं··· तिरोबभूवुः अत्यन्तं······यत्······न ते विषयीबभूवुः अवधानस्यातिसूक्ष्मसंवेदनक्षमस्यापि यवनाधिपस्य ।

न ते विषयीबभूवुः तस्यावधानस्य······स्वान् मनोरथान् निर्मर्यादान् स्वेन मुखेन नातिसुदर्शनेनापि तत्क्षणेऽभूतपूर्वोल्लासोल्लसता स्वौ कर्णौ उन्मुक्तभावं भावयतः,······क्रियायाञ्च तस्यां आत्मप्रकटनरुपायां अननुभूतपूर्वसदृशमानंदं नूतनं अनुभवतः,······तिरस्कुर्वतश्च आनन्दोल्लासे स्थल-काल-व्यक्तिविवेकम् आजन्मनः स्वसहचरम् ।

यच्च विषयीबभूवावधानस्य तस्य······बहोः कालादनन्तरं प्रकृतिं स्वां पुनरापन्नस्य······आसीत् तत् एकछत्रं साम्राज्यं साश्चर्यस्य सादरस्य सकौतुकस्य पूजकभावस्य दासानुदासोचितस्य······मुखे स्वसामन्तस्य ।

'तत्······शाह्!······'समाहरन् स्वं दीर्घदीर्घं (-आत्मगतमिव-) भाषणमाह सः,······'अवस्थास्यसि अत्र त्वं प्रतिनिधित्वेनास्माकम्!······ अवस्थास्यसि······चिन्तयिष्यसि अस्मत्संकल्पानुकूलान् सूक्तासूक्तान् उपायान्······कार्यरूपेण परिणमयिष्यसि च तान्······हुं! अधिगम्य सहमतिमस्माकम् !'

सर्वथाऽनपेक्षित-महत्तम-समादरमूकमूक इव नवासशाहः न प्रत्याह किमपि, स्वीचकार केवलं तं कार्यभारमवनमय्य चिकुरिलं प्रवृद्धश्मश्रुजालं स्वं मस्तकं ।

त्वया संगठितं भारतीयसैन्यदलं······परंतु······सैहवास्माभिः प्रतिनिवर्तिष्यति राजधानीम् ।······स्यात् नूनं तत् अधिकतरमुपयोगि······ कृतेऽस्माकं···अन्यत्र

'अपहृतस्वातंत्र्याः वैतनिकाः सैनिकाः'—सतिरस्कारं स्मयमानः

उवाच सः,'परकीये देशे तद्देशीयजनस्वातंत्र्यापहरणाय नियोजिता अधिकं लाभप्रदा भवन्ति–इति हि अस्माकं अनुभवः' ।

'श्रुतमस्माभिः–'सहसा समुपजातस्मरण इव पप्रच्छ सः, 'युष्माकमपि देशेऽस्मिन्······दासीकृता गजा अन्येषां अरण्येषु स्वतन्त्र्यं स्वं यथेच्छं उपभुञ्जानानां दासीकरणेऽधिकतरमुपयोगिनः दृष्टचरा इति ?'

'यथाऽऽह स्वामी'–ईषदपि अविचलितमुखमुद्रः प्रत्युवाच नवासशाहः 'आजन्मनः यवन इव ।

'एतान् तर्हि सिद्धान्तान् मार्गदर्शकान् कृत्वा त्वयाऽत्र प्रशासितव्यः अयं नूतनः प्रान्तः'–उक्ता चैवं चिरमास्त तत्स्वामी······स्पष्टीकुर्वन् तान् सिद्धान्तान्······निवातस्थिरया वचस्तस्य सावधानमाकर्णयन्त्या इव रत्नदीपशिखया प्रकाश्यमानः ।



## चतुर्थः परिच्छेदः

'स्वामिन्! '' 'मालिके सल्तनत'-आकर्ण्य कमपि मंद्रं विनीतं स्वरं संबोधयन्तं तं⋯सहसा विच्छिन्नविचारधारः⋯⋯महमूदः⋯⋯सद्यः प्रत्यागतः स्वां राजधानीं विजित्य उद्वृत्तान् स्वभावेन दुर्गमतया तत्प्रदेशस्य दुर्दान्तान् उदीच्यान् तुरुष्कान् असभ्यप्रायान्⋯⋯श्रान्तः⋯⋯विशिश्रमिषुः⋯⋯संवत्सरमेकं राजधान्यां⋯⋯निश्चिन्तः⋯⋯दैनंदिनप्रशासनकार्यमात्रव्यापृतः⋯⋯ पुनरुज्जिजीविषुश्च स्वां उत्साहशक्तिं निशम्यासकृत स्वयशोगीतानि विरचितानि फिरदौसीसदृशप्रतिभाशालिभिः राजकविभिः अतिशयोक्तान्यपि हृद्यानि⋯⋯उत्थापयामास स्वामारक्तां तंद्रिलां दृष्टिमन्यमनस्कां⋯⋯ बबन्ध च तां स्वपुरत उपस्थितस्य विनयावनतस्य साधारणवेषस्य गान्धारवणिज इव भासमानस्याऽऽगन्तुकस्याऽऽनने ।

'कोऽयं⋯⋯धृष्णोति भक्तुं अस्माकं विश्रामक्षणान् एवं ?'–इति क्षणमात्रं कुपितः⋯⋯तन्निर्भर्त्सनाप्रवृत्त एव⋯⋯सहसाऽस्मरत् तं⋯⋯ निशम्य तदनुरोधं कातरं द्वारपालमुखेन तेन स्वयं स्वपुरतः अनुज्ञातप्रवेशमनिच्छया⋯⋯पांचनदं पुरुषम् ।

नियम्य चाऽऽत्मानं तन्निर्भर्त्सनायाः⋯⋯आरभत⋯⋯अप्रसन्न एव⋯⋯ निरीक्षितुं तं मंदप्रकाशे स्वे विश्रामकक्षे निषिद्धप्रायसूर्यातपप्रवेशे एकदेशविरचितपुष्पगुच्छमंदसुगंधे नातिसुस्पष्टतया लक्ष्यविशेषम्, न तु ददर्श किमपि प्रत्यभिज्ञायकं चिह्नं तस्मिन् सर्वसाधारणप्रमाणेऽनतिस्थूलेऽनतिकृशे साधारणगौरे वलितभालप्रदेशे आकुंचितनयनेऽपरिचितेऽपि परिचिते इव कथमपि भासमाने ।

'कोऽयं ?'-इति विचारयत एव शनैः शनैः समुपजातकौतूहलस्य तस्य ⋯⋯आगन्तुकः सः समुत्थापयामास स्वां दृष्टिं⋯⋯तावत्कालपर्यन्तं महार्हभूतलास्तरणनिबद्धां,⋯⋯बबंध च तां⋯⋯विनयप्रह्वामेव⋯⋯दृष्ट्या तस्य⋯⋯क्षणमात्रम् ।

क्षणिक एव······परंतु दृढ़······दृष्टिबंधः·······अलं बभूव प्रदातुं तं तद्वाञ्छितं प्रत्यभिज्ञानम् ।

अहो 'इन्शा अल्लाह्'!···अयं तु·····अमजदखानः···!' प्रत्यभिज्ञाय तं सहसाऽचिन्तयत् स यवनसम्राट् । 'विनीतभावोऽयं·····स्वसदृशभावान् सहस्त्रशः मया दृष्टचरान् अतिशयानः·····तस्यैव भवितुमर्हति! ······ आम्!·····अमजदखान एवायं अस्माकं सेवकः·····राजस्वविभागीयः अत्रत्यः·····कौतूहलवशात् कृत्वा शस्त्रपरिग्रहं सहास्माभिः तस्मिन् मूलस्थानाभियाने गतः······तत्रैव अनुभूय तद्देशीयं जलवायुप्रदेशं स्वानुकूलतरं वस्तुकामः·····अस्माभिः नूतनेऽस्मन्साम्राज्यप्रान्ते तस्मिन् भारतीये प्रदेशे·····तत्रत्ये राजस्वविभाग एव परिकल्पिते सद्यः····· सूचयित्वा नवासशाहं अन्यमनस्कं·····नियुक्तः' ।

'कथं·····परंतु·····अत्र समुपस्थितोऽयम् ?'

'अमजदखान ?'-अपृच्छच्च अश्रद्दधान इव स्वां प्रत्यभिज्ञाम् ।

'अमजदखान एव·····अयं·····स्वामिनः परमप्रतापिनः दासानुदासः' अवनमय्य स्वमुत्तमांगमधिकतंर कंपितस्वरं प्रत्युवाच स आगन्तुकः ।

'अमजद·····कथमत्र त्वम् ?·····विहाय सेवास्थलं ?' निशम्य प्रत्युत्तरं तस्य, सहसा कुपितस्येव·····स्वभावेनैव तिरस्कुर्वतः परित्यज्य कर्तव्यस्थलं समुपेक्ष्य स्वं कर्तव्यं यथेच्छं भ्रमतः स्वजनदिदृक्षया स्वं देशमागच्छतः राजपुरुषान्·····अनदर्त् तत्स्वरः·····तस्मिन् नीरवे कक्षे सहसा दक्षतामिवोपगते ।

'अपि नाम त्वयाऽधिगता·····तत आगमनात् पूर्वं, अनुज्ञा अस्मांकं प्रान्तपालस्य ?' सकुत्समपृच्छत् तत्स्वामी क्षणमात्रानन्तरम् ।

'नाधिगता·····!·····यदि नाम-अहं अधिगन्तुंतां प्रयत्नं कर्तुं अधर्षिष्यम्,·····न नूनं तामध्यगमिष्यम्·····' प्रत्यवदत् स अधोमुखः कंपितस्वरः

'अध्यगमिष्यं·····नूनं कारावासं' क्षणमात्रानन्तरं चापूर्यत् विवक्षां स्वाम् ।

'कारावासं ?'·····अश्रद्दधान इव स्वौ कर्णौ अपृच्छत् तत्स्वामी ।

'कारावासं'–खिन्नस्वरं प्रत्यवदत् स सेवकः ।

'ब्रूहि स्पष्टम्'–तीक्ष्णस्वरमादिशत् यवनसम्राट् ।

'यद्यभयम्' ।

'अभयं·····यद्यर्हसि'—आश्वासयामास उत्सुकः सम्राट् ।

'धृष्णोति सः·····नरापसदः·····द्रोग्धुं स्वामिनं'—बिभ्यन्निव समुच्चारयितुं अमंगलान् तान् शब्दान् स्वमुखेन·····महता कष्टेनाब्रवीत् स अभ्यागतः ।

'द्रोग्धुं?·····तदपि मां ? क्षणमेकमवाक् अपृच्छत् तत्स्वामी ।

कः ?·····कः धृष्णोति कर्तुमेतत् दुःसाहसं ?'—अप्राक्षीच्चक्षणमात्रा--नन्तरं तीक्ष्णतरस्वरः

'स नौशः–' विस्पष्टाक्षरमनदत्—तत्प्रत्युत्तरं तस्मिन् विस्मयजडे इव कक्षे ।

'नौशः ?·····कथं·····? कदा ?···किमर्थं ?'—निरगच्छत् आतुरातुरा प्रश्नावलिः मुखान् उच्छुष्कात् विवर्णौष्ठपुटात् यवनसम्राजः ।

'नराधमः·····सः·····यः खलु सर्वजनसमक्षं प्रदर्शयति स्म अकृत्रिममादरं स्वामिनः लोकविलक्षणस्य शौर्यस्य विषये·····निरतिशयं विश्वासं स्वामिनः सदाचारस्य विषये·····निरपवादं श्रद्धाभावं यवनधर्मस्य विषये··· निर्मर्यादं घृणाभावं मूर्तिपूजकधर्मस्य विषये,·····नराधमः सः·····यं खलु स्वामी·····प्रकृत्यैव उदारमनाः·····स्वीकरोतिस्म शरणागतं निशंकेन हृदयेण,·····अनुगृह्णाति स्म च स्वं कनीयासं भ्रातरमिव·····शिक्षयित्वा तं विविधासु विधासु कूटनीतेः समपनीतेश्च,·····नराधमः सः·····यस्मात् स्वामी·····प्रकृत्यापरानपेक्षी अपि·····अपेक्षते स्म बहुविधमुपकारं स्वधर्मस्य स्वसाम्राज्यस्य चान्ततो गत्वा साधारणजनकल्याणकरस्य,·····नराधमः सः नौशः·····अनुसरति स्म पंथानं प्रशासनस्य·····स्वामिना प्रस्थानसमये विनिर्दिष्टं·····कतिपयमासपर्यन्तम्, दृढीचकार चाऽऽधारं नवीनस्य प्रान्तस्य भीरुहृदयात् तज्जनकात् स्वामिना खड्गन्यायेनापहृतस्य, न सं अनुभवति स्म लेशमात्रमपि काठिन्यं क्लेशं वा तत्र·····अहर्निशमधिगच्छन् साहाय्यं सर्वेभ्योऽपि अस्मभ्यः यवनाधिकारिभ्यः उच्चावचेभ्यः स्वामिना दूरदर्शिना ततः प्रस्थानात् पूर्वं तत्साहाय्यकरणार्थं स्थापितेभ्यः ।····· वियुज्य स्वामिनः आदौ रणरणकरिवद्यमानचेतसोऽपि, प्रतिक्षणमनुभूयात्मानं मूर्तिपूजकैः परिवेष्टितं समुद्विग्नमनसोऽपि·····वयं·····समवलोक्य

ास्योत्साहं तस्य धैर्यं तस्य प्रशासनचातुर्यं च कतिपयेष्वेव दिवसेषु प्रभा-
वेताः·····समाकृष्टचित्ताः·····व्यस्मराम सर्वं स्वं विषादं मासाभ्यन्तर
इव,·····अबध्नाम स्वं परिकरं तत्साहाय्यकरणार्थं·····परं विश्वसन्तो तम्
तदाज्ञा अनुपालयन्तो वयं सर्वे वस्तुतः आज्ञाः स्वामिन एव,·····विश्व-
स्यास्मासु स्वं कर्तव्यं अन्यत्र कर्तुं गतस्य,·····अनुपालयाम इति–'आरभत
स यवनः प्रकटयितुं स्वं मनोगतं·····सहसा प्रस्फुटितवागिव·····असमर्थ
इव तदावेगं अतितीव्रं संरोद्धुं क्षणमात्रमपि ततःपरम् ।

विरराम च सहसाऽवलोक्य स्वं स्वामिनं आसनात् उत्तिष्ठन्तं·····
पर्वतमिव भूकम्पकम्प्यानं क्षणमात्रं कम्पमानं·····वातायनमेकं पुरुषप्रमाणं
समीपतमं सावेगं समुपसर्पन्तं·····अवलोकयन्तं च बहिः सांध्ये गगने,
तिमिरेणामाय तदन्तःकरणे बहिर्निर्गच्छतेव दुःखेन प्रसह्याक्रम्यमाणे·····,
पराङ्मुखं·····विमनस्कं·····भीतभीतः ।

'परंतु'–प्रारभत सवक्तुमग्रे·····प्राप्य तदनुज्ञां दृष्टिक्षेपमात्रेणा रक्तार-
क्तेन संसूचितां·····पुनर्लब्धप्राण इव ।

'यतः प्रभृति संदेशवाहकाः, स्वामिना प्रतिसप्ताहं इतः महत्या
आत्मीयतया संप्रेष्यमाणास्तत्र·····आरभन्त निवेदयितुं तस्मै·····बक-
धूर्ताय·····स्वामिनः इतः प्रस्थानं उद्वृत्ततुरुष्कदण्डधारणार्थं, प्रवासं
उदीचीनां साम्राज्यसीमां समुद्दिश्य, व्यग्रचित्तत्वं च कार्ये तस्मिन् अति-
कठिने·····ततः प्रभृति·····आश्चर्यकरं परिवर्तनं·····आमूलं परिवर्तनं···
सर्वथा विपरीतं परिवर्तनं·····आरभत दूषयितुं तद्व्यहारम् ।'

'एवं तर्हि·····अस्माकं व्यग्रत्वमिह प्रोत्साहयामास तं व्यवहर्तुम्
तथा ?'–अपृच्छत् घर्घरस्वरं तत्स्वामी·····पराङ्मुख एव·····अपारय-
न्निव निगडयितुं स्वां दृष्टिं दृष्ट्या निवेदकस्य तस्य·····तं यवनसाम्राज्य
मूलाधारं·····तं अद्वितीयं शूरं·····तं सर्वाधिकचतुरं·····तथा वञ्चितं··
तदपि मूर्तिपूजकेन कःपदार्थेन एकेन·····निवेदयतः ।

'किं खलु विशिष्य प्रोत्साहयामास तं कर्तुं तथा···कदा वा कथं वा··
इति तु अशक्यप्रायं निर्वक्तुं–' प्रत्युवाच तत्सेवकः ।·····'श्रुतं मया·····
अन्यैश्च मद्बान्धवैः यत्–'एकः कोऽपि·····अज्ञातकुलनामधेयः·····ज्योति
र्वित् (–स्यान्नाम पुरुषपुरनगरात् तत्समीपतो वा)·····धूमकेतुरिव

प्रादेशिकराजधान्यामुपस्थितः······अपश्यत् तं एकाकिनं रहसि······अथापि यच्च प्रहरमेकं सह तेन गूढसंलापे इति।'······एतदपि श्रुतं यत्–'स न आसीत् वस्तुतः कोऽपि ज्योतिर्वित्। अपि तु···कोऽपि गूढः पुरुषः इति।'··· इत्थं संप्राप्य उच्चतमप्रादेशिकराजाधिकारिदर्शनानुग्रहं······(स्यान्नाम–प्रभूतदक्षिणाद्रव्यराशिं) अपि,······सः सर्वसाधारणज्योतिर्विदिव नान्यान् राजाधिकारिणः ग्रहफलितकथनेनोपचकार,······अनुजग्राह च तान् दक्षिणा-स्वीकारेण–इतीयं वस्तु स्थितिः······नूनं समुत्पादयति संशयं मनसि तटस्थस्य तस्य तत्त्वे।······परंतु–'किं स आसीत् कस्यचित् (–स्यान्नाम–तत्पितुरेव काश्मीरराजं शरणीकृतवतः–) दूतः······संदेशहरः ?······उत आसीत् स्वयमेव कोऽपि भारतीयः······घोरः स्वदेशभक्तः–' इति तु न शक्यं वक्तुम्–'स एव किं तादृशं परिवर्तनं कारयामास व्यवहारे तस्य नरापसदस्य'–इत्यपि······मते केषांचित्–'समकालिकत्वम् उभयोरेतयोः घटनयोः व्यनक्ति तयोः परस्परसंबंधं जन्यजनकभावरूपं निःसंशयम्।'······ परंतु–तदेतत् काकतालीयमपि संभवति।'

'अथवा–अलमनयाऽज्ञेयजिज्ञासया,'–नियमयन् स्वं तर्कविस्तारं अनु-भूय स्वं स्वामिनम् आतुरीभवन्तं निर्गमनाय तस्मात् आयासमात्रकरात्–आह सःसंवेदनशीलो यवनः।

'एतत्तु सत्यं–यत् अलक्ष्यप्रायं परंतु अप्रत्याख्येयं विपरीतं परिवर्तनं सर्वथाऽनपेक्षितमारभत दूषयितुं व्यवहारं तस्य तत आरभ्य।'

'राजस्वसंग्रहप्रक्रियां प्रादेशिकप्रशासनस्याधारभूतां स्वामिना ततः प्रस्थानात् पूर्वमुपदिष्टां यथापूर्वमनुसरन्तपि,······प्रशासनव्यवस्थामत्रत्यां दृढतरां तत्र यथापूर्वमन्वाचरन्नपि······सः······सर्वप्रथममापादयामास······ अबुद्धिपुरःसरमिव······तद्विपरीतं परिवर्तनं सैनिकव्यवस्थायाम्।······ आरभत सः सर्वप्रथमं कर्तुं संग्रहं भारतीयानां······यूनां बलिष्ठानां,······ भारतीयानामेव······स्वप्रान्तीयसेनायां तत्कालपर्यन्तं यवनसैनिकबहुलायाम् ······आरभत तान् संगठितुं दलेषु विभिन्नेषु,······शिक्षयितुं च तान् विवधासु विधासु युद्धस्य······विशेषतः–अस्मदीयासु विधासु परम्परागताभ्यः श्रेष्ठत-रासु।'

'पदक्षेपोऽयं तस्य······आदौ तावत्······न समुदपादयत् कमपि संशयं

मनसि अस्माकं·····स्वामिना तत्र नियुक्तानाम् ।·····इह·····अपि हि तेन भारतीयसैन्यदलानि तादृशानि संगठितानि आसन् ततः पूर्वम्,·····अर्थात् अनुज्ञया स्वामिनः,·····यदा तु दलानि तानि आरभन्त अतिशेतुं अस्मद्दलानि स्वसंख्याबलेन शस्त्रबलेन च·····तदा मनसि अस्माकं पदं स्वं प्रथमं चकार संशयः ।

'अवलोक्य यवनसैनिकबलं प्रान्तीयसेनायां वेगेन क्षीणतरं भवत्-आशंकितचित्ताः केचन मे देशबान्धवास्तत्कालमेव प्रेषयामासुः निभृतं संदेशान् तत्रत्यावस्थानिवेदकान् विश्वसनीयदूतमुखेन' ।

आकृतिः पराङ्मुखी यवनसम्राजः·····आपाततः नैशस्य प्रासादा-रामस्याभिरामस्य क्षीणक्षीणायां चन्द्रिकायां किंचिद्दृश्यमानस्य शोभां पिबन्ती······ सहसाऽभवत् स्तब्धतरा निशम्य तद्वाक्यम् ।

'कदाचित्·····स्वामिभक्तैः सेवकैः संप्रोषितास्ते वराका नालभन्त····· अवसरमेव·····आगन्तुमत्र····· द्रष्टुं च स्वामिनम्'-सत्वरमाह स यवनः··· अनुमाय इव तत्प्रश्नम् ।

'पश्मतामेवास्माकं विस्मितानां·····स्वामिनः कठोरान् निर्देशांश्च प्रतिदिनं प्रतीक्षमाणानां·····अवस्था स्वामिनः यवनसेनायास्तत्र स्थापिताया आरभत विपरीततरा भवितुं प्रकारान्तरेणापि ।·····आरभत हि सः नरा-पसदः येन केनापि कारणेनापमानितुं उच्चतरान् यावनान् सेनाधिकृतान् राजपुरुषान् तदधीनस्थजनसमक्षम् ।·····आरभत दूरीकर्तुं तान् अर्थादेव प्रतिकुर्वतः तदधिकारपदेभ्यः·····अनधिगत्यैवानुजां स्वामिनः ।·····आरभत तान् विभ्रष्टुं सेनाया एव·····बहिष्कर्तुं च तान् प्रदेशान्'

'तेऽपि·····आदित एवास्वस्थचित्ताः·····तत्रापि तादृशापमानदहन-दन्दह्यमानचित्ताः·····अवसरं परमेश्वरप्रदत्तमेवामन्यन्त स्वदेशप्रस्थानाय साक्षात्कृत्य च स्वामिचरणौ तत्रत्यवस्तुस्थितिनिवेदनाय ।

'समर्थास्ते बभूवुः·····अथवा न·····सफलीकर्तुं अवसरं तं·····तत्तु न जानेऽहं'—सनिश्वासमाह सः यवनः ।

'यथा यथा बभूवुः उच्चाः सैनिका अधिकारिणः अस्माकं क्षीणतरा-स्तत्रत्यायां सेनायां·····तथा तथा प्रचेलुः सैनिकेषु वार्त्ताः,·····अपुष्टाः····· अनधिकृताः·····सत्यं, परन्तु·····संतता अप्रत्याख्याताः वार्त्ताः·····

अस्मन्मनस्तापकारिण्यः । मध्ये तासां······काश्चित् तु तस्य नरापसदस्य पुनः स्वपितृधर्मांगीकरणेच्छां······किं बहुना-स्वस्वातंत्र्योद्घोषणेच्छामपि ······व्यड्क्तुं दधृषुः'—क्षणमेकं मौनमाश्रितः······महता कष्टेन आह सः ।

आकर्ण्याऽपि तां सर्वथाऽनपेक्षितां वार्तां······न चचाल तिलमात्रमपि आकृतिः पराङ्मुखी यवनसम्राजः······पाषाणस्थिरा ।

'प्रयतमानानामेवास्माकं असहाय्यानां कथमपि निर्णेतुं तासां सत्या सत्यत्वं······सहसाऽवातरन् ता वार्त्ताः पुरस्तादस्माकं विस्मयमूकानां वास्तविकस्थितिरुपेण'—आह अग्रे सः······असमर्थः अवगाहितुं मनः स्वस्वामिनः ।

'हुं! ······एवं तर्हि······उज्जुघोष स आत्मानं सर्वथा स्वतंत्रं राजानं' —अश्रृणोत् स तं घर्घरस्वरं गदन्तमेवं······स्वगतमिव ।

'यथाऽऽह स्वामी'—समाश्वस्तचित्त इव च प्रत्युवाच ।

'अंगीचकार च तं धर्मं पुनः' ।

'यथाऽऽह स्वामी' !

'परंतु-श्रुतमस्माभि······यत्-अहंमन्यस्तेषां स धर्मः······ भ्रष्टं तस्मात् ······न कदाऽपि पुनः स्वीकरोतीति' ?—पप्रच्छ स यवनसम्राट् ।

'समीचीनमेव श्रुतं स्वामिना । परंतु स तेषां धर्मः······काकचतुरः ······नियमस्य तस्पापवादानपि स्वीकरोति'—सोपहासमिव प्रत्यवदत् तत्सेवकः ।

'अयं तर्हि अपवादः' ।

'बहूनां तद्धर्मपण्डितानां मते ।'

'······वस्तुतः······समुद्भवत् तत्र नूनं तीव्रः मतभेदः तत्रत्यानां प्रजाजनानां मध्ये······निशम्य तस्य स्वातंत्र्यघोषणां पुनस्तद्धर्मस्वीकार-घोषणां च······घोषणां प्रथमां ते महता आनन्देन मतैक्येन चाभूतपूर्वेण शिरसि चक्रुः द्वितीयां तु महता विस्मयेन मतवैभिद्येन च तीव्रेण ।······ किंकर्तव्यताविमूढास्तेऽन्ते आह्वयामासुः एकां महतीं सभां (तन्मतेन) तद्-धर्ममर्मज्ञानां पण्डितानां दातुमन्तिमं निर्णयम् ।······आदौ तावत् प्रायः सर्वेऽपिपण्डिता अननुकूला आसन् तद्धर्मपुनः स्वीकारस्य ।······परंतु 'सः' गूढः ज्योतिर्वित् न जाने केन कथं किमिति वा आहूतः······संबोधयामास

सावेशं तान्······विशदीकुर्वन् ताः परिस्थितीः यासु स यावनं धर्मं स्वीकर्तुं बाध्योऽभवत्,······प्रकटयामास तस्य मनोगतं वास्तविकं तात्कालिकं,······ आजुहावच तान् कर्तुं साहाय्यं तस्य स्वमातृभूमिसंरक्षणे प्रदाय स्वामनुमतिं तस्मै पुनः स्वीकाराय तेषां 'सनातनस्य' धर्मस्य······तदा ते····आदित एव प्रभावितास्तस्य वैयक्तिकेन प्रभावेण······बहुसंख्यया ददुः स्वां स्वीकृतिं··· 'आपद्धर्म' इति ।

'बहुसंख्यया ?' सकाकु अपृच्छत् तथैव पराङ्मुखो यवनाधिपः ।

बहुसंख्यया' स्वीचकार तत्सेवकः ।······'केचन हि तन्मध्यात् प्रायो वृद्धाः······मौनमेवाप्रसन्नं असहमतिलक्षणं भेजुः ।

'सोऽयं मतभेदः······कृतेऽस्माकं लाभप्रदः' अस्फुटमुवाच सम्राट् ।

'अभविष्यत्, स्वामिन् !'······सखेदमाह तद्दासः ।······'अभविष्यत् ······यदि हि सः कृतक ज्योतिर्वित्······धूर्तः······हस्तक्षेपं नाकरिष्यत् ।

'कथमिव ?'

'यदा पण्डितसभा सा······इत्थं मतभेदविदीर्णा प्रावर्तत ग्रहीतुं अन्तिमं निर्णयं बहुसंख्याबलेन······तदा सः बकधूर्तः······अन्तिमं निर्णयं तर्कयन् अहितकरं······अनाहूतोऽपि सभाध्यक्षेण······पुनः संबुबोध सभां······तावता कालेनाधिगत दक्षिणां······आतुरातुरां च स्व-स्व गृहगमनाय······स्वीचकार तत् प्रस्तावं सर्वसहमत्या······न ग्रहीतुं अन्तिमं कमपि प्रतिकूलं निर्णयं तस्य पुनर्धर्मप्रवेशविषये वर्तमानासु परचक्रसंकटाकुला कुलासु परिस्थितिषु कर्तुं च तत्साहाय्यं सर्वविधमविलंबमेव प्रयत्नेषु तदीयेषु तत्संकट दूरीकरणमात्र लक्ष्येषु······कृत्वा तत्र तत्र सार्वजनिकानि आयोजनानि यज्ञादीनाम् ।

'विश्वासघातकः····नूनं प्रस्तावमेतादृशं······अन्ततो गत्वा······पूर्णतया स्वहितकरं संपादयिष्यति' स्वगतमिव उवाच यवनसम्राट् ।

'क्षिप्तं······स्वामिन् !······पदं तेन दिशि तस्यां' सखेदमाह तत्सेवकः ······'तद्दक्षिणाद्रव्यक्रीता नूनं······दिग्विजयभट्टाचार्यादिधर्मपण्डिताः जनान् साधारणान् 'परचक्रसंकटनिवारणायाहोरात्रं प्रयतमानः तदर्थं यं कमपि स्वार्थत्यागं कर्तुं संनद्धः, शठं प्रतिशाठ्यं इति नीतिं समयोचितामंगीकुर्वाणः, तत्र आर्यचाणक्यमपि अतिशयानः जयपालतनयः सुखपालः

······धर्मसभया संपूर्णस्य भारतवर्षस्य प्रतिनिधित्वं कुर्वाणया······स्यान्नाम द्राविडीप्राणायामपद्धतिमनुसरन्त्या····पुनः सनातनधर्मं स्वीकाराय अनुमतः' इत्येव वारं-वारं कथयन्तः तांश्च तत्साहाय्यकरणाय प्रोत्साहयन्तः······ मयाऽसकृत्दृष्टाः ।'

'सगूढः ज्योतिर्विदपि नूनं करोति तत्र तत्साहाय्यं' सकाकु अपृच्छत् यवनसम्राट् ।

'स गूढः ज्योतिर्वित्'–प्रत्युवाच अमजदखानः (सकौतुमिव) करोति तत्र तत्साहाय्यं······परंतु–अदृश्यीभूत्वा ।'

व्यानञ्ज यवनाधीशः जिज्ञासां स्वां मुखरया निःशब्दतया ।

'सभाविसर्जनानुपदमेव सहसाऽदृश्यां गतः······सः चतुरः······कृत्वा तथा जनसाधारणस्य तद्व्यक्तिमत्वाऽऽकृष्टचित्तस्य तत्पाण्डित्यप्रभावितस्य तत्पुनर्दर्शनातुरस्य मनसि एतावदाश्चर्यं······एतावत्कौतूहलं······उत्पादयितुं समर्थः अभवत्······यत् वर्णयितुमपि अशक्यं–' विज्ञाय तज्जिज्ञासामाह तत्सेवकः ।

'सत्यं स्वामिचरणयोः निवेदयामि'–क्षणमेकं मौनमाश्रितः अग्र उवाच सः–'केचन साहसिकास्तरुणाः···तं तस्य नौ–नरापसदस्य साक्षात्संबंधिनं,··· अन्तिमस्य जयपालस्य पराजयस्यावसरे दासरूपेण स्वामिनः सेवायां प्रविष्टं, सहान्यैः······इह······राजधान्यां······आगतं, साक्षात्कृत्यात्रानवरतं प्रवर्द्धमानं यवनसामर्थ्यं संजाताशंकं, भारतवर्षं च प्रतिनिवृत्य साहाय्य-यन्तं संबंधिनं······जनान् सकौतूहलान् कथयन्तः श्रुताः,······केचन वणिग्-ब्रुवाः प्रौढाः······तं स्वर्गं गतस्य जयपालस्य भूतपूर्वं कनिष्ठमधिकारिणं··· गत्वा यवनराजधानीं, दृष्ट्वा तत्र रात्रंदिनं प्रवर्द्धमानं यवनबलं चिन्ता-क्रान्तं, 'आधिदैविकं सामर्थ्यमेवात्र शरणीकरणीयं' इति विचिन्त्य नगा-धिराजं (ते खलु भारतीया अचेतनं हिमालयं 'नगाधिराज' इति आमनन्ति !–), साक्षात्कृत्य चानुकूलं समयं संप्राप्तं साधारणजनमार्ग-प्रदर्शनार्थं कंचित् कालं आगतं, कृत्वा च स्वं कर्तव्यं पुनस्तपश्चरणार्थं गतं······उद्घोषयन्तः सावेशं आर्कणिताः,······केचन तु–(देवपाल–इति कदाचित् तन्मुख्यस्य नाम !) आपातसाधारणा ब्राह्मणा मया·····तं राज-योगिनं······विहाय स्वां तपस्यां मध्य एव सनातनधर्मकल्याणकांक्षामात्रेण

तेषां मध्ये तन्मार्गप्रदर्शनार्थं कस्मादपि आश्रमादागतं पुनः प्रतिनिवृत्तं च तत्र······मन्द्रस्वरं जल्पन्तः जनसमवायेषु दृष्टाः !'

'एते सर्वे प्रवादाः केन कैर्वा प्रसारिताः······एतन्न जानामि।······प्रामाणिका अन्यथा वा–इत्येतदपि।······जानामि परंतु अहं······तदपि स्वनिरीक्षणबलेन···यत् एते सर्वेऽपि साधारणजनान् अन्धश्रद्धान् असंभवाकृष्टान् अभिभवन्ताः······कुर्वन्ति तं ज्योतिर्विदं अद्भुतप्रभावं पुरुषविशेषं तद्दृष्टौ।'

'कुर्वन्ति च तं नरापसदं······तेनाद्भुतपुरुषविशेषेण तथोपक्रियमाणं विश्वासार्हं······आदरणीयं······अनुगमनीयं···अतश्च–नराधिपपदयोग्यम्।'

'चतुरः सः नरापसदः (–स्यान्नाम-ज्ञात्वा इतः केनापि संप्रेषितं स्वामिनः तुरुष्कदण्डधारणैऽतिव्यग्रत्वं सूचयन्तं समाचारं प्रवृद्धधाष्ट्र्यः–) ···प्रतीक्षितामेव तमवसरं लब्ध्वाऽविलंबमेव···संबुबोध स्वराजधान्यां सामान्यजनसभामेकामतिविशालां सडिण्डिमनादमाहूतां राजप्रासादचत्वरे,······आह्वयामास तन्माध्यमेन प्रजां सर्वां तत्रत्यां कर्तुं तत्साहाय्यं,····उज्जुघोष आत्मानं स्वतंत्रं भारतीयं राजानं······आरभत च संगठितुमतिमहत् सैन्यं ······उपेक्षमाण इवात्मनः पुनःपूर्वधर्मस्वीकारस्य प्रश्नम् अनुत्तरितमेव'।

'प्रभावितास्तस्य देशभक्तिप्रेरकेण तेन भाषणेन (–अहमपि आसं, स्वामिन्, उपस्थितः तस्यामभूतपूर्वायां सभायां–)सर्व एव प्रजाजनास्तत्रत्याः तद्भावभाविताः,······विस्मृत्य मतभेदं, दत्वा तिलाञ्जलिं परंतुवादाय······तथाऽऽरभन्त कर्तुं साहाय्यं तस्य सैन्यसंगठनप्रयत्नेषु······संततं साहाय्यं··· यथा कतिपयेष्वेव दिवसेषु राज्यं तत् प्रान्तः सः स्वामिनः साम्राज्यस्य······ सैन्यनिवेश इवाऽऽरभत शोभितुम्।

दृष्टवा तं अभूतपूर्वं समरसंनाहं······दुश्चिन्ताभारभुग्नः दासानुदासोऽयं स्वामिनः निश्चिकाय निर्गन्तुं ततः येन केनापि प्रकारेण प्रदेशात् कृतेऽस्माकं प्रत्यहं प्रतिकूलतरीभवतः, साक्षात्कर्तुं स्वामिनं, कथयितुं च तस्मै तत्रत्यं वृत्तान्तं सविस्तरं, अभ्यर्थयितुं च तं स्वभल्लोत्क्षेपाय एकवारम्।

अभ्यर्थयित्वा सावेगं स्वं स्वामिनमेवं······स······निरुच्छ्वास इव क्षणमात्रं मूकः······अक्षिपत् एकं कटाक्षं दिशि स्वामिमुखस्याधोमुख एव।

अपश्यत् तत्······तिर्यक्वलितं······ईषत्संमुखीनं····प्रकाशे रत्नदीपस्य

स्पष्टतरं दृश्यं······तथापि······मुखं कालपुरुषस्येव······अपठनीयम् ।

'अपि त्वं अपश्यः किमपि चिह्नं······संसूचकं तस्य आनंदपालस्य च मध्ये वर्धिष्णोः सहकार्यस्य ?'–अश्रृणोच्च सहसा तं गदन्तमेवम् ।

'न किमपि'–ससंभ्रमम् अवदत् सः किंचित् चकितः ।

'ततः ?'

'ततः······अन्वियेषायं दासः'–समुपजाताश्वास इव अगदत् सः,······ 'अनुकूलं समयं अवसरं च निर्गमनाय ततः,······अलभत तं भाग्यवशात् शीघ्रमेव,······अवलोक्य कतिपयदिवसानन्रं मूर्तिपूजकान् तान् सर्वान् दुर्गामहोत्सवाभिधेऽनेकदिवसव्यापके महोत्सवे निमग्नान्······साधारण-काश्मीरवणिकमिषेण ततो निर्गतः······आरभत चाऽऽक्रमितुं मार्गं स्वदेश-यायिनं······उत्प्रेक्षमाणः प्रहारं स्वामिद्रोहिणः खड्गस्य प्रतिक्षणं······रात्रा-वेव प्रवसन्······परिहरन् क्षुद्रतममपि कुग्रामं मार्गपतितं······स्वं स्वामिनं ······सहसा औदासीन्यमुपगतं तद्वैयक्तिकवृत्तान्तश्रवणे ।

प्रत्यपालयत् मूकः······अधोमुखः······तदादेशमग्रिमम् ।

अपसर तखलिया !'–अश्रृणोत् तं सहसा क्षणमात्रानन्तरमेव ।

निरगच्छच्च तस्मिन्नेव क्षणे······लेशमात्रमप्यखिन्नः निशम्य तमादेशं निःस्नेहं,······प्रत्युत धन्यंमन्यः अधिगत्य तत् स्वामिदर्शनसुखं,······कृत-कृत्यंमन्यः (–अहो, सैनिकप्रियत्वं यवनसम्राजः !–) लब्ध्वाऽवसरमनन्य-सदृशं सेवितुं लोकोत्तरं स्वं स्वामिनं ।

तन्निर्गमनानन्तरं······प्रहरमात्रं······प्रतिषिध्य परप्रवेशमात्रं······स यवनसम्राट्······तस्थौ विचारमग्नः······एकाक्येव······तिष्ठन्नेव मूर्तिरिव स्थिरः समीप एव तस्य वातायनस्य······दृढनिबद्धदृष्टिः एकस्मिन् पौर्वा-त्यस्य क्षितिजस्य किंचिदेवोपरि क्षीणक्षीणं प्रकाशमाने नक्षत्रे कस्मिंश्चित् अज्ञातनामधेये ।

कीदृशा खलु आसन् ते विचाराः····किं ज्वलयन्तस्तं क्रोधातिरेकेण······ उत व्याकुलयन्तस्तं दुःखातिशयेन,······किं प्रेरयन्तस्तं उत्क्षेप्तुं विजयिनं भल्लं स्वं······उत प्रोत्साहयन्तस्तं 'शठे शाठ्यम्' इति नीतिमिमामनु-सर्तुम्–इति खलु अशक्यं वक्तुम् ।······शक्यं तु वक्तुं यत्–यदाऽन्ते तस्य प्रहरस्य रत्नदीपशिखामात्रसाक्षिकस्य उन्ममज्ज सः तस्मात् विचार-

सागरात्······तदा मुखममण्डलं तस्यासीत् निर्विकारं······शान्तं, न······न शान्तं, अपि तु दृढं······दृढाबद्धस्थूलाऽऽरक्तौष्ठपुटम् ।

समुपेक्ष्य कालापकालविवेकं (अपकाल एवासीत् स नूनं······सीमाकालः अंत्योपांत्ययोः नैशयोः विभाजकः ! ) आह्वाययत् सः स्वर्णघंटिकानादश्रवण-समकालमेव सेवायां समुपस्थितस्य सेवकस्य मुखेन स्वं प्रमुखतमं आश्व-सेनाध्यक्षं,······महारंभः······निराकुल इव च प्रत्यपालयत् तदागमनं शान्तेन मनसा······असकृत् स्पृशन् स्वं सुगंधिनं मृदुलं श्मश्रुजालं स्वदक्षिणेन करतलेन ।

किं खलु समादिशत् तं (सद्यो जागरितमपि सुखनिद्रायाः अथवाऽऽ-कृष्टमपि रमणीयरमणीबाहुलतिकाशृंखलायाः) निशम्याऽऽह्वानं स्वामि-नः दाक्ष्यं निरतिशयं तत्क्षणमुपेतं—इत्यपि अशक्यं वक्तुम् ।······शक्यं तु वक्तुं यत्—मुखमुद्रा तस्य राजपुरुषस्याऽऽदेशं स्वामिनः शृण्वतः······आदौ विस्मयेनाऽक्रान्ता······ततः क्रोधेन ताम्रा······ततस्तिरस्कारेण कलुषिता ······ततः कौतुकेन स्निग्धा······अन्ते निश्चयेन कठोरा······दृष्टा तथा रत्न-दीपशिखया······चरत्वमास्माकीनं कुर्वाणया !

आदेशः सः यवनसम्राजः न तदाऽभवत् पट्कर्णः,······न अग्रेऽपि । ······अकर्षत् परंतु समग्रमपि बलं तस्याश्वं······सद्यः प्रतिनिवृत्तमपि तुरुष्क-दमनाभियानात्······शारीरिकखेदखिद्यमानमपि······अधिगत्य प्रचलनादेशं तस्मिन्नेव क्षणे संनद्धं प्रचलनाय······सेनानिवेशात्,······अचालयच्च तत् बहिर्नगरात्······प्रहराभ्यन्तरे एव ।

कां सीमां समुद्दिश्य······कंवा प्रत्यर्थिनं कालदृष्टमभिलक्ष्य······तत् तु तत् स्वयं······तथा चालितमपि······नाजानात् ।······किं पुनः······ श्रुत्वा तत्पदरवं स्व-स्ववातायनसमीपे कौतूहलाऽऽकृष्टाः,······दृष्ट्वा तत् सद्यः प्रतिनिवृत्तमभियानात् कठिनतमात्······पुनः प्रस्थितं अभियाना-न्तरोद्देशेन चकिताः,······निरीक्ष्य तस्यानुशासनबद्धस्य पाश्चात्यां अभियान-दिशां······ स्यान्नाम पुनरपि उद्वृत्तानां तेषां तुरुष्काणामेव पुनः शासनाय प्रस्थितं'—इति कृत्वा मनसि स्वे-स्वे दैनंदिनकार्यकलापे मग्नाः नागरिकाः ।

स्वयमपि भ्रान्त्या तयैव प्रभावितं आश्वं तत् तस्य बलं···तथैवानवरतं मार्गं स्वमाचक्राम तद्दिवसावसानपर्यन्तं,······विश्रम्य किंचित् नैशे प्रथमे

प्रहरे पुनः प्रचलितं·····निशीथे घोरतमतमसि अविदत् एव वलितं दाक्षिणात्यायां आशायां तदधिपेन तन्नेतृत्वं प्रतिक्षणं कुर्वाणेन·····अविरतं प्रवसत्·····अन्ते निशायास्तस्याः दीर्घदीर्घायाः शशाकापनेतुं स्वं खेदं कूले कस्याश्चित् अश्रुतपूर्वायाः नद्याः क्षुद्रायाः ।·····संनिवेशकल्पन–भोजन-प्रवासखेदापनयनादिकार्यकलाप एव व्यग्रमनस्कं न मनसि चकार वैलक्षण्यं तस्य प्रदेशस्य सर्वथाऽपरिचितस्य ।·····कृत्वाऽपि वा तत् मनसि·····न प्रकटयामास स्वमाश्चर्यं तद्विषयकं परस्परसंलापेषु·····परिपालयत् कठोरं अनुशासनं सैनिकं·····विश्वसच्च नेतरि स्वे निरतिशयम् ।

परिपालयत् तदेवासाधारणमनुशासनं·····विश्वसत् तथैव स्वे नेतरि··· दुर्गमतमपार्वतप्रदेशाक्रमणानन्तरं अकस्मात् प्रविष्टं भारतवर्षे समुल्लंघ्य नगाधिराजं अपरिचितेन मार्गेण·····अवलोक्यात्मानं सहसा परिचिते स्वानुकूले स्वर्गोपमे भूप्रदेशे समाश्वस्तमपि·····हृष्टमपि·····न प्रकटयामास आत्मनः समाश्वासं·····आत्सनः हर्षं·····जयघोषैः इतरसैन्यवत् ।··· अपितु आचक्राम स्वं मार्गं पूर्ववदेव·····प्रवसत् रात्रौ···विश्राम्यत् दिवा··· परिहरत् साधारणवृत्तान्ता अपि ग्रामटिकाः·····अनुद्वेजयत् जनान्····· सुगोपयत् आत्मानं चारचक्षुर्भ्यः·····मूकं·····कालेन तावता सर्वतः सैनिकेषु सहेतुकं प्रसारितां नौशः स्वामिद्रोहवार्त्तां तद्दण्डधारणाभियानप्रवर्तनवार्तां एव च मनसि अहर्निशं कुर्वत्·····तादृशाय तेषां स्वामिने द्रुह्यन्तं तं कृतकयवनं नामशेषीकर्तुं उत्सुकोत्सुकम् ।

प्राप्य च काश्मीरराज्यस्य दक्षिणपश्चिमसीमारेखां·····यवनसम्राजाऽनागतविधात्रा नवनवसामरिकव्यूहकल्पयित्रा द्विधा विभक्तं·····भागेनैकेन सेनापतिमुखेन नीयमानेनाऽऽरभत गन्तुं अग्रे दिशि उद्वृत्तस्य यवनसाम्राज्य-प्रान्तस्य प्रभंजनवेगेन·····भस्मीकुर्वत् पचेलिमसस्यानि क्षेत्राणि पश्यतामेव कृषीवलानां भयविमूढानां·····दहत् ग्रामटिकाः धनधान्यसमृद्धा अवलोकयतामेव भयजडानां ग्रामीणानां·····विभ्रंशयत् देवतायतनानि अनुरुध्यमानामेव पूजकानां·····सप्रोजनं चैवं प्रसारयत् सर्वतः आतंकसाम्राज्यं निरंकुशं,·····अपरेण च स्वयं यवनराजेन नीयमानेनाऽऽरभत आक्रमितुं दुर्गमं मार्गं काश्मीरराजधानीयायिनं·····रुरुत्सया तस्य सैनिकदृष्ट्या समुचित भागे ।

वराकः सुखपालस्तु······प्रदीर्घपरिचयवशात् सुष्ठु जानन्नपि स्वभाव-सिध्दां प्रतिक्रियां दहनस्येवामर्षणशीलस्य यवनराजस्य निशम्य तद्द्रोहवार्त्ता-मवश्यमुद्भविष्यन्ती······स्वदेशभक्त्या स्वपितामहस्मृत्या च कर्तुं तथा प्रेरितः,······दिवास्वप्नेष्वपि अकल्पितं दूरतमयवनसाम्राज्यभागप्रशासना-वसरं प्राप्य कर्तुं तथा सहसा प्रोत्साहितः······उद्वृत्ततुरुष्कशासनव्यग्र-मनस्कं यवनराजमवलोक्य चारचक्षुभिः प्रोद्घोषितुं स्वं स्वातंत्र्यं उद्यतः,··· 'सत्येवामर्षणशीले यवनराजेऽन्यत्र, दूरतमे पाश्चात्ये सीमाप्रदेशे स्वसाम्राज्य-स्य, व्यग्रचित्ते, स्वबलसंवर्द्धनं कर्तव्यं यावच्छक्यं' इति मनसिकृत्य तदर्थं अहर्निशं प्रयतमानः,······अवलोक्य तान् स्वान् प्रयत्नान् सफलीभवतः समाश्वस्तचित्तः,······स्वसुहृद्बलसंवर्द्धनार्थं दिवानिशं चेष्टमानः,······ साफल्यं तु तत्र न यथापेक्षं लभमानः (–कष्टनाश्या हि धारणाः,······ तत्रापि भ्रांतधारणाः,······तत्रापि धर्ममूलाः······अन्धश्रद्धामूला वा–),···· साक्षात्कृत्य स्वं पितरमानन्दपालं साहाय्येन ज्योतिर्विदवेषधारिणः स्व-सहोदरस्य धर्मपालस्य काश्मीरनृपसंन्निधौ, अनुरुध्य तं मुहुः साश्रुनयनं परीक्षितुं तस्य साहसं (पितामहात्मदाहपर्यवसिततया दुःसाहसकल्पमपि, प्राप्ते साफल्ये मातृभूमिरक्षणकारितया बृहत्तरकल्याणकरसुसाहसत्वेन सुधिभिः अवश्यं प्रत्यभिज्ञेयं) सर्वग्राहिणा दृष्टिकोणेन, क्षन्तुं, पुनः स्वीकर्तुं चतमात्मजत्वेन सर्वजनसमक्षं, अनुभूय तं शनैः शनैः अनुकूलतरीभवन्तं हृष्टचित्तः,······'पितृचरणस्वीकारो अनुरोधस्य मे समयमात्रापेक्षी'–इति मत्वा धृतधैर्यः,······तदनुज्ञया ततः गहनकान्तारमध्ययायिना कदध्वना स्वराजधान्यै प्रतिनिवर्तमानः,······अंगरक्षकबालमात्रोपेतः,······भाविकार्य-पद्धतिचिन्तनव्यग्रचित्तः,······आकर्णयामास यदा समाचारं विद्युत्पातसमं यवनसम्राजा स्वयं नीयमानेन यवनसेनादलेन प्रबलेन राज्ये तस्य तत्र तत्र क्रियमाणानां लोमहर्षकाणामत्याचाराणां······तदा विस्मयजडः क्षणमात्रं न विशश्वास स्वकर्णयोः,······समुपजातविश्वासः न शशाक निश्चिनोतुं स्वं कर्तव्यं,······महता प्रयासेनोन्मग्नः अवस्थायास्तस्याः सर्वनाशकारिण्याः निश्चिकाय सहसा उपगन्तुं राजधानीं स्वां, प्रवेष्टुं तां यवनसेनानक्रपरि-वेष्टितामपि येन केनापि उपायेन, योद्धुं चावस्थाय तत्र सह स्वेन बलेन यवनसेनया सह मरणविजयान्यतरपर्यवसानपर्यन्तम् ।

विनिश्चित्य तथा समुत्प्रेक्ष्य कान्तारं तत् सर्वतः प्रसृतयवनसैनिक-संकुलं महत्या सावधानतया प्रवसन्नपि······तदहरेव······कान्तप्रदेशे सर्वत्र विचरतां यवनसैनिकदलानामन्यतमस्य चक्षुर्विषयीभूतः,······तेन श्वापदेनेव क्षुधातुरेण तद्वैशिऽट्यानभिज्ञेनापि सत्वेषेणाऽऽक्रान्त,,······विकलीकृत्य तदाक्रमणं हतावशिष्टेन स्वेन बलेन क्षीणतरेण सह ततोऽपसृतः,······मध्य एव कान्तारस्य दिवाऽपि अन्धकारितस्य मार्गात् स्वात् परिभ्रष्टः,···शनैः शनैः क्षीयमाणसामर्थ्यः······असकृत्पराक्रमणवशात् संततक्षीयमाण-बलः,······संकल्पबलमात्रोत्तंभितः,······व्यतीतेषु एवंप्रायेणोदन्तेन कतिपयेषु दिवसेषु······अवसानसमये एकस्य दिवसस्य लक्ष्यीबभूवाऽऽक्रमणस्य एकस्यातिप्रबलस्य यवनसैनिकदलस्य प्रत्यभिज्ञाय तं सहसा समुत्तेजितस्य,······बंदीबभूव चान्ते खड्गाखड्गियुद्धस्यातितीव्रस्य······क्षतशरीरः······सहसा विलुप्तचेतनः समनुभूय एकां कुन्तक्षतिं स्वे वामे पार्श्वे ।

अनुबभूव परंतु स्वं बन्दीभवनं सप्ताहानन्तरम् ।

एकस्मिन् प्रभाते···अज्ञानघनात् मोहसागरात् उन्मज्जन्निव अधिगच्छन् जवेनाधिकाधिकां संवेदनाशक्तिं······आदौ······आकर्णयामास सद्यःप्रबुद्धोड्डयनोत्सुकविहगकलरवं यावनैरपशब्दैः केनापि कमपि क्रीतदासमिवोद्दिश्य समुच्चार्यमाणैः दूष्यमाणम् ।······'कथं नाम अत्र······कान्तारे······श्रुतिरेषां तौरुष्काणामपशब्दानां तिरस्कारदुर्गन्धिनाम् ?'—इति विस्मयमानः च प्रायतत द्रष्टुं नाम तद्दिशि । न तु शशाक कर्तुं तथा झटित्येव । कष्टात् समुद्घाट्य स्वे नयने······दीर्घविश्रान्ते अपि क्षीणशक्तिके······चिरमचेष्टत शमयितुं जिज्ञासां स्वाम् ।···...अवलोकयामास परंतु आत्मानं शय्यायां नातिकोमलस्पर्शायां······अहो तार्णायां !······पतितं,······जडशरीरं,······उपवस्त्रेणेव केनचित् महार्हेण परंतु अस्वच्छेनाऽऽवृतप्रायं······अवलोकयन्तं उपरितने भागे एकस्य पटवासस्येव जीर्णशीर्णस्य ।······'अहो औद्धत्यं मे भालदर्शिनाम्······एवं माम् अस्मिन् क्षुद्रे पटवासे भूमावेवशयानं एकाकिनं परिज्यत्य यथेच्छं विहरताम् !'—इति क्षणिकक्रोधाविष्टः······आरक्तक्षामश्मश्रुलमुखः प्रायतत उत्थितुं शय्यायाः ।···अनुबभूव सहसाऽऽत्मानं···विनिगडितहस्तपादं······असमर्थं कर्तुं तथा ।

विस्फारिताभ्यामारक्ताभ्यां नयनाभ्यामवलोकयत एव च तस्य दीर्घ-

दीर्घं श्वसतः स्वं विनिगडितहस्तपादयुगलं⋯⋯अद्योतत मनसि तत्क्षणं अनुभूतिः स्वबंदीभवनस्य ।

ददाह अत्यन्तं⋯⋯तदाशा भव्याः सद्यःपल्लविताः⋯⋯तत्कोमल-भावनाः सद्यःपुनरुज्जीविताः⋯⋯तच्चित्तवृत्तीः स्वात्मसंमानसदृशीः जीवनोत्तंभिनीः ।

परिवर्तयामास च तं⋯⋯स्वनामधन्यस्य महाराजाधिराजस्य जयपालस्य पौत्रं⋯⋯पाञ्चनदनाधिपस्याऽऽनन्दपालस्य पुत्रं⋯⋯राजकुमारस्य गभीरस्वभावस्य धर्मपालस्य परिहासप्रियं चपलं सोदरं⋯⋯सुखपालं ⋯⋯आम् !⋯⋯यवनधर्मांगीकारेण यवनदास्यस्वीकारेण च इतिहासस्य बृहत्तरभारतवर्षस्य पृष्ठेषु कलुषाक्षरैः लिखितस्वनामधेयं⋯⋯नौशं⋯⋯ आपातचेतने कृतकपुरुषे !

कृतकपुरुष इव हि⋯⋯सः⋯⋯अनुभवन्नपि न यथार्थतः अनुबभूव⋯⋯ तदनंतरं⋯⋯शीघ्रमेव पटवासाभ्यन्तरप्रविष्टैः समवलोक्य तं विगतमूर्च्छं समाश्वस्तैः यवनसैनिकैः सादरमाहूतं,⋯⋯सत्वरमागतं,⋯⋯महावीरवेषधरं ⋯⋯दर्पोद्धतं⋯⋯यावनं सेनापतिप्रमुखं⋯⋯समुद्दिश्य तं किमपि पृच्छन्तं ⋯⋯अप्राप्य किमपि प्रत्युत्तरं तस्मै कुप्यन्तं,⋯⋯अपशब्दैः दुःसहतमैरपि तत्कृते लेशतोऽपि अनुद्वेजकैस्तमधिक्षिपन्तं,⋯⋯अधीरमिव सेवकसैनिकान् किमपि आज्ञापयन्तं,⋯⋯तैः लांगूलचालननिपुणैः तं तदवस्थमेव—अनावृत-प्रायकृशमलिनशरीरमेवार्द्धशुष्कक्षतनिःसरद्रुधिरमेव लोहशृंखलाविनिग-डितहस्तयुगलमेव—अश्वे एकस्मिन् अनुच्छृंखलेऽश्वान्तरारूढयवनसैनिक-धृतरश्मिके स्थापयन्तं,⋯⋯तेन, किंचिदपि अप्रतिकुर्वाणेन, वेदना असह्या अपि औदासीन्येन सहता, अश्वारूढैः शताधिकैः यवनसैनिकैः परिवृतेन, सह सैनिकनिवेशान्निःसरन्तं,⋯⋯आक्रम्य निरन्तरं कदध्वमेकं गहनवनमध्य-यायिनं दुर्गमप्रायं निर्जनं कतिपयदिवसानन्तरं सुव्यवस्थितविरचनं स्वस्व-कार्यव्यापृतसैनिकजननिराकुलमनुशासनबद्धं महान्तमेकं यवनसेनासागर-संनिवेशं प्रविशन्तं,⋯⋯प्रविश्याविलंबमेव सह तेन सैनिकद्वयसंरक्ष्यमाणो-भयपार्श्वेन दिशि एकस्यात्यच्छस्वर्णकलशभूषितशिखरस्य विशालस्य संनिवेशमध्यवर्ति-प्रोन्नततर-भूभागक्लृप्तस्य यवनसैनिकैः अन्धद्वीपाद्विशि-ष्याऽऽनीतैः कृष्णकायैः महाप्रमाणैः स्थूलाधरोष्ठैरारक्तनेत्रैः भीषणदर्शनैः

नग्नखड्गहस्तैः सर्वतः परिरक्ष्यमाणस्य महार्हपटनिर्मितस्य प्रासादस्य चलन्तं,······प्रविश्य तन्मध्यवर्तिकक्षाभ्यन्तरे सह तेन पदातिना अवलोक्या-ऽऽत्मानं उपस्थितं सेवायां एकस्याः सौवर्णे सुखासने एकस्मिन् सुखमुपवि-ष्टायाः, अद्वितीयमिव किमपि वस्तु स्वकरतलमध्यगतमवनमय्य स्वमाननं एकाग्रतयाऽवलोकयन्त्याः महार्हयवनवेषधरायाः वामहस्तधृतार्द्धरिक्तमद्य-चषकायाः पराङ्मुख्याः, पराङ्मुख्या अपि स्वसमीप आगतान् स्वकीयान् परकीयान् वा स्वेनानिर्वर्णनीयेनापि अप्रत्याख्येयेन वैयक्तिकेन प्रभावेणा-भिभवंत्याः, परिचितायाा इव भासमानायाः, प्रतापेन स्वेनाद्वितीयेन समस्तं जगतीतलं स्वसमकालिकं तापयन्त्या आकृतेः सहसाऽऽदरप्रह्वं,······ दृष्ट्वातमन्यथा क्रोधताम्रं······अपशब्दोच्चारणप्रवृत्तं······संनियम्य सहसा-ऽऽत्मानं पुनः स्वयमेव प्रणतं······गदन्तं च मंद्रेण स्वरेण ।

जयतु जयतु राजाधिराजः' ! 'सुलतानुस्सलातीन जिन्दःबाद !'

यवनराजधान्यां यापितात्······यवनराजसैनिकसंगठनकार्यपद्धतेः निःशब्दे निरीक्षणे, तस्याः भारतीयपद्धत्या सह तुलने, भारतीयपद्धतेः दोषाणामाकलने, विविधसंकल्पकरणे चाविदितगतसंवत्सरं व्यतीतात्······ सुदूरात्······अतीतकालादिवाऽऽगच्छतः······विविधाः स्मृतीरतीतसख्यसाक्षि-णीरुद्भावयतः······तान् असकृत् श्रुतान् शब्दान् निशम्य—पुनरिव प्रत्या-जगाम् तस्य चैतन्यज्योतिः ।

सह च तेन तस्य तीव्रा संवेदनशक्तिः

इयती नूनं तीव्राऽऽसीत् सा यत् यदि हि सा सहिता नाभविष्यत् तयेव तीव्रया नैतिकसाहसशक्त्याऽद्भुतात्मिकसामर्थ्यप्रदया······तर्हि सा नूनं तमुन्मत्तमेव अकरिष्यत्······उन्मत्तं······आत्मघातकं वा ।

उत्तंभितः परंतु तया परमेश्वरप्रदत्तया नैतिकसाहसशक्त्या······सः ······वास्तविकभारतीयसामर्थ्यसंपन्न······शशाक·········'अवलोकयितुं······ स्थिरया' निर्भीकयाऽनपराधबोधनिःसंकोचया······न केवलमनपराधबोध-निःसंकोचया अपितु स्वकर्तव्यकरणबोधगर्वितया······दृष्ट्या तां आकृति ······निशम्य तान् प्रणतिशब्दान् शनैः शनैः उन्मज्जन्तीमिव विचारसाग-रात्,······उत्थापयन्तीमीषद् नयन्तीं किंचिन्मुखसमीपे वामहस्तधृतं सौवर्णं मद्यचषकं······स्थिरीभवन्तीं तदवस्थायामेव······वलयन्तीं स्वां ग्रीवां

बदरिकाप्रमाणमौक्तिकमालामंडितां······अवलोकयन्तीं तौ······निगडयन्तीं च स्वदृष्ट्या तस्य दृष्टिं······तस्यैव एकाकिनः दृष्टिम् !

कीदृशी आसीत् तस्या आकृतेर्दृष्टिः ?······तस्य यवनसम्राजः ?······ तस्य भूतपूर्वस्य मित्रस्य ?······तस्य सनातनस्य अमित्रस्य ?

कीदृशी ?······इति तु अशक्यप्रायमेवासीत् विनिश्चेतुं स्वयं तद्विषयीभूतस्य कृते सुखपालस्य !

कथं नु तदन्यथा भवेत् कृतेऽस्य लेखकस्य देशकालान्तरव्यवहितस्य ?

तत्······न कर्तव्यः प्रयत्नः अशक्यस्य शक्यकरणाय ।

अथवा······कर्तव्य एव ।······न फलप्राप्त्याशया,······अपितु स्वकर्तव्यकरणमात्रेच्छया ।

स्थिरा······तर्हि आसीत् तस्य दृष्टिः ।······स्थिरा······निर्निमेषाः······ आरक्ता······मद्यपानवशात्······अन्तर्ज्वलत्क्रोधवशाद्वा आताम्रा ।······ अविचलाऽऽपिंगलाक्षिकूटका च ।······तीक्ष्णा······स्वलक्ष्यीभूताऽऽभ्यन्तरतमभावतरंगावगाहनक्षमा ।······स्वयं तु गूढा······दुरवगाह्या······स्वस्थूलतमभावकल्लोलावगूहननिपुणा ।······अत एव तु···अविज्ञेया······अविनिश्चेया अविश्लेषणीया······तिरस्कारदुःसहेति वा······आदरप्रह्वेति वा······अधिक्षेपारुंतुहेति अपेक्षाभंगदुःखमुखरेति वा··क्रोधवाचालेति अनुतापमूकेति वा ।

एतत्तु शक्यं······सर्वथा शक्यं······वक्तुं यत् यदि हि सः भग्नमनोरथः जयपालपौत्रः पाञ्चनदः राजकुमारः उत्तंभितः नाभविष्यत् तया नैतिकसाहसशक्त्याऽद्भुतया भाग्यवशात् तस्मिन् तदा स्वयंस्फूर्तया······उत्तंभितः संरक्षितः पिनद्धश्च तया······तर्हि सः विगलितः विचूर्णितः विखण्डित एवाभविष्यत्······नितान्तमसमर्थः सोढुं तं दुःसहं प्रवाहं अनवरतं दृष्टेस्तस्याः !

'सुल्ताननुल्मुअज्जम जिन्दःबाद !'—निरुद्धश्वास इव स्तब्धे तस्मिन् मध्याह्नेऽपि मंदप्रकाशे विविधकुसुमगुच्छसौरभजडे गर्भकक्षे पटप्रासादस्य सहसा निनादितेन समादरमन्द्रेणापि स्फुटपरिलक्ष्यमाणाऽऽतुरभावेनार्द्धावनतसेनापतिप्रमुखमुखात् निःसृतेन जयघोषेणात्रुट्यत सः दृष्टिनिगडः······ निःशब्दमुखरः ।

क्षणमेकं निबध्य ताम्रतरां स्वां दृष्टिं मुखे स्वसेनापतिप्रमुखस्य······

तथा विक्षेपकारिणः······पुनराबद्ध्य च तां उपरि मुखस्य निर्विकारस्याऽऽबद्ध्यशृंखलाविनिगडितावेव भुजौ वक्षसि अचलाचलभावेन् तदभिमुखं तिष्ठतः स्वस्य भूतपूर्वस्य मित्रस्य,······मित्रादपि अधिकस्य···बान्धवस्य, ······बान्धवादपि अधिकतरस्य सोदरस्य·····सुखपालस्य,······न न सुखपालस्य,······अपितु नौशस्य······तद्गूढतमरहस्याभिज्ञस्य······तद्वैयक्तिकसुखदुःखपरिचितस्य······तदंतरंगतमविचारविदः नौशस्य,······शनैः शनैः ······अनिच्छन्निव······प्रसारयामास स्वं दक्षिणं भुजदण्डं,······उत्थापयामास तेन एकं धवलपीतं (—स्यान्नाम-हस्तिदन्तनिर्मितं-) दण्डं सौवर्णाग्रभागमण्डितं,······आजघान च तेन एकं सौवर्णं तालं स्वसमीपवर्तिनं······ एकवारमेव,······आज्ञापयामास च तद्ध्वनिसमकालमेवाविर्भूतं, (-स्यान्नाम समीपवर्तिनि कक्षान्तरे आदित एवावस्थाय आवाहनं तत् प्रतिक्षणं प्रतीक्षमाणं-) आविर्भूय चावनतेन उत्तमांगेन तदाज्ञामपेक्षमाणं स्वममात्यं दृष्टिक्षेपेण एकमात्रेण प्रोद्घोषयितुं स्वामिद्रोहदण्डम् !

आबद्ध्य स्वामविचलां शान्तां दृष्टिं तन्मुखे ताटस्थ्येन लोकविलक्षणेन क्रियास्तस्य एताः सर्वा अवलोकयत्······अस्फुटस्मितरेखालसन्मुखमंडलः······विचारमग्नः······सः जयपालपौत्रः······आकर्णयन्नपि नैवाकर्णयामास तां दण्डघोषणां—'सुलतानुस्सलातीनस्य फखरे-सलातीनस्य हाकिमे आलाए हिंदुस्तानस्य अमीनुलमिल्लतस्य मालिकेसलतनस्य सम्राजः महमूद-बिन्-सुबुक्तिगीनस्य शरणागतवत्सलायां सर्वाभयप्रदायां कृपाछत्रछायायां तथा शरणागतस्य, नीचतमोचितं कापट्यमाश्रित्य शनैः शनैः तद्विश्वासमर्जितवतः, तेनानुसृत्य स्वं विश्वासशीलं परमोदारं स्वभावं स्वपराक्रमार्जितनवीनतमप्रदेशप्रशासनभारस्य वहने निरपवादमधिकृतस्य, विस्मृत्य तेन कृतान् बहुविधान् उपकारान् अवलोक्य तं विषमपरिस्थितिपंकनिमग्नं स्वयमेव तं भूभागं निगलितुं प्रवृत्तस्य, विभ्रश्य दुर्बुद्धिवशात् एकमात्रसत्यधर्मपथात् तत्प्रदर्शितात् मूर्तिपूजकधर्मं पुनरपि अंगीकृतवतः, एवंप्रकारकेण व्यवहारेण स्वेन स्वोपकारिणं स्वामिनं दष्टुं प्रवृत्तं कालसर्पमपि न्यक्कृतवतः नरापसदस्य तस्य कृते प्राणदण्ड एव योग्यः,······ परंतु स्वामिना परमोदारस्वभावेन न स केवलं न दण्ड्यते प्राणदण्डेन,····· अपितु-निक्षिप्यते केवलं आजीवनावसानं कारागृहेऽसूर्यंपश्ये शोचितुं स्वं

दुःसाहसं,······उपक्रियते च प्रदाय तस्मै अपूर्वमवसरं श्रोतुं प्रतिदिनं सैनिकदूतस्यैकस्य विशिष्य तदर्थं नियुक्तस्य मुखात् वृत्तान्तं प्रगतेः तद्देश-बान्धवानां स्वामिना परोपकारशीलेन सत्यधर्मपथे आनीयमानानाम् !'– इति समुद्घोषयन्तीम् ।

आम् !······आकर्णयन्नपि तां दण्डघोषणां (–स्पष्टत एव अनुमाय तस्य बन्दीभवनं(–अहो आत्मविश्वासः प्रत्यर्थिनः !–) आदित एव सुविचार्य स्वयं तत्प्रत्यर्थिना निर्द्धारितां–) नैवाकर्णयामास स वीरः ।······ आकर्णयामास वा चित्तैकदेशेन ।······एकदेश एव हि तस्यातिसंवेदन-शीलस्य चित्तस्य व्यापृत आसीत् तस्य श्रवणे ।······अन्यस्तु व्यग्र आसीत् तस्यारुंतुदस्य भागस्य गवेषणे ।······ततोऽपि अन्यः पूर्ववत् तत्संमुखासी-नस्य पूर्ववत् तं एकाग्रयाऽविचलितया गूढयाऽपि अधुना अस्फुटोल्लसज्जि-ज्ञासाभावया दृष्ट्या तं ध्यायतः तस्य सहजामित्रस्य मुखस्य परीक्षणे ।

दण्डघोषणायाः यवनराजप्रशंसकं भागमाकर्णयामास सः सोपेक्षम् । स्वनीचताविनिन्दकं सोपहासम् । प्राणदण्डप्रत्याख्यानपरं साविश्वासम् । अन्तिमं चाश्रुतपूर्वानपेक्षितपूर्वावाञ्छितपूर्वावसरप्रदं साश्चर्यम् ।

सावधानीकृतश्च तत्क्षणं साहाजिक्या प्रत्युत्पन्नयामत्या यत् तथाऽ प्रदाय प्राणदण्डं (–तेन स्वयमुत्प्रेक्षितं, स्वीकृतं चार्थापत्तिसिद्धत्वेन–), केवलं आजीवनकारावास दण्डं ददतः······तत्रापि कारागृहे······अस्तु नामासूर्यंपश्ये······सैनिकदूतमुखेन प्रत्यहं भारतवर्षसंबंधिनं वृत्तान्तं तं श्रावयितुं स्वयं अंगीकुर्वतः, तत्प्रत्यर्थिनः मनसि आसीत् कुटिलतमः······ नीचतमः······कोऽपि उद्देशः······सः क्षणमेकंजिज्ञासाकुलाकुलः······ पर्यैक्षत प्रत्यर्थिमुखं······पिपठिषुरिव तत्र तन्मनोगतमुद्देशं ।······अवलोक्य तत् स्फुटतरस्मितरेखाकुत्सितं दृढतरीभूताशंकः······आरभत गवेषितुं तं एकाग्रेण चित्तेन ।

कृतारम्भ एव······अलभत तम् ।

लब्ध्वा च बभूव······क्षणमेकमवसन्नः ।

अवसन्नः······असमर्थश्च विनिश्चेतुं स्वां प्रतिक्रियां······परस्परविमर्दि-भावनाद्वंद्वयुद्धाकुलः ।

क्षणमेकमियेष सः······आशाशिखरे विराजमानः······हसितुं······

उपहसितुं तत्प्रत्यर्थिनं,⋯⋯कथयितुं च तस्मै⋯⋯श्रावयित्वा सर्वान्–
'विप्रलभ्यते रे अहंमन्य !⋯⋯विप्रलभ्यते त्वया स्वः क्षुद्रः आत्मा⋯⋯एवं
अत्यधिकं⋯⋯आत्मनः सामर्थ्ये⋯⋯आत्मनः भाग्ये⋯⋯विश्वसता !⋯⋯
किं मन्ये–प्रातः स्मरणीयचरितेन राजाधिराजेन जयपालेनात्यन्तं वियो-
जितः⋯⋯महाराजेनाऽऽनन्दपालेन विरहितः⋯⋯किंबहुना⋯⋯पालराज-
वंशेन भारतवर्षद्वाररक्षकेण शून्यः⋯⋯अयं मम देशः⋯⋯विहाय स्वं सना-
तनं आर्यं धर्मं⋯⋯प्रभ्रश्य विश्वकल्याणाकांक्षिण्या आर्यसंस्कृतेः⋯⋯तव
धर्मं⋯⋯परधर्मं⋯⋯स्वीकरिष्यति इति ?⋯⋯एवं च मन्यमान. किमंगी-
करोषि प्रौढ्या अदाहं दग्धुं ममान्तःकरणं, अरक्तस्रावं विदारयितुं मम
स्वान्तं, अखड्गपातं शकलीकर्तुं मम हृदयं⋯⋯श्रावयित्वा मां बलात्
आत्मनः दुष्प्रसहविजययात्रावृत्तान्तमहरहः ?⋯⋯यद्येवं⋯⋯यद्येवं⋯⋯तर्हि
आकर्णय रे मूर्ख !⋯⋯आकर्ण्य मम कथां⋯⋯मम पितामहस्य कथां⋯⋯
अस्या भारतभुवः प्रत्येकः वृद्धः⋯⋯प्रत्येकः प्रौढ़ः⋯⋯प्रत्येकः युवकः⋯⋯
भूत्वा जयपालः भूत्वा आनन्दपालः भूत्वा सुखपालः⋯⋯प्रतिरोत्स्यति तव
दावानलदाहकं पन्थानं⋯⋯करिष्यति चान्ते त्वां⋯⋯त्वां रे अहंमन्य त्वां⋯
नरकपथपथिकम् !'

क्षणमपरं⋯⋯निराशागर्ते पातालगभीरे निपतितः⋯⋯इयेष आक्रंदितुं
⋯⋯मुक्तकण्ठमाक्रंदितुं⋯⋯प्रार्थयितुं च स्वप्रत्यर्थिनं⋯⋯'कुरु दयां⋯⋯कुरु
दयां रे ! अस्मिन् जीवनमृते हतदैवे युवके ।⋯⋯वियोजय चैनं अपुनर्यो-
गाय प्राणैरेतदीयैः ।⋯⋯नहि अयं⋯⋯आदित एव दग्धः स्वपितामहचित्तेन
दहनेन⋯⋯आदित एव पराभूतः स्वपितृपराभवेन⋯⋯आदित एव भग्नः
स्वमनोरथभंगेन⋯⋯नार्हति रे नार्हति⋯⋯प्राणदण्डादपि कठोरतरं दण्ड-
मिमम् ।⋯⋯स्वीकरोति रे स्वीकरोति अयं⋯⋯कुपुत्रः अस्या हतभाग्यायाः
भुवः⋯⋯नास्ति एतत्कालीने समस्तेऽपि देशे एकोऽपि वीरः समः त्वया⋯⋯
समर्थः प्रतिरोद्धुं तवाभियानस्य रंहः ।⋯⋯स्वीकरोति अयं सर्वमपि ।⋯⋯
प्रार्थयति च केवलं त्वां वियोजयितुं एतं प्राणैरेतदीयैः दृष्टादर्शनीयैः श्रुता-
श्रोतव्यैः पापैः !'

आकुलाकुलस्य एव चानेन द्वंद्वयुद्धेन घोरेण पपात तस्य दृष्टिः क्षण-
मेकं विभ्रान्ता उपरि मुखस्य तत्प्रत्यर्थिनः⋯⋯तत्पितामहघातकस्य⋯⋯

तत्पित्रपकारकारिणः यवनराजस्याक्रामकस्य ।······उत्तंभयामास च तं सहसा······प्रदाय तस्मै क्षणमेकं विलुप्य द्विगुणितेन वेगेन पुनराविर्भूतस्य नैतिकसामर्थ्यस्य पूरेण तीरोत्पीडकेन······प्रचण्डं उत्तंभनम् ।

उत्तंभितः तेन दृढतमेनोत्तंभनेन······विनिर्गतश्च तस्मात् क्षणिकादपि तीव्रतमात् भावनाद्वंद्वयुद्धात्······पूर्ववदविचलितदृष्टिः······पूर्ववदस्फुटास्मितरेखालसन्मुखमण्डलः······पूर्ववदचलाचलभावेन तत्संमुखीनः······सः······ निर्जगाम तस्मात् कक्षात्······धीरगंभीरैः······'नामयद्भिरिव धरित्री'······ पदैः,······निर्जगाम तस्मात् सैनिकसंनिवेशात्,······निर्जगाम तदीयात् राज्यात्,······निर्जगाम तदीयाद्देशात्,······निर्जगाम दैनंदिनात् जीवनात् ······जीवनपदार्हात् जीवनात्······अपुनरागमनाय !



## पञ्चमः परिच्छेदः

—'अहो वैदग्ध्यम् !······अहो वैदग्ध्यम्······उक्तेः'—प्रशशंस एवं स्व-राजकवेः कवितां······यवनसम्राट्······आसीनः सुखासनेऽवस्थापितेऽधस्तात् एकस्य महतः अशोकवृक्षस्य, भारतवर्षात् अनेकसंवत्सरपूर्वं महता कौतुकेन स्वराजधान्यामानीतस्य, प्रासादारामे संस्थापितस्य, एभिः संवत्सरैः अन-वरतेन प्रयासेनारामप्रमुखेन स्वयं संगोपितस्य, परिवर्द्धितस्य, सम्प्रति प्रवृद्धशाखावितानस्य, मन्दसमीरकम्प्यमानविशालवर्णसम्भारस्य, स्वयमपि कव्युक्तिमभिनन्दयत इव···अवलोकमानः कदाचित् स्वसमीप एव आसनान्तरे साधारणे सादरमुपविष्टस्य, वारंवारमवनमय्य स्वमस्तकं साधुवादं स्वामिनः सबहुमानं स्वीकुर्वाणस्य राजकवेराननं,······कदाचित् सौंदर्यम् विस्तृतस्या-रामस्याऽऽसमन्तात् प्रसृतस्य सायंसंध्यारागस्नातस्य,······कदाचिच्च बालकौ 'पञ्चवर्षानधिकवयसौ महार्हवेषौ शाद्वलायां मृदुलमृदुलायां अश्वीकृत्य कृतकंभल्लौ इतस्ततः उन्मुक्तभावं धावन्तौ,······आस्वादयन्निवाऽऽकण्ठ-मज्जनं सुखसागरे ।

प्रशंसमानस्यैव चाटूक्तिं तत्स्तुतिकारेण निबद्धां तस्य पपात दृष्टिः अकस्मात् उपरि एकस्य परिचितस्याप्यपरिचितस्येव भासमानस्य, म्लान-मुखमुद्रस्य प्रौढे वयसि विद्यमानस्य, सेवायां तस्यैव दासप्रमुखेनानिच्छयेवा-नीयमानस्य पुरुषस्य ।

तत्क्षणमेव सावधानश्च······प्रदाय तिलाञ्जलिं सुखसागरनिमज्जनानु-भवाय, तत्पुरुषनामधेयस्यैव संस्मरणे प्रवृत्तः सहसा सस्मार······उज्जगाद च तत्······'याकूब !'

अयमत्रोपस्थितः दासः ! 'बन्दा हाजिर है—' सहसा समुपसृत्याह सः पुरुषः······कृतार्थ इव······अवनमितोत्तमांगः ।

'को नाम समाचारः······मूर्तिपूजकानां देशस्य तस्य हतभाग्यस्य ?'—हस्तोत्क्षेपमात्रेणापसारयन् राजकविं इतरांश्च······अपृच्छत्सः······अवलोक-मानः तत्पुरुषमुखमेकाग्रया दृष्ट्या ।

'नानुकूलः······स्वामिन् !' प्रत्यवदत् सः अपराधबोधेन मिमंक्षुरिव भूतले ।

'नानुकूलः ?······हं······। तत्तु तवाननमेव दर्शयति दर्पणवत् ।······ कीदृशः रे त्वं गुप्तचरः ?' स्वाः भावनाः एवं स्वमुखनागदन्ते दधानः सर्वजनपठनार्थम् ?'—अकस्माद्विहस्यावदत् तत्स्वामी ।

न किंचिदपि प्रत्यवदत्,······अधोमुख एवातिष्ठत्···स तस्य भृत्यः···· प्रत्यागतप्राण इव निशम्य तं परिहासम् ।

'—कथय तावत् तव······प्रतिकूलं समाचारं—' कतिपयक्षणानन्तरं अवदत् तत्स्वाम्येव ।

'सः······विनष्टमतिः······आनन्दपालः—' आरभत चरः ।

—'कथं······पुनरपि स आनन्दपालः ?'—तीव्रस्वरमाक्षिपत् तत्स्वामी । ······'साक्षात्कृत्यापि स्वं पितरं······वृद्धं तं जयपालं···तथाऽस्माभिर्भग्नं··· स्वं पुत्रं······तं सुखपालं······तथाऽस्माभिर्दण्डितं,······आत्मानञ्च तथा पराजितमसकृत्······न जागर्ति भ्रांतिस्वापात्,····साक्षात्करोति च सनातनं सत्यं यत् सैनिकास्तस्य (—यदि नाम कापुरुषास्तस्याल्यप्राणाः भीरुस्वभावाः दुर्बलाः सैनिकपदव्यपदेशार्हाः !—) न लेशतोऽपि तुल्याः सैनिकैरास्माकीनैः,······नेता च तेषां (—नेतृगुणदरिद्रः !—) नेतृभिरस्माभिः ?'

प्रकृत्या संयमित भावस्य स्वामिनस्तं क्रोधोद्रेकं दृष्ट्वा चकितचकितः स वार्त्ताहरः······अनपराध्यपि अपराधी इव······मौनसमाश्रय एव आत्मनः कल्याणं ददर्श ।

—'किं कर्तुमीहते स मूढः······अधुना'—कतिपयक्षणानन्तरं अपृच्छत् स तस्य स्वामी किंचिन्न्यूनीभूतक्रोधः ।

'विनष्टमतिः ईहतेऽधुना स्वयमाक्रमितुं पौर्वात्यान् प्रदेशान् स्वामिनः साम्राज्यस्य !'—अशक्नुवान इव धारयितुमधिकतरं अप्रियां वार्त्तां मनसि ······सहसाऽगदत् तद्दासः ।

'नूनमीहते मशकः आक्रमितुं दीपशिखाम्'—अस्फुटमुवाच तत्स्वामी चकितः ।

'ईहते पणीकृत्य प्राणान्,······स्वामिन्—' आतुर इव प्रकटयितुं सम्यक् वैपरीत्यं परिस्थितेः······आवेगेनावदत् अन्यः ।······'स्वराज्यात् तथा

प्रपलायितेन काश्मीरनृपं च शरणीकृतवता तेन महती खलु अस्ति सेना संगठिता·····एभिः त्रिभिः वर्षैः अनवरतमुद्देशेनानेनैव प्रयतमानेन।····· स तस्य पुत्रः·····धर्मपालः·····व्यतीत्यानेकानि वर्षाणि अन्यत्र·····न जाने कुत्र·····केन वोद्देशेन·····अकस्मात् तत्सन्निधौ धूमकेतुरिव समुद्भूतः····· स्वपितृदाहकेन दहनेनादित एवाहर्निशं दह्यमानं तं·····अधिकमेव दहति पुनः पुनः समुपस्थाप्य तत्पुरतः उदाहरणं (तन्मतानुसारेण) अभूतपूर्वया आत्माहूतेः प्रदत्तायास्तत्सुतेन·····तेन सुखपालेन।·····प्रोत्साहयति च तं दिवानिशं सेनायाः·····तत्रापि अश्वसादिबहुलायाः··संगठने। श्रुतं मया··· स्वामिन्!·····संप्रति सेनायां संगृह्यमाणाः सैनिकास्तस्य बलवत्तराः समर्थतराः सहने शैत्यातिशयस्य·····दृढतरसंकल्पाश्च।·····खोकरसदृशाः सैनिकाः!·····श्रुतं मया एतदपि यत्–स्वसामर्थ्यपरिवर्द्धनेनानेनातृप्तः सः चेष्टते अर्जनाय मित्रसाहाय्यसम्पदः अपि बलवत्तराया!'

–'चेष्टतेऽर्जनाय मित्रसाहाय्यसम्पदः?'–सहसा सावधान इवापृच्छत् तत्स्वामी।

'एवं–' प्रत्यवोचत् अन्यः·····समाश्वस्त इव। 'दृष्टा मया····· वणिग्वेषधारिणा·····पण्यवीथिकासु सैनिकसंकुलासु राजधान्याः काश्मीर-राज्यस्य·····बहवः विचित्रवेषधरा विभिन्नशस्त्रभीषणाः विविधभाषा-भाषिणः सैनिका इवाटन्तः।····जिज्ञासिताश्व तत्तद्देशानधिकृत्य समुपजात-कौतूहलेन पांसुलपादेनेव ग्रामीणेन वणिजा मया·····ज्ञाताः तत्रत्येभ्यः श्रेष्ठिभ्यः·····आवन्तिकाः·····कान्यकुब्जा इति'।

'आवन्तिकाः·····कान्यकुब्जा····इति?···केषां केषां खलु भारतीयानां नृपाणां साहाय्यसम्पत् विशिष्याधिगता तेन पांचनदेन·····एतावत्काल-पर्यन्तम्?'–सहसा समुपजातरस इवापृच्छद् यवनराजः।

'प्रायः सर्वेषामेवाऽऽर्यावर्तवर्तिनां नृपाणां·····स्वामिन्!·····तत्रापि विशिष्य·····उज्जयिनीनरेशस्य·····गोपालदुर्गाधिपस्य·····कलिंजयनराधि-पस्य·····इन्द्रप्रस्थराजस्य·····अजामीलाधीशस्य च–' आह परिगणयन् नामानि·····सः याकूबखानः।

'श्रुतं मया कर्णोपकर्णिकया नगरस्य चत्वरेषु यत् अन्ये बहवः राजानः ·····ये खलु एतावत्कालपर्यन्तं वशीभूय वंशपरंपरागतस्य दृढबद्धमूलस्य

पारस्परिकेर्ष्याभावस्य······ताटस्थ्यं······अंगीकृतवन्त आसन्,······तेऽपि ······तेन धर्मपालेन तर्कनिपुणेनोद्बोधिताः······समुद्घाटितलोचना इव······ पांचनदहितेषु स्वं स्वं हितमपि निहितमवलोकयन्तः······ऐकमत्यमभूतपूर्व-सदृशमुपपन्नाः······तात्कालिकेन रूपेण विस्मर्तुं पारस्परिकं वैरभावं······ कर्तुं च पांचनदनरेशसेनासाहाय्यं स्वस्वसेनाभिः'—अग्रे उवाच सः ।

'पांचनदनरेशस्य ध्वजच्छायायां योद्धुं तत्पराभिः ?'—साकूतं अपृच्छत् गजनीश्वरः ।

'अयमेव प्रश्न आसीत्······विषयः विचारविनिमयस्य······तत्तद्दूतमुखेन प्रत्यहं तत्र क्रियमाणस्य'—सस्मितमाह स गूढः पुरुषः ।

'एतस्यापि प्रश्नस्य······आपातक्षुद्रस्यापि हृदयस्पर्शिनः दूरगामिपरि-णामस्य च······समाधाने सफलीभविष्यति नूनं स चपलमतिः धर्मपालः—सत्वरमग्रे उवाच च सः ।

'असकृत् श्रुतं एतन्नाम—धर्मपालः······धर्मपाल इति······अस्माभिः ।··· कीदृशोऽयं नाम पुरुषः ?'—सद्यः कौतूहलाकृष्टचित्त इवापृच्छत् यवनेश्वरः ।

'मयाऽपि एतावत्कालपर्यन्तं······नावलोकितः······स्वामिन् !'—लज्जित इव प्रत्यवदत् स गुप्तचरः ।······'श्रुतः परंतु······जयपालस्य पौत्राणमन्यतमः······प्रियतम······इति ।'

'आनन्दपालस्य पुत्राणां तर्हि अन्यतमः !'—चिन्तयन्निवकिमपि स्वगत-मिव जगाद यवनेश्वरः ।······'अपि सः स्पृह्यति सिंहासनाय स्वपितुः ?—' आतुर इवापृच्छच्चाग्रे ।

'न लेशतोऽपि'—दृढस्वरमुवाच स वार्त्ताहरः······सवितर्कमिवावलोकयन् स्वस्वामिमुखम् ।

'एतावान् तर्हि किमिति अभिनिविष्टः प्रतीकारेऽस्मदभियानानाम् ?' सविस्मयमपृच्छत् तत् स्वामी ।

निरुत्तर एवातिष्ठत् तत्सेवकः अधोमुखः ।

'अनेकाः खलु घटना घटिता अस्माभिः प्रत्यक्षीकृताः······एभिः कति-पयैः व्यतीतैः वर्षैः,······घटना आस्माकीनैः भारतवर्षाभियानैः संबद्धाः ······कथं खलु अयं आनन्दपालः······अजानात् वास्तविकमुद्देशमस्माकं तस्य मूलस्थानाभियानस्य ?······मार्गं वा तस्य तद्राज्यमध्ययायिनम् ?······कथं

खलु सुखपालः······तथा उपगतः मित्रत्वमास्माकीनं······अध्यगच्छत् तादृशं······स्वप्नेष्वपि अस्माभिरनुत्प्रेक्षितं······हृदयपरिवर्तनं ?······कः खल्वासीत् स ज्योतिर्वित्······यः तथाऽलभत साफल्यं पुनः संस्थापने नौश-सुखपालस्य हृदयेषु भारतीयानां प्रजाजनानां स्वभावतः कृपणेषु ?······एताः ······एतादृश्यश्च विविधा घटना।······उत्तराणि येषां······अस्माभिः······ प्रयत्याऽपि बहुबहुवारं च नाधिगतानि एतद्दिनपर्यन्तम्।······अपि नाम······ एतत्······'धर्मपाल'–इति चतुरक्षरं नाम स्यात् तासां सर्वासामपि घटनानाम् ······उत्तरम् ?' स्वगतमिवागदत् गजनीशः।

मूढ इव पश्यन् स्वामिमुखं······न किमपि उवाच वराकः सः सेवकः।

'किंवयाः अयं धर्मपालः' ? अपृच्छत् तं तत्स्वामी।

'नूतनवयाः······इति श्रूयते'–प्रत्यवदत् तद्दूतः।

'तस्य भार्या······कस्य नाम नृपस्य दुहिता ?······भगिनी वा ?' पुन-र्जागृतजिज्ञास इव सहसाऽपृच्छद्यवनेश्वरः।

'नास्ति तस्य भार्या।······अविवाहित एव सः।······श्रुतं मयानोत्सहते विवाहाय······मनसि कृत्वा परचक्रापदं राज्यं पैतृकमभिभवन्तीम् इति'–प्रत्यवदत् अपरः।

'लोकविलक्षण एवायं युवकः।······अपि श्रुतं त्वया······तदीयं किमपि वैशिष्ट्यं······वपुर्गतं,······वाग्गतं······व्यवहारगतं वा वैलक्षण्यं······, यद्वशात् सः······प्रत्यभिज्ञायेत······अपरिचितेनापि ?

'ईषत् पिंगलकेशः सः' सहसा समुपजातस्मृतिरिवाह स याकूबखानः। ······'अत एव–स असकृत् उल्लिख्यते–'अग्निपुरुषः' इति मदीयैः प्रशंसकैः ······अग्निपुरुष इति।······(सकुत्सस्मितं) भस्मीकरणाय यवनानां स्वयं धृत्वा पुरुषरूपं आविर्भूतः क्षात्रप्रतापाग्निः इति।

(सस्मितं) 'पिंगलकेशः ?······सुलभप्रत्यभिज्ञस्तर्हि सः।······ज्योति-र्विदस्तमात् तर्हि सः भिन्न एव।······नहि अस्माभिः एकदापि श्रुतः सः ज्योति-र्वित् पिंगलकेश इति'–उवाच विचिन्तयन् किमपि यवनेश्वरः।

'वर्णविपर्ययोऽपि तु शक्यः अनुष्ठातुम्'–असूचयत् मंदस्वरेण तस्य भृत्यः।

'आम् !······वर्णविपर्ययोऽपि शक्यः अनुष्ठातुम्'–अन्यमनस्क इव

प्रत्यवदत् तत्स्वामी ।……'न ज्ञातं त्वयाऽन्यत् किमपि वैलक्षण्यं तस्य ?'–हतोत्साह इव चापृच्छत् अग्रे ।

'नान्यत्……स्वामिन् !'–कृतापराध इव मंद्रस्वरं स्वीकृतवान् तत्-सेवकः । 'अन्यत् सर्वमपि तस्य एतावत् सदृशं यावनेन युवकेनाभिजातकुलोत्पन्नेन……यत्……ईषदपि कृतवेषवाक्व्यवहारपरिवर्तनः सः यवनयुवक एव ज्ञायेत यवनैरपि ।'

'भारतीयानां नृपाणामियं संजिघटिषा प्रतिकूल अस्माकं'–प्रत्यावर्तमानः प्रस्तुतप्रसंगं स्वीचकार तत्स्वामी ।

'अस्या अपि प्रतिकूलतरा संजिघटिषा साधारणानां जनानां तत्रत्यानाम् ।……एतावत्कालपर्यन्तं साधारणा जनास्तत्रत्याः आनुवंशिकेन तमोगुणेन (–तं ते सत्वगुण इत्यामनन्ति–इति तु अन्यदेतत्–) जाड्यमुपगता……आक्रमणानि स्वामिनः……स्वर्गीयस्य स्वनामधन्यस्य स्वामिपितुर्वा……औदासीन्येनैवावलोकयन्तः ताटस्थ्यमेव (–अस्मदुपकारकम्–) उररीचक्रुः ।……परंतु–कृतांजना इव तेन……निरलसं साधारणतमेष्वपि प्रजाजनेषु भ्रमता–धर्मपालेन……ते……एभिर्दिनैः……दत्ततिलांजलय इवौदासन्याय……अस्मदाक्रमणानां स्वयमपि प्रतीकारं कर्तुं बद्धपरिकरा इव स्वस्वसामर्थ्यानुसारं……लक्षिता मया ग्रामीणेषु भागेषु अटताः ।……गायन्त्यः गीतकानि……अचिरोपनिबद्धानि प्रशंसायां तस्य……सुखपालस्य (–तं तु ते सर्वे आर्यचाणक्यस्याधुनिकमवत्तारमेवामनन्ति !–)…कथयन्त्यः कथास्तस्य (प्रायः अतिशयोक्तिपूर्णाः) स्वबालकान् आश्चर्यविस्फारितनेत्रं विस्मृतक्षुधमाकर्णयतः……तेषां नार्य अपि तेषां सहकार्यं कुर्वन्त्यः अवलोकिताः स्थाने स्थाने–', सावेगमकथयत् स वार्त्ताहरः ।

'सर्प-पिपीलिका-कथा……तेषामेव लोककथावाङ्मयात् श्रुतचराऽस्माभिः स्वे बाल्यकाले……नूनं……प्रतिबोधिकाऽस्मिन् विषये'–सस्मितमाह तत्स्वामी ।

निशम्य तमुद्गारं……आपाततः असंबद्धं……क्षणमात्रं प्रतिरुद्धगतिः…क्षणमात्रं विस्मतः……स आरभत पुनः सविस्तरं वर्णयितुं युद्धसंनहनं……पांचनदकाश्मीरप्रदेशेषु विशिष्य……सर्वत्र दृश्यमानम् ।……एतावान् व्यग्रः स बभूव तस्मिन् वर्णने यत् चिरात् खलु मनसि चकार स्वामिनो विमन-

स्कत्वं······अन्यदेव–स्यान्नाम–किमपि चिन्तयतः।······मनसि कृत्वैव परंतु विलीनोत्साहः······कृतापराध इव सहसा मूकः······अलभतानुज्ञां स्वामिनः तद्दृष्टिक्षेपमात्रसंसूचितां······न्यवर्तत च तत्समीपतः······भाग्यमात्मनः बहु मन्यमानः।

'एवं तर्हि······सः······जयपालपुत्रः······मूढः······प्रयतते आक्रमितुं अस्माकं साम्राज्यं'–चिन्तयन् एवं न मनसि चकार तस्य निर्वृत्ति यवनेश्वरः।

'(सकुत्सं)–एकाकी सः न समर्थः आक्रमितुं जेतुं च क्षुद्रमपि भागं तस्य।······न सः समर्थः······न वाऽन्यः कोऽपि भारतीयः नृपः······प्रतिरोद्धुं मां मूर्तीकरणात् मम स्वप्नस्य······मम मनोरथस्य,······प्रतिरोद्धुं मां संस्थापनात् अभूतपूर्वसदृशस्यातुलबलविभवस्य तौरुष्किक-पारसिक-साम्राज्य-स्य।······(सतिरस्कारं)······नास्ति मध्ये तेषां······एकोऽपि······समर्थः प्रतिरोद्धुं अभियानानि मम।······सर्वे एव ते···कोमलशरीराः······कोमल-स्वभावाः······अबला इव।'

–'परंतु (सचिन्तः) (एकीभूतास्ते एव कदाचित् भवेयुः समर्थाः,······अपराजेयाः ममापि कृते।······का खलु सा उक्तिः······या तन्मध्ये सुप्रचलिता?······आम्!······'बहूनामप्यसाराणां संहतिः कार्यसाधिका'–इति।······महत् खलु सत्यं निहितं तेषामस्यां सूक्तौ।···महत् खलु सत्यं,···नाद्यापि अनुभूतं तैः मूर्खैः।······(स्मरन्निवातीतं घटनाविशेषं)······दिवंग-तेन मम तातेन······स्वजीवनस्य संध्यायां तेषां भारतीयानां संपर्के आगते-नापि······आकलितमासीत् एतत् दौर्बल्यं तेषाम्।······(सोपहासस्मितम्) अत एव वदति स्म सः असकृत्–'भारतीयास्ते सूक्तिमेतां मुखोद्गतां कर्तुं एव जानन्ति,······न हृदयंगमामिति।······तद्यदि नाम······अनेन चपलेन धर्मपालेन वारंवारं प्रबोधिताः······एतां सकृदपि आचरेयुः······सफली-भवेयुश्च (सफलीभविष्यन्त्येव ते–नात्र संशयः–) मम प्रतिरोधने······तर्हि महतः अनर्थस्य कारणीभवेयुस्ते।······समर्था भवेयुस्ते न केवले मदाक्रमण-प्रतिरोधने······अपितु मत्स्वप्नविध्वंसनेऽपि। (······कुतः हि देशान्त-राल्लभेय अहं एतादृशीमतुलां संपदं साम्राज्याधारशिलाभूताम्?······) ······न केवले मत्स्वप्नविध्वंसने···अपितु–मत्पैतृकराज्यविध्वंसनेऽपि।'

'शक्तिर्हि······सकृदप्यास्वादिता······मानवं प्राणिनं वा······नास्ति

अस्मिन् संसारे किमपि एतादृशं लक्ष्यं यन्नकरिष्यति तं उद्यतं साधयितुम् !'

'तत् क्षिप्रमेव प्रयोक्तव्या एतादशी उपाययोजना······या दृढतरीकुर्यात् तेषां पारस्परिकं विभेदं,······विफलीकुर्यात् तस्य······युवकस्य······एकीकरणप्रयत्नान्,······प्रतिरुन्ध्यात् तदेकीभवनक्रियाप्रवाहं,···उपायनीकुर्याच्च क्रमशः तेषां राज्यानि मह्यम् ।'

'दिष्टया उपाययोजना एतादृशी नातिकठिना कर्तुम् ।······तेषां······एकधर्मसूत्राबद्धानामपि····भाषिकप्रादेशिकसांस्कृतिकभेदभिद्यमानानां मनःस्थली अतीव उर्वरा भूमिः ।'

चिंतयित्वा चैवं आरभत स्वं विचारं कार्यरूपेण परिणमयितुम्······विना कालातिपातम् । अगाधोत्साहसम्पदः····'मनुष्यसंख्यामतिवर्तितुमभियोगं निरलसं भजमानस्य' तस्य हि यवनेश्वरस्य कृते आसीत् यः विचारः···स एव संकल्पः, यः संकल्पः······स एव निश्चयः······स एव कृतिविशेषः ।

गूढां उपाययोजनां निभृतं प्रयुज्जानोऽप्येवं······न सः क्षणमेकमपि शश्लये स्वशक्तिसंवर्द्धने प्रयोगे च तस्याः अवलोक्य योग्यमवसरम् । क्षणमेकपि न विसस्मार सः—राजनीतेः सार्वभौमिकं सार्वकालिकं सार्वजनीनं सत्यं—स्वयं शक्तिसंपन्नस्यैवोपकुर्वन्ति अनुकूलतमा अपि बाह्याः परिस्थितयः,······न तद्दरिद्रस्य ।

आजुहाव सः सर्वप्रथमं स्वान् सैनिकान्······उद्वृत्ततुरुष्कदण्डधारणाभियानात् सद्यः प्रत्यागतान् ।······यत्तुते·····श्रांता अपि······अत्यधिकशारीरिकक्लेशनिर्विण्णा अपि···स्वपारिवारिकजनमिलनोत्सुकोत्सुका अपि···तत्क्षणमेवादृत्य तस्यावाहनं पुनः प्रत्याजग्मुः स्वं निवेशं विनैव कालातिपातं······तन्नूनं व्यनक्ति तस्य सैनिकप्रियताम् ।······स्वयं जन्मसिद्धः वीरः······स्वयं समुत्सुकः नेतुं स्वान् सैनिकान् रणशिरसि (—तदपि समारुह्यानधिकविशेषं तुरंगमं—)······स्वयं तत्परः सोढुं विविधान् क्लेशान् सैनिकजीवनेऽपरिहार्यान्······सः······अलभत स्वसैनिकेषु प्रियताम्—इत्यत्र किमिवाऽऽश्चर्यम् ?

तस्य तत्प्रियतायाः·····आसीत् अन्यदपि कारणं गूढतरम् ।······अनादिकालात् दारिद्र्येण घोरेण पीड्यमानाः······ते······तुरुष्काः······समवलोक्य

स्वसमानधर्मानुयायिनामपि सांपत्तिकदृष्ट्या श्रेष्ठतराणां पारसिकानां जीवनशैलीं तां स्वयमपि अनुसर्तुं आतुराः······स्वसमानाऽऽकांक्षिणमभीप्सितसाधनसमर्थं नेतारं चिराल्लब्ध्वा सहसा उत्साहे नापारेणापूरिताः······विपरीततमास्वपि परिस्थितिषु तमनुगन्तुं कृतमूकदृढसंकल्पाः······सोढुं चापाततः परिहार्या अपि आपदस्तत्पराः······तस्मै सहकार्यं सर्वविधं ददुः ······अप्रेरिता अपि केनचित् कर्तुं तथा ।

के हि बलिष्ठाः शरीरेण······सांसारिकसुखलिप्साऽऽतुराः······अथ चानुद्बुद्धविवेकाः······प्राप्यापि स्वसमानधर्माणमथ च नेतृत्वशक्त्याऽसामान्यया उपेतं पुरुषं नेतृरूपेण······नानुभवेयुः उत्साहमाक्रमितुं जनान् परकीयान् ······स्वापेक्षया संपन्नतरान्······अथ च शारीरिकदृष्ट्या दुर्बलान्······ सुसंस्कृतानपि असमर्थान् रक्षितुमात्मानम् ?

विशेषतो······यदि परधनलालसां तेषां (—यां ते लज्जास्पदां क्षणमेकमपि नामन्यन्त—)···स्वसद्धर्मप्रसारेच्छाया सर्वजनाभिनंदनीययाऽवगुण्ठितां कृत्वा समस्तस्य जगतीतलस्य पुरस्तात् उपस्थापने पर्याप्तः चतुरस्तेषां स नेता ?

अथवा······अलंकारणमीमांसयाऽनया दुरूहया ।

प्रस्तुतमनुसरामः ।

एवं सप्ताहाभ्यन्तरे एव सन्नद्धसैन्यसागरः सः आस्वाद्याऽऽस्वाद्य लुण्ठिताया भारतीयसंपदः सुखं प्रवृद्धक्षुधैः, तदधिकलिप्सातुरैः, साधारणैः प्रजाजनैरभिनंद्यमानः,······परधनलुण्ठनाभियानं तस्य (वस्तुत बर्बरमात्रोचितं ! )स्वसद्धर्म प्रसाराभियानत्वेन प्रख्यापयद्भिः, लोकेषणया निर्मर्यादया पीडितैः धर्मगुरुभिराशीर्वचनैः साधारणजनभावनान्दोलनक्षमैः सभाजितः, ······(—स्यान्नाम स्वयमपि आत्मानं लोकोत्तरपुण्यकार्यकरणप्रवृत्तं 'प्रेषितं' मन्यमानः······युगपुरुषं मन्यमानः—),······आक्रम्य मार्गं दीर्घदीर्घमपि अविदितातिक्रान्तक्रोशं' कष्टबहुलमपि कालेन तावता समुपजातपरिचयं······ प्राप सीमाप्रदेशं निर्जनप्रायं पांचनदस्य राज्यस्य······दिनेषु कतिपयेष्वेव ।

बभूव च······अपारोत्साहोऽपि······सहसा सावधानः······कथयन् आत्मानं प्रतिक्षणं······'प्रत्यर्थी······भृशमपकृतः अस्माकं पितृचरणैः······ अस्माभिः······अवसरेऽस्मिन् कृतदृढतरसंकल्पः······कृतापारसैन्यसंग्रहः······

साधारणैरपि जनैः स्वस्वशक्त्यनुसारं सहक्रियमाणः······दत्वा तिलाञ्जलिं, अथवा दत्वेव तिलाञ्जलिं, आनुवंशिकाय परस्परवैमनस्याय कर्तुं सहकार्यं पुरस्तादागतैः नृपान्तरैः संवर्द्धितसामर्थ्यः······अस्ति संनद्धतरो योद्धुम् ! ······तत्······योद्धव्यः सावधानैरेव ।······पराजेयश्च प्रकारेण येन केनापि । अवसरेऽस्मिन्······रणभंगोऽस्माकं······विलोपयन् अत्यंतं एषां भारतीयानां हृदयेषु शनैः शनैः दृढमूलीभवन्तं भ्रमं (–भ्रम एव हि सः ! –)अस्माकमपराजेयत्वस्य······न केवलमवरुन्ध्यात् अस्माकमभियानानि भावीनि,······ अपि तु······समापयेदेवात्यन्तं मनोराज्यमस्माकम् !······कुतो हि······ देशात् भिन्नात् अस्मात् धनागमः अस्माकम् ?······कुतश्च विना तं समुत्कर्षः राज्यस्य पैतृकस्याऽऽस्माकीनस्य !'

अभिननन्द च स्वां सावधानतां······अचिरादेव······प्राप्य प्रदेशं भारत-मूलस्थानान्तरालवर्तिनं······साक्षात्कृत्य एकस्मात् उन्नततरात् भागात् तत्रत्यात् अपारं सैन्यसागरमानन्दपालस्य······पुरस्तात् तस्य प्रसृतं ······अवरुन्धानं मार्गं तस्य ।

साक्षात्कृत्य च तं सावधानतरः······निश्चिकाय पराजेतुं तत् रणशैल्याऽप्रयुक्तपूर्वया,······निश्चिकाय······नाक्रमितुं–अनुसृत्य स्वामसकृत्प्रयुक्तपूर्वां शैलीं–तमादित एव,······अपि तु······अवस्थातुं तत्समक्षं स्थिरभावेन,– अंगीकृत्याथदिव दक्षतां······संनद्धतामनवच्छिन्नाम्,······आरब्धुं पीडनं तस्य शनैः शनैरसकृत् संप्रेष्य लघूनि विद्युच्चपलानि दलानि स्वाश्वसादिनां कुन्तधारिणां आक्रमितुं तमुभयोः पार्श्वयोः······पार्ष्णौ,······अवरोद्धुं मार्गे एव······लुण्ठितुं च तत्रैव······दलानि सैनिकखाद्यादिसामग्रीवाहकानां राजधानीतः समापतन्ति,······आक्रमितुं च तं एवं पर्याप्तं पीडितं··· एवं खाद्यादिसामग्रीविनाशव्यग्रं······न्यूनीभूतमनोबलं समस्तेन स्वेन बलेन ······अवेक्ष्य योग्यतममवसरम् ।

आरभत तथा कर्तुमविलंबमेव ।

अलभत च फलं अपेक्षितं स्वचतुरयोजनायाः······मासाभ्यन्तरे ।

स्वयं सुरक्षितपार्ष्णिभागः······स्वयमनवच्छिन्नसैनिकसामग्रीप्रवाहः··· स्वयमारक्षितोभयपार्श्वः······सः······अचिरादेवारभत······उत्प्रेक्षितुं······ अनुमातुं······अनुभवितुं तं विशालं प्रत्यर्थिसेनासागरं······त्यजन्तं स्वां

क्षान्तिं·····स्वां धृतिं·····स्वां तितिक्षां·····असकृदनुभूयाक्रमणानि असामयिकानि क्षणिकान्यपि तीव्रक्षतिकारीणि यवनाश्वसादिनां·····मशक-दलानामिव क्षणदृष्टनष्टानाम् ।

प्रवृत्तप्रायश्च निभृते संनहने स्वबलस्याऽऽचिक्रंसया····· समवित्त एकस्मात् ह्रस्वशरीरात् कृष्णवर्णात्, धृत्वा छद्मवेषं तद्देशीयस्य भारवाह-कस्य दैनिकं कार्यं कृत्वा स्वं गृहं निवर्तमानस्य प्रत्यर्थिसेनासंनिवेशात् निर्गतात्, तं च द्रष्टुं निशीथे आगतात्,गूढचरात् आगामिनि एव निशीथे प्रत्यर्थिना संकल्पितस्य महत आक्रमणस्य वार्त्ताम् ।

संविद्य च तां·····अकस्मात् परिवर्तयामास स्वं विचारम् ।····· तत्याज आक्रमणस्य संकल्पं प्रियमपि ।·····निश्चिकाय जेतुं प्रत्यर्थिनमा-क्रमणनिरतमेव ।·····विबभाजार्द्धाधिकं स्वं बलं त्रिषु भागेषु ।·····आज्ञा-पयामास च तान् निर्वर्तितुं संनिवेशात् तत्क्षणमेव,·····अवगूहितुमात्मानं संनिवेशस्थलीमभितः वर्तुमानासु, तत्सैनिकबांधवैरादित एव परिरक्ष्यमा-णासु निम्नोन्नतासु दुर्गमासु सांद्रवनाऽऽच्छन्नासु उपत्यकासु,·····निरीक्षितुं ततः अनवरतं अधोदृश्यमानाम् स्वसेनासंनिवेशस्थलीं निर्वृक्षप्रायां,····· साक्षात्कर्तुं ततः प्रत्यर्थिसैन्यमाक्रमत् तां आगामिनि निशीथे,·····न कर्तुं किमपि,·····अपि तु-प्रतीक्षितुं प्रचण्डां रणघोषणां स्वसैनिकबांधवानामधो-दृश्यमानायां संनिवेशस्थल्यां रणप्रवृत्तानां·····'अल्ला हो अकबर !····· अल्ला हो अकबर !' इति रणघोषणां·····गगनवितानमिव विदारयन्तीं,···· निशम्यैव तां निर्गन्तुं स्वस्वावगूहनस्थलीभ्यः,·····आक्रमितुमधो आयोधन-व्यापृतं प्रत्यर्थिसैन्यं युगपत् असह्येनावेशेन,·····विनाशयितुं च तत् निःशेषम् ।

आदिष्टं च कर्तुं तथा·····तत्·····पालयामास तस्यादेशं अविलंबमेव ·····गूहमानं आत्मनः सर्वाश्चेष्टाः घने नैशतिमिरावरणे सर्वतः प्रसृते····· अनुत्पाद्यैव मनसि संशयलेशमारुह्य गगनचुंबिनां तारकास्पर्शिणां महा-वृक्षाणां शिखराणि तत्स्थलीगतागतानि दूरतः निर्निमेषमनवरतं निरीक्ष-माणानां, निरीक्षणनिशां तां तत्रत्यामन्तिमां मत्वा सोत्साहानां, आगामिनि निशीथे अवश्यंभाविनः आयोधनस्य तुमुलस्य विषये एकसकृत् चिंतयतां, प्रत्यर्थिसैनिकानाम् ।

एवं·····आगामिन्यां निशायां संकल्पितस्याक्रमणस्य संबंधिनं कार्य-कलापं (तन्मतानुसारं) निभृतं कुर्वाणस्य पांचनदस्य सैन्यस्य·····तत्-प्रतिकारस्य ततश्च स्वप्रत्याक्रमणस्य संबंधिनं कार्यकलापं गूढं कुर्वाणस्य यावनस्य च सैन्यस्य·····सः निशाशेषः·····तदनंतरं च चक्रनेमिक्रमेण संप्राप्तः सः दिवसः·····आपाततः निष्क्रियः·····आपाततः निर्विशेषः····· आपाततः निरुपद्रवः·····अनन्तप्रहर इव·····व्यतीयाय शनैः शनैः ।

आरभत चावतरितुं·····निश्चंद्रात्·····भाग्यहीनस्य जीवनादिव वेगेन कालुष्यमधिकाधिकमधिगच्छतः····· पूर्वदिगंगणात्····· घोरतरः····· कृत-दृढनिश्चय इवाऽऽवरितुं समस्तं प्राणिजातं निरुच्छ्वासं·····मूर्तः स्तोम इव पापानां भारतीयानां सैनिकानां फलभोगं स्वकष्तॄणां साक्षात्कर्तुमहम-हमिकयाऽऽविर्भवतां·····पूरः अन्धकारस्य ।·····विरराम सदागतिरपि सदागतिः स्वगमनात् स्वच्छंदात्,·····स्तंभित इव साक्षात्कृत्याऽऽसन्नप्रायं निषूदनमसंख्यानां सैनिकानां देशभक्त्या संप्रेरितानाम् ।·····आरभत चाव-तरितुं गगनांगणे·····अधिकतर इव दैनंदिनात्·····संमर्दः नक्षत्राणां····· प्रेर्यमाण इवातुरातुरया उत्कण्ठया राजस्या ।·····समुत्प्रेक्ष्येव आगामिनं संस्फोटं·····निशायां तस्यां निशाचराः श्वापदा अपि·····सदा इव····· नाक्रोशन्,·····अपि तु अभजन् मूकतां·····भयाकुलाकुला इव ।

भयाकुलाकुलवा इयं·····चराचरं जगत् तत्रत्यं व्याप्नुवन्ती·····सम-वर्द्धत एव प्रतिक्षणं·····यथा यथा····अक्षणदा सा क्षणदा····बलान्नुद्यमानेव सर्वनियामकया नियत्या·····शनैः शनैः उपससार स्वचरमोत्कर्षं····· निशीथकालम् ।

प्रससार चाकस्मात्·····दीर्घः निश्वास इव भारतभुवः·····एकः समीरकलोलः ।

आरभत च निःशब्दं विशालं बलं पांचनदस्य राज्ञः·····पादाति-तुरगि-बहुलं·····अप्रज्वालितालातसहस्रमेव·····गजदलविरहितमेव·····उपसर्तुमग्रे शनैः शनैः···आचिक्रंसया दूराद्दृष्टिपथमवतरतः क्षीणक्षीणे कतिपयालात-प्रकाशे धूमले संनिवेशस्थलेऽस्पष्टं दृश्यमानस्य, (तन्मते) विश्रब्धं सुप्तस्य प्रत्यर्थिबलस्य ।

उपसृत्व च·····आचक्राम तत् सहसा·····अकस्मात् प्रहतरणभेरी-

पटहादिरणवाद्यध्वनिनिनादितदशदिशं······सद्यः प्रज्वालितालातसहस्रोद्-भासिताऽऽसमन्तिकप्रदेशं······समुद्यतायुधं······कण्ठसहस्रनिःसरद्रणगर्जना-विदीर्णगगनवितानं······विदीर्य उरः भुवः प्रसह्योद्गतमिव पातालनिलयदलं प्रचण्डम् ।

उपलभ्य च पौरस्त्यं भागं प्रत्यर्थिबलसंनिवेशस्य कतिपयसैनिकप्रहरि-मात्रसंरक्ष्यमाणं हृष्टं,······आवेशोन्मादवशात् अविगणयत् संभावनां सहेतुकव्यूहरचनायाः प्रत्यर्थिबलस्य,······आरभताक्रमितुं तन्मध्यभागं निबिडतरसैनिकं······विस्फारिताक्षं······साट्टहासम् ।

आक्रमणव्यग्रञ्च नाजानात् प्रत्यर्थिबलं······अनपेक्षितरूपेण स्वल्पं··· शनैः शनैः······अविरम्य एव योधनात् (–योधननाटकाद्वा–) अपसरत् पृष्ठतः······आकर्षञ्च तत् मध्यभागे स्वसैन्यसंनिवेशस्य ।

नाजानात् तद्व्यूहं······अंशतोऽपि ।

अथवा······अपोह्य एकं······तन्नायकान्यतमं······वीरवरं अथ च संतुलितचित्तं······राजकुमारं धर्मपालम् ।

स हि······असकृद्दृष्टयवनसेनाविस्तरः······दृष्ट्वा तत् तदा स्वल्पं आदित एवास्वस्थचित्तः,······'अपि नामायं सिंहपराक्रमस्य अथ च शृगाल-चतुरस्य नवनवीनसमरव्यूहकल्पनानिपुणस्य यवनेश्वरस्य स्यात् नवीनतमः सेनाव्यूहः······गोमुखः अथ च परिणामभयंकरः इत्याशंकितः······प्रावर्ततोप-सर्तुं स्थानात् स्वात् नियतात् समीपे पितुः राज्ञः आनन्दपालस्य····आरुह्य दुग्धधवलं कृष्णतिलकसुशोभितभालमध्यं कल्याणिनं एकं तुरंगमं सेनां स्वां महता गर्वेणापारेणोत्साहेन अग्रे (–यममुखे ?–) नयतः, अनुरोद्धुं च तं विरमितुं तादृशेन वेगेनाग्रेसरणात्,······वितर्कयितुं च स्थिरचित्तेन संभावितं सेनाव्यूहं प्रत्यर्थिनः ।

प्रवर्तमानस्यैव तस्य······परंतु······अकस्मात् तत्र समुदभवत् प्रत्यर्थि-सैनिकसंदोहमध्यात्······निशम्य इव कस्यापि अस्पष्टोद्घुष्टामाज्ञां विरतात् सद्यस्तस्मादपसरणात्,······स्थिरतामुपगतात्,······सहसा रणावेशाविष्टात्,··· निरतिशयेन विश्वासेन सहसा प्रत्याक्रमणे प्रवृत्तात्······समुदगच्छत्······ कम्पयन्निव दिङ्मण्डलं······भाययन्निवातंकस्तब्धं नक्षत्रमण्डलं······आतंक-यन्निवाऽऽसन्नपर्वतकन्दरानिलीनं श्वापदजातं······रणघोषः······'अल्लाहो

अकबर ! ......अल्हाहो अकबर'! इति ।

अनुभूय तत् आकस्मिकं परिवर्तनं व्यवहारे प्रत्यर्थिसैनिकानां...... निशम्य तं जयघोषं तेषां......चकितचकितस्य, विरम्य क्षणमात्रमाकालनात् स्वधनुषः, संप्रहारात् स्वखड्गस्य, समुत्क्षेपात् स्वकुन्तस्य, संपातनात् स्व-परशोः,......'किं न खलु स्यात् कारणं अस्यनितान्तमनपेक्षितस्य व्यवहार-परिवर्तनस्यास्य च सर्वथाऽप्रासंगिकस्य जयघोषस्य' इति वितर्कयत एव बलस्य तस्य......समुदभवत् तस्याऽऽसमन्तात् दिगंतपर्यन्तं प्रसृतासु उपत्य कासु महान् स्वः......न जयघोषः......खणत्कारः खड्गानां......न टणत्कारः धनुष्याणां......अपि तु खुरस्वः दृषद्बहुलाभ्यः अधित्यकाभ्यः अधः वेगेन तीव्रेणावतरतामिव संख्यातीतानां तुरंगमाणाम् ।

अभवच्च सहसा दृग्गोचरस्तस्य विस्मयस्तब्धस्यैव......लक्ष्यीकृत्य रणस्थलीं तस्यैवाऽऽसन्नाधित्यकाभ्योऽवतरतामगणितानां उत्क्षिप्य भल्लान् प्रचण्डान् 'अल्लाहो अकबर ! ......अल्लाहो अकबर !' इति प्रतिगर्जतां असंख्यानां तुरगसादिनामाक्रमणातुरातुरोऽपि अनुशासनाबद्धः संमर्दः ।

परंतु (–अहो प्रभावः दृढसंकल्पस्य !–)......एवं विस्मयस्तब्धमपि तद्बलं पांचनदस्य राज्ञः......तन्मित्रबलसंवर्द्धितबलं......अवलोक्यापि आत्मानमेवमुभयतः परिवृतं प्रत्यर्थिबलेन एकसमयावच्छेदेन भीषणे आयो-धने प्रवृत्तेन......न क्षणमेकमपि चचाल स्वसंकल्पात्......धैर्यं......अनुससार च स्वशरीरमात्रसंरक्षणनीतिं कापुरुषोचितां,......अपि तु–उपोद्बलित-सामर्थ्यं सहसाऽभिभूय रणकोलाहलं तुमुलं, समुद्गतया मृत्युमिवाह्वयमानया रणगर्जनया रणावेशचण्डस्योदग्रमुखमुद्रस्य राज्ञः आनन्दपालस्य......समु-त्थितस्य किंचित् तुरंगमात् स्वात् उद्धृत्य दक्षिणं भल्लचण्डं हस्तं...... प्रावर्तत योद्धुं द्विगुणितेन आवेशेन ।

विशेषतः......तदीयं अनावृतमस्तकं अनुपानद्गूढपादं कृष्णशरीरं विचित्रवेषं खोकरदलं......स्वल्पमपि अनल्पबलम् ।

एवं......तद्विजयमालालिप्सया तीव्रयाऽहमहमिकया स्पर्धमानयोस्तु-मुलाऽऽस्कंदनप्रवृत्तयोः वज्रदृढसंकल्पयोस्तयोः तुल्यबलयोर्बलयोर्मध्ये श्रेष्ठतरं विनिश्चेतुमपारयन्ती विजयश्रीः......करधृतवरणमालिकैव......बभाज आन्दोलवृत्तिं आतन्निशावसानम् ।

अवसाने च तस्याः निशायाः······आकर्ण्य तत्तुमुलाऽऽस्कंदनवार्ता परिश्रान्तान्ताभ्यः गृहं स्वं प्रतिनिर्वतिताभ्यः तारकाभ्यः कौतूहलवशात् नियतिनिर्द्धारितात् समयात् पूर्वमिवोदयाचलशिखरं दिदृक्षया तीव्रयाऽधिरोहति भास्वति······प्रावर्तत······कृतनिश्चयेव······वरितुं आनिशं योधनव्यापृतमपि ईषदप्यश्रान्तं, तडिद्वेगेन रणक्षेत्रे रक्तमांसवसासृक्कर्दमदुर्गमे क्लोमगोर्दगुल्मयकृत्मूत्रपुरिषपिच्छले सर्वत्र भ्रमन्तं,······स्वान् सैनिकान् विपद्ग्रस्तान् रक्षन्तं, यावनान् विपत्करान् हिंसन्तं, रुधिरक्लिन्नकवचावृतशरीरं, अपगतपतिवशीर्षण्यं, वामकपोलभल्लक्षतनिःसरत्क्षततधाराद्राऽऽरक्तधवलश्मश्रुलमुखं रक्तारक्तोच्छूननेत्रं······पांचनदं राजानं आनन्दपालम्।

साक्षात्कृत्य मूर्तिपूजकानां भारतीयानामभूतपूर्वसदृशं तं पराक्रमं विस्मितः, पणीकृत्य स्वबलसर्वस्वमपि तं विफलयितुं बद्धपरिकरः, येन केनापि उपायेन विजयश्रियमपहर्तुं कृतनिश्चयः······यवनराजस्तु······ असहमानस्तस्यास्तं स्वविपक्षिपक्षपातं······मन्यमानः साक्षात् पांचनदं नृपमेव वैयक्तिकेन रूपेण सर्वानर्थकारणं······निश्चिकाय तत्क्षणं तं विनिपातयितुं येन केनापि सूक्तासूक्तेनाऽऽक्रमणेन,······उपससार तं पार्ष्णितः······ सामान्ययवनतुरगसादिवेषवशात् अपरिलक्ष्यमाणविशेषः,······निरीक्ष्य च तं सहान्यैः यवनसैनिकैः युद्धव्यापृतं····विदारयामास तस्याश्वं दक्षिणे पार्श्वभागे स्वकुन्तप्रक्षेपेण तीव्रवेगेन।

स वराकः पशुस्तु······आदित एव आनिशयुद्धव्यापारेण परिश्रान्तः ······तत्रापि अनावृतेषु स्वशरीरभागेषु असकृत् अनुभूय क्षतीः······लघ्वीरपि संतापकारिणीः······संत्रस्तः,······तत्रापि प्रतिक्षणं वर्द्धमानेन युद्धावेशेन स्वारोहस्य परां काष्ठां प्रापितः स्वसहनशक्तेः······न पारयामास सोढुं तां अन्तर्मर्मच्छेदिनीं क्षतिं,······उत्क्षिप्त्य च स्वं मस्तकं वेदनाविस्फरिताक्षमनावृतधवलरदं व्यालोलमुखनिःसरत्फेनिललालारसं, उत्थाप्य क्षणमेकं स्वम् अग्रिमं पादद्वयम्, निरवन्याऽऽकाशं तत् खुरद्वयेन······आरभत पलायितुं रणक्षेत्रात् निरतिशयेन वेगेन······आसन्नमरणवेदनातुरातुरः······समुल्लंघयन् मार्गे पतंतं प्रत्यवायं यं कमपि······कुर्वन् ह्रेषारवं करुणकरुणं······अवमानयन् अनुरोधं अवगणयन् आदेशं स्वस्वामिनः पांचनदस्य राज्ञः आनन्दपालस्य।

पांचनदस्य राज्ञः आनंदपालस्य सामर्थ्येनोपोद्बल्यमानसामर्थ्याः······तमेव एकमादर्शीकृत्याऽऽवेशेन आयोधने व्यापृताः······भारतीयाः सैनिकास्तु ······यदा······सद्यः समाकृष्टचित्ताः यवनराजस्य हर्षप्रचंडया दिङ्मण्डलमिव कम्पयन्त्या 'अल्लाहो अकबर !' इति रणगर्जनया····अपश्यन् साक्षात् तमेव रंहसा तावता निष्क्रमन्तं रणक्षेत्रात् सद्यः प्रसृतप्रभाकरप्रकाशस्फुटतरलक्ष्यदारुणविशेषात्······तदा······क्षणमेकं विस्मयस्तब्धाः······क्षणमेकं किंकर्तव्यताविमूढाः······क्षणान्तरे एव मन्यमानास्तं पराजितं······अत एव तथा पलायमानं रणक्षेत्रात् स्वकर्मक्षेत्रात्······सहसा चेलुः स्वसंकल्पात्······तत्यजुः धैर्यं······अनुसस्त्रुश्च स्वस्वशरीरमात्रसंरक्षणनीतिं कापुरुषोचितां ······तत्क्षणमेव ।

शतमपि प्रयत्नानां······सक्षात्कृतयवनराजकपटाऽऽक्रमणस्य राजकुमारस्य धर्मपालस्य न शशाक तान् प्रत्यावर्तयितुं स्वकर्तव्यकरणार्थम् ।

एतादृशा एव वयं······भारतीयाः !······नेतरि विनष्टे······सर्वं विनष्टमिति मन्यमानाः !

किमिति न वयं······विनष्टे नेतरि······स्वयमेव स्वस्य नेतृत्वमुररीकुर्वाणाः······अर्थादेव ऐकमत्यं पूर्ववदबाधितं रक्षन्तः······प्रयतामहेऽभीप्सितप्राप्त्यर्थं पूर्ववदेव ?

अथवा······किं परिदेवितेन ?

प्रस्तुतं······अनुसरामः ।

श्रुतं खलु अस्माभिः यत्······तदवेक्ष्य क्षुद्रत्वं स्वपूजकानां भारतीयानां आर्यमन्यानां······तद्गौरवदिदृक्षया निरभ्रे गगनांगणे कृतप्रवेशः भगवान् भास्करः······अग्रस्तोऽपि राहुणा सहसा बभूव निस्तेजाः इति ।

अपि श्रुतं भवद्भिः ?

तमवलोक्यापेक्षितं रणभंगमभूतपूर्वसदृशं कतिपयक्षणपूर्वमेव विजयशिखरमारुरुक्षूणां भारतीयानां सैनिकानां सकुत्सं स्मयमानः······विनिश्चित्य कर्तुं तं तेषां तेजोभंगं ,सार्वकालिकप्रभावं······यवनराजः आदिदेश स्वान् सैनिकान् अनुसर्तुं तान् कर्तुं च सर्वानपि धराशायिनः निरपवादम् ।

तेऽपि······आदित एव दैत्या इव रक्तपिपासवः······तत्रापि चिरात् खलु प्राप्य तस्य तादृशमादेशं हर्षोन्मत्ताः······उद्यतायुधाः······'दीन!······दीन!'

इति रणगर्जनया दिङ्मण्डलमिव निनादयन्तः···विस्फारिताक्षाः···उच्चैर्हसन्तः·····आरुह्य यं कमपि चतुष्पादं वाहनं वा·····स्वकीयं वा·····तान् अनुधावन्तः······भयकान्दिशीकान्······यत्र कुत्रापि प्रपलायमानान्······ कांश्चित् आतंकेन मूकमूकान्·····कांश्चित् सकरुणं जीवनदानं भिक्षमानान् ···कांश्चित् उन्मादेनाट्टहासं कुर्वाणान्···कांश्चित् अश्रुपूरितनेत्रमवलोकयतः ······कांश्चित् असंबद्धं प्रलपतः·····निरपवादं निःशस्त्रान्·····निरपवादमप्रतिकुर्वाणान्·····तथा उरसि चिच्छिदुः·····मस्तके जघ्नुः·····जंघयोः दद्रुः ·····ग्रीवायां लुलुवुः·····यथा सा वनस्थली····याऽऽसीत् रणस्थली कतिपयक्षणपूर्वमेव····आरभताचिरादेव शोभितुं ! भोजनस्थलीव वनसूकराणां जम्बुकानां बिडालानां ध्वांक्षाणां गृध्राणां तरक्षूणां·····अधिगत्येव यमराजस्य भोजननिमंत्रणं तत्राहमहमिकयाऽऽगतानां·····मंत्रपाठमुखराणामिव कर्णकटु पिरुवताम् ।

अनुबभूवुश्च परमां तृप्तिम् ।

न तु नेता तेषाम् ।

स तु·····अनुधावतामेव स्वसैनिकानां·····संप्रेष्य शतसंख्याकान् स्वसेवकान् अन्वेषणचतुरान् गवेषयितुं विनष्टस्य पांचनदस्य नृपस्य संनिवेशं ······चिरं खलु अमीमृगत तद्धनम् ।·····अलभत परंतु तत् कतिपयराजतभाण्डमात्रपरिमितम्·······तन्मात्रलाभेनाधिकतरप्रवृद्धपरधनपिपासः······· उत्प्रेक्षमाणस्तदस्ति त्वं गोपितं भीमनगर इति नाम्ना विख्याते आसन्नवर्तिनि दुर्गे रिपुणाऽनुभवचतुरेण·····प्रत्यपालयत् तेषां प्रत्यागमनं तदवस्य एव ।

प्रत्यागतमात्रांश्च तान् प्रहरद्वयानन्तरं·····आदिदेश तत्क्षणमेवाभिनिर्यातुं तत्स्थलात्·····आक्रमितुं च तं दुर्गमदत्वैवावकाशं प्रत्यर्थिने कर्तुं प्रतिरक्षासंनाहं तत्र ।·····तेऽपि·····श्रान्ता अपि·····क्षतशरीरा अपि····· स्वभावतस्तितिक्षानिपुणाः·····स्वभावत आज्ञापालनतत्पराः·····तत्रापि विजयमदमत्ताः·····तत्रापि अवश्यंभाविपरधनलाभ-स्पृहाप्रोत्साहिताः····· अविगणय्य स्वां श्रान्तिं··तिरस्कृत्य स्वां क्षतिं पालयामासुः आदेशं तस्य,··· आचक्रमुः दुर्गमार्गं भूयभूकवनेचरप्रदर्शितं हताहतप्रत्यर्थिसैनिककलेवरसंकुलं बुभुक्षुक्रव्यादबहुलं,·····परिवव्रुश्च दुर्गं तं·····पिनद्धद्वारं भयनिमीलिताक्षमिव समुत्प्रेक्ष्य तदागमनं,·····निर्जनप्राकारपरिवेष्टितं, मृतमिव संभाव्य

तत्प्रहारं'……'अल्लाहो अकबर ! ……अल्लाहो अकबर !' इति रणगर्जनाभिः वित्रासितपतत्रिगणाभिः कंपयन्तः सान्ध्यं गगनवितानं……साक्षीकृत्य……अनिच्छुकमिव निष्प्रभं……स्वयमपि मुमूर्षुमिवास्तंगतप्रायं दिनकरम् ।

परिवृत्य च तं वेगेन……परिपालयन्तः स्वनेतुरादेशं……कल्पयामासुः स्वं संनिवेशं तमभितः……अवलोकयन्त्या एव सहस्रनक्षत्रनेत्रैः, निर्वातायाः विस्मयनिरुद्धश्वासाया इव, सद्यः संप्राप्तायाः निशायाः ।……ममज्जुश्च निद्रासागरेऽपारे……अन्ते नैशस्य प्रथमस्य प्रहरस्य……श्रान्ताः‥अपनीतक्षुधाः……तृप्ताः……निश्चिन्ताः ।

न तु नेता तेषाम् ।

स तु……अवलोक्य दूरतः तं भीमदुर्गं सांध्ये सूर्यप्रकाशे निर्जनप्राकारपरिवेष्टितं……पिनद्धद्वारं……'न तर्हि शरणीकृतोऽयं समीपतमवर्त्यपि रणक्षेत्रात् तथा प्रपलायितेन पांचनदेन तेनाऽऽनंदपालेन……तत्पौत्रगणेन वा'– इत्यनुमाय खिद्यमानोऽपि किंचित्,……'कुतस्तर्हि गतः सः ?' इति विस्मयमानोऽपि किंचित्,……'गतः नूनं पूर्ववत् आश्रयं काश्मीरनृपतेः' इति उत्प्रेक्षमाणोऽपि किंचित्,……'किम् उचितं स्यान्ममाऽऽक्रमणं तस्यापि नृपस्यास्मिन्नेवावसरे…………काश्मीरसदृशदुर्गमप्रदेशाक्रमणार्थमनतिसंनद्धमपि बलमेतद्गृहीत्वा ?'……इति संदिहानोऽपि……कृताकारगूहनः……यापयामास तां निशां……निषण्णः स्वपटप्रासादस्य स्वर्णकलशभूषितशिखरस्य पिहितदुर्गसिंहद्वारसंमुखीनस्वसेनासंनिवेशमध्यक्लृप्तस्य विश्रामकक्षे एकमात्रमन्दरत्नदीपदीप्ताभ्यन्तरे……एककः……अनपनीतयुद्धवेषः……श्रान्तोऽपि अनिद्रः……दुर्गविनिगडितलोचनः……आस्वादयन् वामहस्तधृतात् सौवर्णात् मद्यचषकात् मधुमधुरं शीतलं द्राक्षारसं राजधानीतः सद्यःसंप्राप्तं…… संप्रधारयन् च मनसि एव कर्तव्याकर्तव्यविचारम् ।

संप्रधार्य चान्ततः……उत्थित एव शयनार्थं शय्यायां सुधाधवलायां हंसपक्षतिकोमलायां मंदसुगंधिन्यां‥प्रतीक्ष्यमाणायामिव तदागमनमधीरतया ……अन्वस्तरिक्तमद्यचषक एव……अद्राक्षीत् सहसा स्वसंमुखीनात् दुर्गसिंहद्वारात्‥‥दूरस्थादपि उदीयमानसहस्रकरकरोद्भास्यमानपित्तलपुष्पविरचनात्……शनैः शनैः……(अनिच्छयेव) ईषदुद्घाटितकपाटात्……बहिः

निःसरतां निःशस्त्राणां निष्कवचानां बद्धाञ्जलीनां म्लानवदनानां पुरुषाणां स्तोमम् ।

दृष्ट्वा तं सकुत्सस्मितविकृताननः······क्षणमेकं विचार्य······विनिश्चित्य किमपि······पुनरुपाविशत् आसने सद्यरुज्झिते, खेलन्निव स्वां दक्षिणतर्जनीं विभूषयन्त्या रत्नांगुलिकया······।

अन्वजानात् कतिपयक्षणानन्तरमेव पटप्रासादरक्षकदलप्रमुखमुखेन तद्दर्शनानुग्रहं याचमानं तदग्रणीं उपस्थातुं तत्सेवायाम् ।

अदहत् तं दैन्यमिव धृत्वा पुरुषरूपं पुरस्तादुपस्थितं भयातिरेककम्पमानगात्रं अधोनयनमुच्छुष्कमुखं स्वसमानवृत्तान्तैरन्यान्यैर्दुर्गवासिभिः सहितं क्षणमात्रं एकाग्रया दाहकयाऽहंभावदुःसहया स्वदृष्टया ।

आदिशत् तं भूमामिव निमिमंक्षुं दिक्षु इव उड्डिडयिषुं······मसर्पयितुं पांचनदं राजानं सपुत्रकं तत्क्षणमेव,······भोक्तुं वा प्राणदण्डं भीषणतमम् ।

अक्षिपत् तं······साश्रु कथं कथमपि सूचयन्तं राज्ञः ससुतस्यानुपस्थितिं दुर्गे,······अंगीकुर्वन्तं च समर्पणं सर्वस्य शासकीयस्य तदितरस्य च धनमात्रस्य दुर्गस्थस्य कृते प्राणदानस्य······कारावासे सेनासंनिवेशैकदेशपरिक्लृप्ते प्रतिभूत्वेन ।

सताज्ञापयत् स्वसेनाधिकारिणामन्यतमं प्रवेष्टुं तत्क्षणमेव दुर्गं तथा शरणागतं सह स्वसैनिकदलेन सशस्त्रेणानपेक्षिताक्रमणप्रतिकारसंनद्धेन,······संयन्तुमात्मानं आत्मनः सैनिकदलं च वृथा हननात् दुर्गस्थानां जनानां निरपराधानां, दहनात् तदावासानां, अवमाननात् तद्दाराणां, भ्रंशनात् तद्देवालयानां, लुण्ठनाद्वा तद्धनानां,······आनेतुं च तत्पुरतः सर्वमपि शासकीयं कोषम् ।

अपश्यत् प्रहरद्वयानन्तरं तेन सेनाधिकारिणा निशम्य तं आदेशं विजितलुण्ठननिषेधकं नितान्तमनपेक्षितं तत्सदृशात् कठोरहृदयत्वेन ख्यातिं स्वजनसंतोषकारिणीं परजनसंतापकारिणीं शनैः शनैरधिगच्छतः । खिन्नेनापि अपेक्षाभंगदुःखितेनापि तदादेशं स्वप्नेऽपि अवमानयितुमसमर्थेन दुर्गात् निष्प्रतिरोधमानीतं तत्पुरतः सादरं निहितं शासकीयं कोषं······असंख्यस्वर्णमुद्राऽऽपूरितपित्तलभाण्ड- राजत- सौवर्णभाण्डसहस्रराजतकौतुकगृहकरोमीपट्टवस्त्रनिर्मितसौवर्णराजतदण्डसनाथबृहदाकारपटवासपरिमितम् ।

आदिशत् अन्तर्भावं राजतकौतुकगृहकस्य रोमीपटवासस्य च स्वे शासकीये कोषागारे ।

अन्वजानात्······सस्मितमुखमुद्रः······विभाजनं यथायोग्यं प्रचण्डस्य स्वर्णमुद्राराशेः स्वसैनिकेषु उच्चावचेषु पारितोषिकद्रव्यरूपेण ।

आज्ञापयच्च तान्······पुरस्तात् तस्य पटप्रासादस्य कृतसंमर्दानपि अनुशासनबद्धान्, निरीक्षणे राजतकौतुकगृहकस्यानवलोकितपूर्वैश्वर्य-मण्डितस्य रोमीपटवासस्य च व्यापृतचित्तान्, लब्ध्वा तत् पारितोषिकं सर्वथाऽनपेक्षितं हृष्टहृष्टान्······कर्तुं प्रस्थानं स्वदेशमुद्दिश्य······अन्तिमे प्रहरे निशायाः······अवलोकयितुमिव तत्कौतुकं अंके कृत्वा बालचंद्रं सत्वरं गगनांगणे नक्षत्रखचिते निरभ्रे पदं निक्षिपन्त्याः ।

प्रस्थितश्च यथासंकल्पमन्तिमे प्रहरे तस्याः विश्रब्धं यापितायाः निशायाः······विज्ञाय तत्प्रस्थानसमयं कर्णोपकर्णिकया स्वयमेव स्वस्वगृहात् बहिरागतैः, आत्मानं मृत्युमुखाद्रक्षितमिव विश्वसद्भिः, उदारहृदयत्वमाक्रामकस्य तत्समक्षं प्रशंसितुमपारयद्भिरपि पारस्परिके वार्त्तालापे तत् अहमहमिकया वर्णयद्भिः, प्रस्थानसमये तमतिथिसत्कारेण बहु मानयितुमिच्छद्भिरपि गृहीत्वा तत्प्रस्तावमुपसर्तुं तं (–तान् सर्वानपि कापुरुषानिव सकृत्समवलोकयन्तं–इत्येवाप्रत्याख्येयं सत्यम् !–) अधृष्णुवद्भिः, दुर्गस्य प्राकारशिरसि सिंहद्वारे प्राकारान्तर्वर्तिसमुत्तुंगप्रासाददेवतायतन-वातायनेषु प्राकारबहिर्वर्तिमहावृक्षशाखाशिखरेषु······किं बहुना-सर्वेष्वेव बहिरवलोकनस्थानेषु–अकृत्वा सुविधाऽसुविधाविचारं–परंतु कृत्वा मूं विचारं पर्याप्तस्य विप्रकर्षस्य–कृतसंमर्दे निर्निमेषमवलोकयद्भिः आबद्ध-प्रणामाञ्जलिभिः दुर्गवासिभिः जनैः निःशब्दमभिनंदितः······प्रारभत आक्रमितुं मार्गं क्रोशशतदीर्घदीर्घं स्वगृहराज्ययायिनं······परिश्रान्तेनापि अप्रत्याशितपारितोषिकलाभतृप्तेन गृहगमनविचारप्रमुदितेन विशालेन बलेनानुगतः ।

मग्नश्च विचारे आपक्राम तं मासाभ्यन्तरे······अवलोकयन्नपि अनवलोकयन्नेव मार्गपतितान् नगरान् महानगरांश्च तदागमनवार्त्ताश्रवणसमकालमेव तद्वासिभिः परित्यक्तान्······स्वीकुर्वन्नपि अस्वीकुर्वन्नेव करद्रव्यराशीन् प्रभूतान् मार्गे स्वयमेवोपस्थितेभ्यः आबद्धकरकमलेभ्यः माण्डलिकेभ्यः

नरेशेभ्य:,……विदन्नपि अविदन्नेव प्रवासमात्रेऽपरिहार्यान् कष्टान्…… पश्यन्नपि अपश्यन्नेव मार्गगता: हिमधवलशिखरा: पर्वतश्रेणी: प्रतिक्षण-मनोहारिणी:,……किं बहुना–अनुभवन्नपि अननुभवन्नेव दैनंदिनं जीवनं प्रवासस्य !

क इव आसीत् स विचार:……मग्न: यस्मिन् स:……कदाचिदेव अन्यथा–विक्षिप्तचित्त:……अनुभवन्नपि नाचभवत् प्रवासजीवनं तत् ?

स विचार आसीत् तस्य सद्य:समाप्तस्य अभियानस्य ।

तत् अभियानं तस्य……न केवलस्य पांचनदस्य नराधिपस्य, अपि तु–भारतीयनरेशसंघस्य तेन संघटितस्य, पराजये पर्यवसितं……वस्तुत: सफलं परिणतम् आसीत्……धनलाभोऽपि तस्य अभियाने तस्मिन्……सत्यं, नापेक्षानुरूप: तथापि–पर्याप्त: संजात आसीत् ।……ख्यातिलाभोऽपि ।…… तथापि–हृदयं तस्य नोदसहत अभिनंदितुं तं विषये तस्याभियानस्य ।…… अपि तु–अदधर्षत् तं विस्पष्टं कथयितुं यत्–'अभियानं तस्य सफलं परिणतं, परंतु–आपातत: विचारितम् ।……मूलत: विचारितं तु तत्, विफलमेवाव-सन्नम् । न हि तत् शशाक बंदी कर्तुं तं पांचनदं राजानं……तत् सुतं वा तं ……धर्मपालं सर्वोपद्रवकारणम् ।……तथा पराजितोऽपि स: पांचनद:……अस-कृन्नुद्यमान: स्वपुत्रेण……तेन धर्मपालेन……न पुन: प्रयतेत अनुरोद्धुं तांस्तान् भारतीयान् नराधिपान् विस्मर्तुं……पुनरेकवारं……स्वं पारस्प-रिकं परंपरागतं वैमनस्यभावं किंचित्कालपर्यन्तं, एकीभवितुं च पुन: प्रति-रोधाय सर्वसाधारणस्य बाह्यस्य आक्रामकस्य–इत्यत्र किं प्रमाणम् ?…… प्रयतमानो वा न लभेत साफल्यम्–इत्यत्र ?……सफलीभूते वा स्वे प्रयत्ने नोत्सहेत स्वयमेवाक्रमितुं तम्–इत्यत्र ?……तथा सति तु न तस्याभियानं सद्य:समाप्तं केवलं व्यर्थं सिद्धं भवेत्……अपि तु……ऐक्यसामर्थ्यसाक्षात्कार-दिशि प्रथमस्य पदक्षेपस्य रूपेण पर्यवसितं……महत्तरानर्थजनकमित्यपि । ……यदि नाम एतदभियानं अन्यतरस्य तयो: बन्दीकरणेऽपि पर्यवसितमभ-विष्यत्……तर्हि तत् प्रदाय तस्मै अवसरं दण्डयितुं बंदीकृतं घोरतमेण प्रकारेण समर्थं तमकरिष्यत् तादृशं प्रयत्नं बीजावस्थायामेव दग्धुं अपुन:-प्ररोहाय !

एतादृशे दुश्चिन्ताकलुषिते विचारे मग्नोऽपि……स……न……अर्था-

देव······प्रकटयामास तं विचारं सन्निधौ अभिन्नहृदयस्यापि स्वसुहृदः······ अत्यधिकविश्वासभाजः अपि सहायकस्य वा······लेशतोऽपि ।

वस्तुतः नासीदेव तस्य······सेनायां वा······राजधान्यां वा······राजसभायां वा······एकोऽपि एतादृशः अभिन्नहृदयः सुहृत्······अत्यधिकविश्वासभाक् सहायको वा ।

एकक एवासीत्······सः······आजन्मनः······मृत्युपर्यन्तम् ।

न प्रकटयामास स्वं विचारं······अपि तु–गूहमानस्तं अन्ततमे भागे स्वहृदयस्य, व्यवहरन् निरुद्विग्नेनेव प्रसन्नेनेव चेतसाऽचतिष्ठात् स्वं दैनंदिनं कर्तव्यं यथायोग्यं······चित्तयन् अहोरात्र प्रत्युपायं समुद्भूतायाः परिस्थितेरनुरूपम् ।

स्वभाव एवायं 'मनुष्यसंख्याप्रतिवर्तितुं' प्रयतमानानां लोकोत्तरसामर्थ्योपपन्नानां (–स्वार्थसिद्ध्यर्थं जनेभ्यः–निरपराधेभ्योऽपि–कष्टानि अगणितानि भयंकराणि ददतामपि–इत्यहो विडंबना !–) पुरुषाणाम् !

अलभत च साफल्यं स्वेऽभिनये (–मनस्यन्यत् व्यवहारे चान्यत् एवं व्यवहरतां व्यवहारः अभिनय एव ।······न किम् ?–) एतावत् यत् न तस्य समीपतमवर्तिनः (–मध्ये तेषां केचन आ बाल्यात् तं जानन्तः–) तस्य सेवकाअपि,······अहोरात्रं तं रक्षन्तः तस्य परमविश्वसनीया अंगरक्षका अपि,······तदर्थं प्राणान् स्वान् उज्झितुं तत्पराः तस्य सैनिका अपि,······तमेव केवलमादर्शं मन्यमानास्तदर्थं नारकीये वह्नावपि होतुमात्मानं सन्नद्धास्तस्य सेनाधिकारिणोऽपि······न शेकुः अनुमातुं तस्य दुश्चिन्तां ।······किमु तर्हि······प्रविष्टे एव तस्मिन् स्वे गृहराज्ये मार्गे पततां ग्रामाणां मध्यात् राजधानीं गच्छतः पथः उभयतः आबद्धसान्द्रपंक्तयः हर्षतुमुलं तज्जयमुदीरयन्तः धृतविशेषवेषाः उन्नमय्योन्नमय्य स्वौ हस्तौ परमेश्वरात् तस्य कुशलं तस्य दीर्घमायुः तस्यापारं ऐश्वर्यं तस्य सार्वत्रिकं विजयं काक्षन्तः तस्य प्रजाजनाः,······राजसभायां तेन सोद्देशमाहूतायामुपस्थिताः धवलवेषाः लंबकूर्चाः साधुवदनाः (–साधुचरित्राः, न वा,–इति तु परमेश्वर एव जानाति स्म! –) किंचिदुन्नमय्य स्वां दृष्टिं स्तोकमुन्नमय्य स्वौ हस्तौ कमलदलकोमलौ (–'यतो हि खड्गमुष्ट्यनभ्यस्तौ'–इति सोपहासं वदति स्म सः– अर्थादेवानुपस्थितौ तेषां !–) प्रभावोत्पाद-

केन गुरुगंभीरेण स्वरेण परमेश्वरं तस्य दीर्घमायुः तस्य तद्विधामेव धर्मसेवां याचमानाः उच्चतमधर्मगुरुप्रतिनिधयः,······तेन समये समयेऽनुरुद्ध्य अपहृत्य (!)······बंदीकृत्य (!) स्वराजसभायां तदलंकरणार्थमानीताः परकायाप्रवेशनिपुणाः अन्सूरीप्रमुखाः चतुःशतसंख्याकाः घजरी रज्ञीसदृशाः कवयः,······तेन साग्रहं आनीताः अल्बरूनीसदृशाः स्वसमकालीनपरिस्थितिनिरीक्षणविचक्षणाः इतिहासलेखकाः······तेषु तेषु अवसरेष्वेव सान्निध्ये तस्य आगच्छन्तः ?

विज्ञापयामासुः नूनं ते सर्वेऽपि······(आतुराः तं प्रसादयितुम् !) अहमहमिकया······प्रदर्शयितुं पांचनदस्य प्रत्यर्थिनः भीमदुर्गात् (–नाम्नैव भीमात् इति उन्मुक्तभावं उपजहसुस्ते–) लुण्ठितं ऐश्वर्यं साधारणजनावलोकनार्थम् ।

दृष्ट्वा च तत्······अनुरोधं तेषामुल्लंघयितुमसमर्थेनेव (अहंभाषमात्मनः परितोषयितुमुत्सकेन–इत्येव सत्यं–) तेन सद्यःनिर्मितस्य विशालस्य 'फिरोज्' इति नाम्ना ख्यातिं गतस्य नूतनस्य प्रासादस्य स्वस्य प्रांगणे आयोजितायां प्रदर्शिन्यामपरेद्युरेव······परं जहृषुः ।

वर्णयामासुश्च तत् सातिशयोक्ति स्वश्रोघ्तृणां समक्षं······अवलोकयितुं तत् साक्षात् असमर्थानां······आश्चर्यविस्फारितलोचनानाम् ।

●

## षष्ठः परिच्छेदः

दृष्टौ भवतां······वयं सदैव स्याम······अपरिपक्वाः'—क्रोधावेशास्पष्टाक्षरमवदत् मसूदः······कैशोर्यसीमामुल्लंघयितुकामः वृषस्कन्धः आजानुबाहुः बलिष्ठः तनयः यवनराजस्य······पराङ्मुखः······स्थित्वा पुरुषप्रमाणवातायनसमीपेऽवलोकयमिव बहिश्चन्द्रःप्रसृतसूर्यप्रकाशस्नातप्रासादारामशोभाम् ।

'अपरिपक्वाः······अत एवावतरितुं रणक्षेत्रेऽयोग्याः······एतां अपरिपक्वतां निमित्तीकृत्यैव वयं भवद्भिः वर्षत्रयपूर्वं घोरप्रान्तस्य तेनाहंमन्येन मुहम्मद बिन् सूरिणा शासितस्याऽऽक्रमणस्य समये सह चलनात् निषिद्धाः ।······एतामपरिपक्वतां निमित्तीकृत्यैव वयं भवद्भिः वर्षद्वयपूर्वं तस्य मूर्तिपूजकस्येन्द्रप्रस्थनरेशस्य शासनार्थमंगीकृते······परंतु न जानीमहे कस्मात् कारणात् तराओरीसमीप एव समापिते स्वेऽभियाने······सह चलनात् प्रतिषिद्धाः······एतामपरिपक्वतां निमित्तीकृत्यैव वयमतीते वर्षे मुलतानप्रदेशस्य साम्राज्येऽस्माकं विलयनार्थमंगीकृतेऽभियाने सह चलनात् निषिद्धाः ।'

'अपरिपक्वा एव भवन्तः'—प्रत्यवदत् यवनराजः सकौतुकया किंचिदाकुंचितया किंचिद्विचारमग्नया दृष्ट्याऽवलोकयन् आकृतिं स्वतनयस्य······युयुत्सयोद्विज्यमानस्य,······प्रच्छादयन् स्मितेन स्फुटेनास्वस्थतां स्वचित्तस्य······उपस्थितौ स्वतनयस्याचिरादेवानुभूयमानाम् ।

'कथं नु खलु वयं अपरिपक्वा ?'—सावेशमपृच्छत् तत् पुत्रः,······अवगूहमानः स्वं विस्मयं······स्वं हर्षं······निशम्य पितुर्मुखात् बहुमानसूचकं शब्दं तं······तीव्रेण स्वरेण ।······'बलवत्तमा नूनं वयं समस्तेऽपि राज्येऽस्मदीये······नूनं रुस्तमसदृशाः!······न कोऽपि वीरवरः क्षमः गदामस्माकमुत्थापयितुम् ।······पारं गताः वयं युद्धकलायाः ।······अप्रतिद्वन्द्विनः नूनं वयं शस्त्रकौशल्ये ।······न खलु एकोऽपि धनुर्धरः अस्माकं साम्राज्ये समर्थः भेत्तुं लौहफलकं स्वेन शरेण ।······ वयं समर्थाः ।

'यदि नाम कोऽपि तनयः भवतामपरिपक्वः······तर्हि······(सहसा परिवर्त्य विनिर्दिश्यच सकुत्समीषत्कंपमानयांऽगुल्याऽन्यं युवकं······समीप एव यवनराजस्य एकस्मिन् मंचके निःशब्दमुपविष्टः)अयं······अयं मुहम्मदः ······कनिष्ठः भ्राता अस्माकं !······अपरिपक्वः शारीरिके सामर्थ्ये······ अपरिपक्वः शस्त्रनैपुण्ये !'

निशम्य तत् कुत्सितं वाक्यं······यवनराजः अक्षिपत् कटाक्षमेकं दिशि तस्यापरस्य पुत्रस्य······मुहम्मदस्य······उपविश्य नातिदूरे मञ्चान्तरे भ्रातुः क्रोधस्फोटमाकर्णयतः ताटस्थ्येन ।

निष्कारणमेव ज्येष्ठेन (वस्तुतः नासीदेव मसूदः ज्येष्ठः ।······सहजातयोर्मध्ये कीदृशः ज्येष्ठकनिष्ठभावः ?······परंतु······गर्भात् जनन्याः निर्गमः मसूदस्याऽऽदौ आसीत् संपन्नः ।······तदनन्तरं च मुहम्मदस्य ।······एतमेव क्षुद्रं······सूक्ष्मं······अविद्यमानकल्पं······भेदमाधृत्य मसूदस्तं असकृत्-अकृत्यैव विचारं समयासमयस्य······विनैव कारणं······आत्मानं ज्येष्ठं······अनश्च गजनीसाम्राज्यस्योत्तराधिकारिणमर्थापत्तिसिद्धं प्रदर्शयति स्म—इत्येतत् यवनराजस्य विदितचरमासीत्—)भ्रात्रा कृतं तमपमानं अनुभूय सः क्रुद्धः······ परंतु निष्क्रिय इव······उपविष्ट आसीत्······केवलं दहन्निव स्वं भ्रातरमारक्तया दृशा निर्निमेषया ।

निष्क्रियता च सा न यवनराजस्य विस्मयमजीजनत् ।······सुष्ठ हि सः अवेत् तस्य दौर्बल्यमापेक्षिकम् ।

परंतु······अहो वैलक्षण्यं मनसः मानवीयस्य !······स्वयं बलवानपि ······बलस्य प्रभावं जानन्नपि······बलस्य प्रयोगं सर्वत्र कुर्वन्नपि······यवनराजस्तस्मिन्नेवाधिकतरं स्निह्यति स्म······न मसूदे······बलवन्तरेऽपि ।

स्यान्नाम······अधिकतरः सः स्नेहः तस्य······मुहम्मदे एव विद्यमानान् (—आत्मनि चाविद्यमानान्—) स्वाभाविकमार्दवादिगुणान् (—अनुपयुक्तान् कृते राज्ञः इति विदुषः अपि) आश्रित्य समुद्भूत आसीत् ।

अतः······सकुत्सं तद्वाक्यं······न रोचते स्म तस्मै ।······परंतु (कदाचित्—भ्रातृकलहपरिजिहीर्षया) न स किमप्यवदत् ।

अपितु—अनभिज्ञ (इव तस्य वाक्यस्य······अज्ञ इव तत्प्रभावस्य च परिलक्षितस्य मुहम्मदे······प्रत्यवदत् गभीरेण स्वरेण—'अपरिपक्वाः प्रशासन-

कलायां'–इत्यासीत् अस्माकमाशयः' ।

निशम्य तां व्याख्यां स्वोक्तेः पितुर्मुखात् क्षणमेकं निरुत्तर इव मूकः, क्षणान्तरे प्रतिवक्तु काम इव किमपि······स तस्य तनयः······सहसा निशम्य इवाऽऽत्मानं प्रत्युक्तेस्तस्याः······मूक एवातिष्ठत् अधोवदनः ।

अवलोक्य तं तथा मूकं अधोवदनं किंचित् संतुष्ट इव,······समापयितुं सौहार्देन विवादप्रसंगं तमनपेक्षितोद्गतं किंचित् समुत्सुक इव······अवदत् यवनसम्राट् '······सह चलन्तु······सह चलन्तु भवन्तः सहास्माभिः आगामिनि भारतीयेऽभियाने ।'

'कदा······कदा नु खलु भावि तदभियानं······तात ! शीघ्रमेव किं··· गदेकशरण्य ! किं जहाँपनाह ?–' सहसा प्राप्य स्वमभीप्सितं प्रहृष्टः अपृच्छत् मसूदः······विस्मृतविवादः······आतुरतया किशोरोचितया ।

'शीघ्रमेव !······शीघ्रमेव !'–अवरुन्धानः तस्यौत्सुक्यं जनकोचितेन धैर्येण । 'सूचयिष्यामः वयं माध्यमेन याकूबखानस्य ।'

'किमिति याकूबखानस्य ?······' साशंकमपृच्छत् तत्सुतः ।

'तदाज्ञावशंवदस्त्वं······अवसरं प्राप्स्यसि अभियाने तस्मिन् सहभागित्वस्य इति'–दृढस्वरं प्रत्यवदत् तत्पिता ।

–'न किं भवन्तः स्वयमंगीकरिष्यन्ति नेतृत्वमभियानस्य तस्य ?–' हतोत्साह इव किंचित् पुनरपृच्छत् तत्तनयः ।

'वयमेव सदाकुर्मः नेतृत्वमभियानस्य !'–सगर्वं (परंतु अवितथं) प्रत्यवदत् यवनेश्वरः······साकूतमवलोकयन् आननं स्वाग्रजस्य······आह्वयन्निव तं शब्दितुं मनसि तस्य विप्लवं कुर्वन्तं प्रश्नम् ।

'किमिति तर्हि–' प्रारभत शब्दितुं तं मसूदः,······विरराम परंतु तस्मात् सहसा······अवरुद्ध इव स्वजनकस्य स्वरदार्ढ्येन एकवचनप्रयोगेण आकस्मिकेन······स्मारित इवानुशासनस्य सैनिकमात्रापेक्षितस्य ।

'तत्कालपर्यन्तं······भवन्तः······अधुनेव······अधिगमिष्यन्ति परिचयं दैनंदिनप्रशासनकलयाऽस्माकं अमात्यप्रमुखेन ख्वाजा अहमदहुसैन मैमंदिना प्रदर्शितां पद्धतिमनुसरन्तः प्रतिदिनम् ।'

परस्परविमर्दिभावनाकुलाकुलः निरुत्तरः कतिपयक्षणपर्यन्तमतिष्ठत् तथैव मसूदः निरुत्तरः ।

निरगच्छच्च तदनंतरमधिगत्यानुज्ञां यवनसम्राजः······अवलोक्य तं तथा निरुत्तरं स्मयमानस्य गूढं······तस्मात् कक्षात्······विचारमग्नः,······ अनभिज्ञ एव स्वसोदरस्यानिच्छया महत्या तमनुगन्तुं प्रवृत्तप्रायस्य मुहम्मदस्य ।

'मुहम्मद !–' अवरुन्धन् तद्गमनं तस्य स्वसंबोधनेन आपाततः अनुशासनकठोरेणापि वस्तुतः वात्सल्यमृदुलेनावदत् यवनाधिपः,······'त्वं तावत्,······अनुपस्थितौ अस्माकं न केवलं करिष्यसि दैनंदिनं प्रशासनकार्यं यथापूर्वं······अपि तु······रक्षिष्यसि साम्राज्यमस्माकं······उपद्रवकारिभ्यः······ आभ्यन्तरिकेभ्यः वाह्येभ्यश्च ।······विशेषतः······हीरातसमीपवर्तिभ्यः एतेभ्यः सेल्जूकेभ्यः ।······सद्य एवास्माभिः दण्डिता एते······न करिष्यन्ति कदाचित् उपद्रवं,··परन्तु–न तत् निश्चितम् ।······उपदुद्रविषा······एषां······ कष्टविनाश्या ।······स्यान्नाम–अवलोक्यास्मान् योजनशतविप्रकृष्टान् कुर्युरपि कदाचिदुपद्रवम् ।······कर्तुं तथा प्रवृत्तमानानपि एतान् दण्डय प्राणदण्डेन ।······न कदाचिदपि······किंचिदपि······उपेक्षस्व एतान् ।······ उपेक्षिता हि एते······निक्षिपेयुः साम्राज्यमेतत् तादृशे प्राणसंकटे······यादृशे न ते पांचनदाः······।'

व्यरमच्च उक्त्वा एतत्······नियमयन्निव सहसाऽऽत्मानं उच्चारणात् विचारस्य एकस्य······मनसि तस्य कतिपयैरेव व्यतीतैः दिवसैः शनैः शनैराकारं गृह्णतः ।

अन्वजानाच्च तं अधोवदनं······गमनाय ततः ।

गतोश्च तयोः······आरभत अध्ययनं एकाग्रेण मनसा सांकेतिक लिपि-लिखितानां वार्त्तापत्राणां गूढपुरुषेभ्यस्तस्य पांचनदकाश्मीरादिभारतीय-राज्यान्तर्वर्तिभ्यः व्यतीतायां निशायामेव प्राप्तानाम् ।

अथवा–आरभत प्रयत्नं एकाग्रेण मनसाऽध्ययनस्य तेषाम् ।

मनः हि तस्य······तथा समाहितमपि······असकृत् अवधीरयत् तस्य प्रयत्नान्······पुनः पुनः न्यवर्तत सद्यःसमाप्तं······समापितं वा तेन······ विवादस्य प्रसंगं······सुताभ्यां······सुतेन वा······सह संवादस्य प्रसंगेऽकस्मात् समुद्भूतस्य ।

साक्षात्कृत्य स्वमनसस्तत् चांचल्यं अननुभूतपूर्वसदृशं······परं खलु

विस्मयं स अन्वभवत् ।......तद्धितस्य मनः समर्थं ऐकाग्र्यस्याऽऽसीत् आबाल्यादेव ।......तच्च सामर्थ्यं तस्य परां काष्ठामापादितं आसीत् तेन निरन्तरनिरलसाभ्याससाहाय्येन ।......निरपवादो विजयः तस्य युद्धक्षेत्रे वा नीतिक्षेत्रे वाऽधिकांशतया तस्य लोकविलक्षणस्य ऐकाग्र्यस्यैव वशात् आसीत्......आसीच्च तत् विदितमपि तस्मै ।

'किं नु खलु कारणं......तर्हि तस्याकस्मिकस्य चांचल्यस्य ?–आरभत विचारयितुं सः......विहाय मंचं...उपसर्पन् वातायनं वहिरवलोकनार्थं ।...'किं......शनैः शनैरूपसर्पत्......विज्ञापयच्च स्वं समुपसर्पणं कतिपयैः राजतैः शिरोरुहैः......तेन सप्रयासं अवगूह्यमानैरपि असकृत् (–विशेषतः सुरत-क्रीडावसरे !–) स्वामवस्थितिं हठात् सूचयद्भिः......वार्धकम् ?...उत...उत......गांभीर्यं तस्य विवादस्य ?'

'न खलु वार्धकम् !......न खलु सः वृद्धः ।......को हि खलु अनति-क्रान्तपंचाशिकः आत्मानं वृद्धं मन्येत ?...विशेषतः–तत्सदृशः रणपुंगवः ? ......उत्साहेनामर्यादिनापूरितः ?......शीतोष्णादिद्वंद्वसहनः ?......यदि नाम सः......आत्मानं मन्येत वृद्धं......नावशिष्यात् नूनं कोऽपि जगतीतले प्रौढ-पदव्यपदेशार्हः ।'

'अपि च......यदि त्वं मन्येथा आत्मानं वृद्धं......कथं खलु समर्थः त्वं स्याः प्रसारणे स्वधर्मस्य समस्ते संसारे......? विलयेम तस्याः स्वर्णभूमेः आत्मनः साम्राज्ये ?–' मंद्रस्वरमतुदत् तं तस्य हृदयं......विदन्तं हसदिव ।

'तस्मान्न वार्धकं'! सावेगं निश्चिकाय सः । 'अपि तु गांभीर्यं तस्य विवादस्य !......गंभीर एवासीत् स विवादः......आकस्मिकोद्भवोऽपि... अल्पकालिकोऽपि ।......स हि आपातक्षुद्रोऽपि......व्यानञ्ज तस्य सुतयोः... सुतस्य वा......स्वभावम् ।'

'पैतृकं क्षुद्रं राज्यं (–राज्यपदार्हमपि तद्वस्तुतः नासीत् !–) विशालेऽभूतपूर्वसदृशवैभवमण्डिते तौरुष्किकपारसीकसाम्राज्ये परिवर्द्धयितु-माबद्धपरिकरेण तेन......कियती खलु सावधानता प्रदर्शिता आसीत् एवं स्वसुतसंवर्द्धने !......सुष्ठु हि स अजानात् आदित एव यत् तादृशं महत्तमं कार्यं तस्य सुयोग्यसुतस्यैव संभवि ।...अनेकानि खलु साम्राज्यानि विदित-चराणि आसन् तस्य माध्यमेन लोककथानां, यानि प्रबलेन संस्थापकेन

स्थापितान्यपि विलयमात्यंतिकं प्राप्तानि आसन्......दौर्बल्यवशात्, तदुत्तराधिकारिणाम्।......न खलु स अवाञ्छत् तदेव भवितव्यं कृते 'तस्य' साम्राज्यस्य!......अतस्तेनावलोक्याऽऽत्मानं नियत्या सुतद्वयप्रदानेन संमानितं......तयोः द्वयोरपि निरतिशययोग्यतायाः संपिपादयिषया आदित एव महती सावधानता प्रदर्शिता आसीत्......एकोऽपि मध्ये तयोः यदि सुयोग्यः संपद्येत......तर्हि प्रयोजनं मम साधितं स्यात्'–इति मन्यमानेन।......परंतु (सनिःश्वासं)......तौ द्वावपि सुतौ तस्य......अवधीर्य तस्य सर्वानपि प्रयत्नान्...सर्वथा कल्पनाविपरीतयैव रीत्या स्वं स्वं स्वभावं...महत्तमस्य पैतृकस्य साम्राज्यस्य परिपालनार्थं संवर्द्धनार्थं च सर्वथा हानिकरं स्वं स्वं स्वभावं......अधिगच्छन्ताविव दृश्येते !......ज्येष्ठः......पशूचितं शारीरिकसामर्थ्यमात्रपूजकं,......कनिष्ठश्च......नार्योचितं दुर्बलम् !......न तयोर्मध्ये एकोऽपि......बलवत् अथ च बुद्धिमत्......यथा वाञ्छितमासीत् तेन !'

'एवं......एवं......किं तर्हि......संभवि ?–' सहसा स्वगतमवदत् सः सद्यःप्रस्फुटिताऽऽशोज्ज्वलाननः,......अवलोकयन्निव निर्निमेषाभ्यां लोचनाभ्यां शिखरं दूरात् दृश्यमानं प्रार्थनामन्दिरस्य......एकस्य...माध्यन्दिनदिनकरकरचकासत्स्वर्णकलशं,......'किं तद्द्वयमपि......मिलितं......मम साम्राज्यस्योत्तराधिकारि संभवि ?......(साभिनिवेशं) किमिति न संभवि।......एकस्तयोः......ज्येष्ठः......मसूदः......तयोः......वर्द्धयिष्यति मम साम्राज्यं स्वेन सामर्थ्येन......अन्यस्तयोः......मुहम्मदः......पालयिष्यति तत् स्वेन प्रशासनकौशलेन !......(साभिलाषं) सत्येवं......साम्राज्यं मम यमाऽपि...तत्संस्थापकेनापि......अकल्पितपूर्वां वृद्धिमधिगमिष्यति निःसंशयम् !......(साग्रहं) न खल्वेतत् ईच्छामात्रविलसितं मदीयम्।......श्रुताः खलु मयाऽनेके पुत्राः एकस्य नराधिपस्य......एकैकशः सर्वगुणरहिता अपि...मिलिताः...परस्परपूरकाः......उद्दिष्टस्यैकस्य कृते प्रयतमानाः दुष्प्रतिरोध्यं सामर्थ्यं लभमानाः।......दृष्टाः नूनम् !......यथा......(अनिच्छापूर्वकं) ते पुत्राः पांचनदस्य।......एकस्तन्मध्ये......सः......सुखपालः......अयतत प्रतिरोद्धुं मामाश्रित्य कूटनीतिं,......अपरः......सः धर्मपालः...यततेऽधुनाऽपि आश्रित्य विपुलदृष्टि राजनीतिम्।......अन्यश्च......सः त्रिलोचनपालः......परंपरागताम्।......(सकुत्सं) यत्तु ते नालभन्त दुष्प्रतिरोध्यं सामर्थ्यं तत्फलत्वेन

······तत्तु (सगर्वं) नियत्या महमूदस्यास्य विपक्षमध्ये संस्थापितत्वात् !···· न खलु मम पुत्रकौ···महमूदमपरं लभेयातां स्वविपक्षित्वेन।······आविर्भावः हि महमूदस्य······(साभिमानं) कादाचित्कः।'

'परंतु'—सहसाऽऽशंकाकुलितमानस इव व्यचिन्तयत् सः किंचिदाकुञ्चितलोचनः तदवस्थ एव,······'किं पुत्रकौ मम अंगीकरिष्यतः एवं मिलित्वा सहकार्यं पारस्परिकं कर्तुं···?···सहभोक्तुं च तस्य फलानि······अनन्तानि ? ······अनुकरिष्यतः उदाहरणं पुत्रकाणां तस्यानन्दपालस्य ?'

'(समादधान इव प्रश्नं कमपि अशब्दितमपि अरुंतुदं) यन्तु······मया न अनुकृतं उदाहरणं आनन्दपालस्य तस्य······पितुरिच्छानुरुपमेव राज्यभारमंगीकृतवतः······तन्तु अन्यस्य प्रबलतरस्य कारणस्य वशात्।······पिता मम······ऐच्छत् न्यस्तुं गजनीराज्यं भ्रातरि मम······ईस्माईले,······ऐच्छत् अत्यधिकपक्षपातकलुषितमतिः।······समुपैक्षत च तस्यायोग्यतां स्पष्टतमामपि।······अत एव······मया स्वपैतृकराज्यकल्याणाकांक्षिणा······उल्लंघितः सः तथा······तत् स्वर्गगमनानन्तरम्।······अतः······प्रश्नः ममानुकरणस्योदाहरणस्य आनंदपालस्य······असंबद्ध एव प्रस्तुतेन !

'परंतु'—संजाततोष इव स्वेन समाधानेनाग्रेऽचिन्तयत् सः······प्रतिनिवर्तमानः वातायनात् समुद्दिश्य मञ्चं······'संभावना मम पुत्रयोः सहकार्यस्य सहभोगस्य च क्षीणतरा एव।······(सनिःश्वासं)नास्त्येव स्वभावे तयोः सा भावना परस्परसहकार्यस्य······या प्रोत्साहयेत् तौ दिशि तस्याम्।······ (सवितर्कं) किमिति नास्ति सा तत्र ? मयातु नैकदापि प्रतिरुद्धा······ अंकुरणात् तत्र ! ······प्रत्युत—प्रोत्साहितैव······उपहसता तयोः उपस्थितौ मौर्ख्यं भारतीयानां स्वसंरक्षणार्थमपि तामनंगीकुर्वताम् !'

'यदि नाम—अहं पाञ्चनद इव भाग्यशाली अभविष्यं'······सनिःश्वासमुवाच सः,······विरराम च सहसा समीपमुपगतः दर्पणस्यैकस्य पुरुषप्रमाणस्य कक्षमध्यमलंकुर्वाणस्य,······आरभत च······विकृतमुखः······परिवदितुमात्मानमेव माध्यमेन दर्पणप्रतिबिंबितस्य स्वस्य सोपहासाभ्यामिव नेत्राभ्यां तमेवावलोकयतः—'मन्ये त्वं तर्हि······तं पाञ्चनदं दग्धपितरं हताताजं······ विहाय राज्यं स्वं कापुरुषवत् अन्येषां राज्यं शरणीकुर्वन्तं······विनष्टश्रीकं ······भाग्यवन्तम् ? मदपेक्षया भाग्यवत्तरम् ?······मन्यस्व······रे मूढ !

······मन्यस्व······मन्यस्व कतिपयमासपर्यन्तम्! ······तदनंतरं प्रक्ष्यामि त्वां—कं मन्यसे अधुना भाग्यवतरं ।·····(सकुत्सं)······तदा त्वं निरुत्तरः······नूनं भविष्यसि······निरुत्तरः ?······कालेन हि तावता······अहं निःसंदेहं प्रापयिष्यामि समन्तमात्यंतिकम् । ······आम् ! ······अन्तं······,प्रयतमानानामेव तत् सुतानां····तदभाग्यसम्पदां····तद्रक्षणार्थम्,····अथवा·····सहैव तैः !'

आविष्ट इव च कयाऽपि विचारमूढया हिंस्रया प्रतिशोधेच्छया पाशव्या·····तदपेक्षयाऽपि नीचतरया·····सावेशमुपससर्प मंचं,·····उपविवेश तत्र कृतनिश्चय इव, जग्राह तानि पत्राणि अध्ययनार्थं,·····आरभत चाध्ययनं तेषां ऐकाग्र्येण मनसः ।

इयत् ऐकाग्र्यं मनस्तस्याध्यगच्छत्····प्रेरितं तयाऽन्धया प्रतिशोधेच्छया प्रचण्डया यत् न तदन्व भवत् क्षणमात्रमपि दिनकरं,·····साक्षात्कृत्य तस्य तामसं निश्चयं परं क्रुद्धमिव सहस्रैः किरणैः स्वैः दग्धुमिव तं प्रयतमानं, (—श्रुतमस्माभिः—दिने तस्मिन् गजनीनिवासिनः·····आजन्मनस्तपनतापपरिचिता अपि·····व्यरमन्त एव परं दैनिककार्यकलापात् अनुभूय तस्य तं दाहकं तापं ! —),·····अनुभूय वैफल्यं स्व प्रयत्नानां निराशमिव मान्द्यमुपगच्छन्तं, निविद्य च दुःखितमिव पश्चिमाम्बुनिधौ निमज्ज्यात्ययमुपयान्तम्!

चिराच्च कृतार्थमिव विनिश्चित्य सूक्ष्मतमं विशेषं भाविनः अभियानस्य, निर्धारितस्य पांचनदनराधिपविनाशं समुद्दिश्य लक्ष्यमेकमात्रम्·····तत्·····अन्वजानान् तं·····श्रान्तमपि अश्रान्तमिव····बुभुक्षितमपि·····अबुभुक्षितमिव पिपासुमपि अपिपासुमिव·····हृष्टं·····पूरयितुं दैनंदिनीः आवश्यकताः तद्देहस्य वराकस्य ।

प्रेर्यमाणश्च तेन प्रमाथिना प्रतिक्षणं······व्यापारयामास आत्मानं अहोरात्रं संनहने आगामिनः अभियानस्य······जानन्नपि ऋतुं तात्कालिकं शैत्यातिशयतयाऽनुपयुक्तं तस्य ।

बलवत्तरा अपि पुरुषाः श्रुता अस्माभिः·····मनसः प्रेरणां दमयितुमसमर्थाः·····संप्रवृत्ताः असंभवे कार्ये·····गजनिमीलिकयाऽवधीर्य उपदेशं विवेकस्य स्वस्य ।

का कथा यवनराजस्य ?

इयान् आसीत् बलवान् तस्याभिनिवेशः·····तस्याग्रहः···तस्य निश्चयः

······यत् सः ······कतिपयैरेव दिवसैः······अभिबभूव तस्य ज्येष्ठतमान् अनुभववृद्धान् दूरदृष्टीन् सेनाध्यक्षानपि······मनसि कृत्वाऽऽननुकूल्य ऋतोरादौ प्रतिकूलान् ।······परंतु प्रकटं तं तथा कथयितुमक्षमान् ।

का कथा तर्हि तस्य साधारणनां सैनिकानाम् ?······ते तु······ अतीतेषु त्रिषु वर्षेषु अभियानेषु निरन्तरं व्यापृता अपि अलब्ध्वा पराजितेभ्यः······तेभ्योऽपि दरिद्रतरेभ्यः !······सेल्जूकेभ्यः स्वल्पमपि लुण्ठाद्रव्यमप्रशमितधनतृष्णाः······अधिगत्य आह्वानं साक्षात् यवनराजस्य······ संकल्पितस्य भारतीयस्याभियानस्य कृते तान् आज्ञापयत्······तत्कालमेव चेलुः राजधानीसमीपस्थेऽनेकयोजनविस्तृते सेनासंनिवेशे उपस्थातुं······ रणघोषणाभिः विविधाभिः दश दिशः निनादयन्तः······समुद्यतायुधाः······ निशिततरखड्गाः······प्रदीर्घतरभल्लाः······तीक्ष्णतरछुरिकाः······नवीनतरशरासनाः······चपलतरतुरगाः !

अथवा······तस्य प्रजाजनानाम् ?······तेऽपि······अनादिकालान् सार्थवाहमुखेभ्यः श्रुतचरापारभारतीय वैभवाः······प्रशासनकाले वर्तमानस्यैव तदधीश्वरस्य अनुभूततदास्वादसुखाः······तदधिकलिप्सया प्रत्यहं वर्द्धमानया पीड्यमानाः······लुण्ठितानीतेन भारतीयेन वैभवेनात्मानं वैभवशालिनं कर्तुमीहमानाः (—ते हि अदूरदृष्टयः न खलु साक्षाच्चक्रुः सनातनं सत्यं—'न खलु कोऽपि अस्मिन् संसारे लुण्ठितेन परवैभवेन वस्तुतः वैभवशाली अभवत्······भवति······भविष्यति ।' इति—)······महता उत्साहेनाभिननन्दुः तस्य संकल्पितस्य भारतीयस्य अभियानस्य वार्त्तां······ दावानलस्य वेगेन समस्ते गजनीराज्ये······तदासमन्तिके प्रदेशे च प्रसृताम् !

स तस्य यवनाधीश्वरस्याभिनिवेशः······आग्रहः······निश्चयः······स तस्य सेनाधिकारिणां सहकार्योत्साहः······स तस्य सैनिकानां हर्षः······राजधानीतः साजयनिनादं प्रस्थितानां······वेगेन दुष्प्रतिसहेन मार्गं पूर्वाभिमुखं परिचितप्रायं वेगेन आक्रमतां······आघातमाद्यमनुबभूव कतिपयदिवसानन्तरमेव······अवलोक्य आत्मानं संमुखीनं······उदीचीन-पौरस्त्य-दाक्षिणात्यदिगन्तप्रसृतस्य निर्वृक्षस्य······निरुद्भिज्जस्य······भाग्यहीनस्य जीवनस्येव शून्यशून्यस्य······निःस्तब्धस्य निरुध्य श्वासं तन्निगरणेच्छया हिंस्राय। प्रतीक्षमाणस्येव तदागमनं······करतलसमानतलस्य······आदर्शस्वच्छस्य

……दिवा प्रतिफलत्प्रभाकरप्रभादुर्दर्शस्य……नक्तं प्रतिफलत्नक्षत्रगणस्य ……एकीभावामिव गगनवितानेनोपरितनेन सहाधिगच्छतः……आपात-कठोरया पदक्षेपमात्रभंगुरयाऽतिगभीरयाऽतिगहनया हिमसंहत्याऽऽच्छादितस्य ……दुरतिक्रमणीयस्य……अपारस्य भूप्रदेशस्य !

अवलोक्य तदद्भुतं दृश्यं चकिता अभवन् ते सर्वे आजन्मनः परिचिता-अपि हिमाच्छादितैः प्रदेशैः…आजन्मनः अभ्यस्ता अपि हिमसंहतीनाम् ।… ततश्च–किंकर्तव्यताविमूढाः निरीक्ष्य स्वं मार्गं भारतवर्षयायिनं निःशेषं आच्छादितं हिमानीभिः ।……न खलु तं पारयामासुः आक्रमितुं दिवा…… विभाव्याऽपि तं कथमपि साहाय्येन दिवाकरस्य……साक्षात्कृत्वा संभावनां भयावहां (-प्रात्यक्षिकेणानुभवेन प्रमाणितां-) अपुनरुन्मज्जनार्थं निमज्जनस्य निपतत्प्रभाकरकरभंगुरीकृतायामति गंभीरायां हिमान्यां,…न वा नक्तं…… समुत्प्रेक्ष्य संभावनां तथैव भयावहां (–तामपि प्रात्याक्षिकेणानुभवेन प्रमा-णितां–) अपुनरागमनार्थं गमनस्य सर्वथाऽनभीष्टायामाशायाम् !

तथा किंकर्तव्यताविमूढाश्च ददृशुः……उच्चावचाः……मुखं स्वने-तुर्यवनाधीशस्य……यथोचितनिर्देशापेक्षया ।

निरतिशयं हि ते तस्मिन् विशश्वसुः ।

सोऽपि……तथैव चकितोऽपि……तथैव किंकर्तव्यताविमूढोऽपि…… अनुमाय तदपेक्षां तत्क्षणपूर्वमेव कृताऽऽकारगूहनः……निर्विकारमुखमुद्रः… अभ्यस्त इव तादृशानां प्रत्यवायानां……निरदिक्षत् तान् विरन्तुं अग्रे चलनात्, मार्गयितुं समुचितं भूप्रदेशं विस्तृतं अध्वनि सद्यः समाक्रान्ते, कल्पयितुं च तत्र संनिवेशं आ आनुकूल्यात् ऋतोः ।

तेऽपि……प्रत्यक्षीकृत्य तस्य निरुद्विग्नतां विलीनोद्वेगाः……अन्व-तिष्ठन् निर्देशान् तस्य अविलम्बमेव ।

'शरीरेण बलिष्ठाः मानवाः…निरुद्योगाः उपद्रवकारिणो भवन्ति ।… तत्रापि सैनिकाः ।……अभ्यस्ता हि ते……सर्वदा निरंतरस्योद्योगस्य शारीरिकस्य मानसिकस्य वा'–इति मनोवैज्ञानिकं तथ्यं आ बाल्यात् जानन्……सः……न तान् अन्वमोदत तथा कल्पितनिवेशान्……यापयितुं स्वं समयं दिवास्वापे……आलस्ये वा,…अपि तु–न्ययुंक्त तान् युद्धाभ्यासे,… अधिकारिणश्च तेषां नवनवीनानां समरसंचालनप्रकाराणामाविष्कारे ।

स्वयं तु······कालापव्ययखिन्नमानसः······'विलंबोऽयं प्रतिक्षणमुपकरोत्येव प्रत्यर्थिनं प्रदाय तस्मै अवसरं अधिकतरसेनासंग्रहणार्थम् अधिकतरसुहृत्साहाय्याधिगमनार्थं······अधिकतर दुर्भेद्यस्वसंरक्षणोपाययोजनार्थम्' इति भावयित्वा सचिंतचित्तः······प्रत्येकं क्षणं स्वसमयस्य उपयुयोज गवेषणे स्वसैन्यभारसहनसमर्थस्य मार्गस्य ।

न तु तत्याज स्वं धैर्यं क्षणमेकमपि ।

साक्षात्कृत्वा तत् तस्यासाधारणं धैर्यं पश्चात्तापतप्त इव तपनः······अन्ते एकस्य पक्षस्य······आरभत तप्तुं प्रखरतापं,······व्यलापयत् तामगाधां हिमानीं,······आविष्यकार तदाच्छादितं निस्तृणं भूतलं······पश्यत एव तस्य ससैन्यस्य स्वस्वकार्यव्यापृतस्य······हृष्टस्य ।······अन्वजानात् तस्य······निपुणतरं नवीनासु युद्धविधासु······समुत्सुकं परीक्षितुं स्वं सद्यअधिगतं नैपुण्यं रणक्षेत्रे······अपारं बलं······जलौघमिव सद्यःदूरीभूतसेतुबन्धं, वेगेन प्रचण्डेन आप्लावयन्तं परिवर्तिनं निम्नतरं समतलभूप्रदेशं······आक्रमितुमवशिष्टं मार्गं शून्यशून्यं,······प्रवेष्टुं पांचनदं राज्यं समुल्लंघ्य तस्य पाश्चात्योदीच्यां सीमां,······अवरोद्धुं च तत्प्रहरिणमिवाचलमेवस्थितं प्रचण्डं दुर्गं······नन्दनम्······आनन्दपालेन (—गुप्तचराधिगतसमाचारानुसारं—) ससुतेन समाश्रितम् ।

समवलोक्य तं······भीमदुर्गमिव······पिनद्धद्वारं शून्यशून्यप्राकारशिखरं······स्वात्मसंरक्षणमात्रपरं······किंचित्समाश्वस्तः यवनेश्वरः······जीवितं तं ससुतं बन्दीकर्तुं बद्धपरिकरः······अवरुरोध तं सर्वतः स्वेन 'दीन······दीन' इति रणघोषणाघर्घरस्वरेण समुद्यतमल्लनिबिडकान्तारभीषणेन युगपत्पतत्तुरगखुररवनिनादितगगनांगणेन बलेन अश्वसादिबहुलेन ।

यदा तु स अध्यगच्छत् समाचारं शनैः शनैः आसमन्तिकेषु कान्तारेषु निवसद्भ्यः, तैस्तैः प्रलोभनैः अनुकूलीकृतेभ्यः वनेचरेभ्यः······सूचयन्तं तं यत् तदागमनात् पूर्वमेव स पाञ्चनदः राजा आनन्दपालः······अतिरंजितसामर्थ्याया यवनसेनाया आगमनस्य वार्त्तयाऽकस्मात् विगलितधैर्यः······विनिर्गत आसीत् तस्माद्दुर्गात्······न केवलेनाधिकतरेण भारतीयबलेन,······अपि तु दुरधिगमनीयेन चतुरेण स्वेन तेन पुत्रेण धर्मपालेनापि······सहितः······तदा सहसा भग्नमनोरथः······क्षणमेकं समुदास्त अभियाने समग्रे एव

तस्मिन् ।

परंतु—क्षणमेकमेव ।

क्षणानन्तरमेव हि सः······विदितपरव्यूहरचनः······निश्चिकाय पराजेतुं परं······तेन स्वयं (स्व) संकल्पितायां व्यूहरचनायाम् ।

निश्चिकाय सः······विजेतुं संमुखीनं परदुर्गं विना कालातिपातं,······ अनुसर्तुं तदनंतरं पलायनवीरं तं प्रत्यर्थिनं, बन्दीकर्तुं तं ससुतं······विफलयितुं चैवं तं स्वे व्यूह एव ।

दृढं हि स विशश्वास यत् स परः इयेष······तमाबद्धुं तस्मिन्नेव स्थाने पर्याप्तं समयं यावत् प्रयत्ने दुर्गविजयस्य व्यापृतसैन्यं,······तं तत आक्रमितुं सहसा पार्ष्णितः स्वेनाधिकतरेण बलेन,······पेष्टुं च तं ससुतं उभयोः स्वसैन्ययोर्मध्ये······दुष्प्रतिरोध्येन वेगेनाग्रे उपसर्पतोः ।

आपूरितश्च सहसा रणावेशेन (–तत्स्थायिभावप्रायेण–! ) विबभाज स्वं बलं चतुर्षु भागेषु ।······प्रथमं स्वं भागं सः स्थापयामास संचालने अमीरस्य नस्त्रस्य,······द्वितीयं······अस्सलाम जाञिबस्य,······तृतीयं······ अबू अबदुल्ला मुहम्मदस्य,······चतुर्थं च······स्वस्य ।······आज्ञापयामास च तान् सर्वान् निरोद्धुं निरुच्छ्वासं आक्रमितुं च क्रमशः दुर्गं दिवानिशम् ।

युवराजं मसूदं सः स्थापयामास स्व एव भागे······निवारयितुं तं रणसंमर्देऽविचारितशूरात् साहसात् !

अचिरादेव······आरभत तस्य साऽऽक्रमणयोजना फलं अभीप्सितं प्रदर्शयितुम् ।

आदित एव संख्यया दुर्बलं······ततोऽपि स्वराज्ञा परित्यक्तमिवोपेक्षितमिवाऽऽत्मानं मन्यमानं,······ततोऽपि अनवरतशत्रुप्रतीक्षाक्लान्तं,······ततोऽपि-आगतस्य तस्य सामर्थ्यं प्रचण्ड वीक्ष्य विगलितधैर्यं, निशम्यासकृत् प्रोत्साहनपराणि आह्वानानि निर्भयस्य भीमपालस्य प्रतिकारे कथं कथमपि प्रवृत्तं,······दुर्गान्तर्वर्ति बलं हि पान्यनदस्य नराधिपस्य······ यदाऽऽरभतानुभवितुं तमनुरोधं श्वासावरोधकं······आक्रमणं च तत् क्रमिकं परन्तु क्षणमात्रमपि अविरमत्······तदा प्राक्रमत प्रार्थयितुं परमेश्वरं अनुग्रहीतुं तन्नरेशं आनन्दपालं सद्बुद्ध्या······तमाक्रमणार्थं पार्ष्णितः प्रोत्साहयन्त्या ।······बभूव चात्यंतं त्रस्तं भीतं क्षीणमनोबलं च······प्रयत-

मानस्यैव तत्प्रोत्साहनार्थं तस्य पालवंशांकुरस्य भीमपालस्य ।

अवलोक्य तत् तदवस्थं······अस्वस्थः सः युवकः निश्चिकाय निर्गन्तुं तेन सह बहिः दुर्गात् वीक्ष्यानुकूलतमं समयं,······आक्रमितुं अवरोधकं पर-सैन्यं दुष्प्रसहेनाऽऽवेशेन,······भेत्तुं तस्यावरोधनं येन केनाप्युपायेन,······नेतुं च तत् सन्निधौ कालेन तावता दुर्गमतमे······विनिश्चितपूर्वे-वनप्रदेशे निलीनस्य नरपतेः,······प्रापयितुं वा तत् सद्गतिं वीरोचितां रणक्षेत्रे आयोधननिरतानामेव हन्यमानानाम् ।

अथावलोक्य तस्य मनोवस्थां समुपजातकरुणेव नियतिः अनुजग्राह तं प्रदाय तत्प्रार्थितमनुकूलतममवसरं तस्मै कतिपयदिवसानन्तरमेव······ कृत्याऽनुपदमेव चक्रनेमिक्रमेण संप्राप्तां कृष्णचतुर्दश्यास्तमस्विनीं घोरतरतम-स्विनीं तिमिरेणाऽऽनिशामुखं······ज्ञात्वैव तदभिप्रायं······गगनांगणे कृत-संमर्दैः कज्जलकृष्णैः पयोदेन कृतेन,······सन्ततप्रवहत्प्रभंजनरवेण रौद्रेण निमज्जितान्यरवां······प्रोत्साहयामास च तं परिणमयितुं स्वं संकल्पं कार्य-रूपेणं ।

आनुकूल्यं तन्नियतेः······आशातीतं······साक्षात्कृत्वाऽऽपूरितः उत्साहेन स भीमपालः आज्ञापयामास तत्क्षणमेव सैन्यं स्वं विभक्तं कर्तुमात्मान-मगणितेषु दलेषु लघुषु,······अवतरितुं प्राचीरात् कान्ताराभिमुखात् निभृतं निःश्रेणीभिः रज्जुनिर्मिताभिः,······उपसर्तुं निशीथे तस्मिन् विश्रब्धं विश्राम्यत् यावनं सैन्यं,······हन्तुं तत्र कार्यरतान् प्रहरिसैनिकान् प्रकारेण येन केनापि,······निःसर्तुं तद्बिलस्य घटितघटनानभिज्ञस्य परसैन्यस्य अव-रोधात् निःशब्दं,···एकीभवितुं पुनः समीपे श्रीमद्रामचन्द्रदेवालयस्याल्पविदि-तस्य कान्तारमध्यवर्तिनः (—नूनं कालेन तावता मूर्तिभंजकैः दृष्टस्य खण्डितस्य परित्यक्तस्य च सकुत्सं भवितुमालयमुलूकादीनाममंगलाप्राणि-नाम् !—),······प्रधावितुं च ततःपरं······मिलित्वा···संनिवेशं मुख्यं राज्ञः समुद्दिश्य······प्रभञ्जनवेगेन ।

सैन्यमपि तस्य······निशम्य तामाज्ञां स्वप्नेऽपि अनपेक्षितां······दिवा-स्वप्नेष्वपि अप्रत्याशितां······विस्मितं······हृष्टं······कालमुखात् विकरालात् अपहृतमिवात्मानं मन्यमानं······उत्साहेनापूर्वेणान्वतिष्ठत् आज्ञां तस्य······ अविलम्बमेव ।

आरभत······अथ······संकल्पः सः राजकुमारस्य परिणमितुं कार्यरूपेण शनैः शनैः ।

अलप्स्यत च सफलां परिणतिं यदि (–अहो दुःखदः शब्दः–) न सा कपटकुटिला उपहासरसा शक्तिः (–किं दैवी ?···आहोस्वित् आसुरी ?–) पर्यवर्तिष्यत् स्वां कृपामवकृपायां अकस्मात् !······परंतु–

किं आकर्णयितुमिच्छंति भवन्तः···कथं सा विद्युच्चपलचित्तवृत्तिः······ अवरुरोध तत् हतभाग्यं सैन्यं भीमपालस्य सफलायाः परिणतेः समाप्त-प्रायस्य निष्क्रमणस्य······अकस्मात् ?

आकर्णयन्तु तर्हि ।

यथानिर्देशं प्राचीरशिरसः अधः अवतरितानां,······अवतीर्य परसैन्य-समीपमुपसृतानां,······उपसृत्य निहतप्रहरिसैनिकानां,······ततश्चावरोधात् निःशब्दं निःसरतां······निःसृतप्रायाणां···तस्य दलानामन्यतमं दलं एकं··· अकस्मात्······अवालोकयत् आत्मानं संमुखीनं······एकस्य निशस्त्रस्य दलस्य परसैन्यस्य······निशीथे तस्मिन् पूरयितुं दैहिकीरपरिहार्याः आवश्यकताः कान्तारे गतस्य···पूरयित्वा ताः निःशब्दं प्रतिनिवर्तमानस्य ! अदत्वैव च तस्मै······अवलोक्यात्मानं संमुखीनमेकस्य समुद्यतखड्गं विस्फारितारक्तेक्षणं निभृतमागच्छतः, अंशावताराणामिव ग्रसितुं मानव-कलेवरग्रासान् आतुरस्य स्वयं धृतमानवशरीरस्यान्धकारस्य, भारतीय-सैनिकानां दलस्य चकितचकिताय······भयजडाय······नि.शस्त्राय······ अवसरं पलाप्ताय प्रकटोकरणाय वा तद्गूढनिष्क्रमणस्य······अग्राहयत् तेन निःशब्दतामनन्ताम् !

नालक्षयत् परंतु )–नूनं वैपरीत्यात् नियतेः सकुत्समुपहसन्त्याः !–) एककं सैनिकं······तेन दलेन सहैव कान्तारे गतं······तेन सहैव निवर्तमानं··· परंतु······कतिपयक्षणपूर्वमेव कारणात् तन्मात्रविदितात् (–स्यान्नाम स्व-सौभाग्यात् !–) किंचिच्चिरायितं······तदनुपदमेवाऽऽगच्छन्तमपि वृक्षान्त-र्हितत्वात् अलक्ष्यं ।

अवेत् तस्योपस्थितिं···विज्ञाय घटनाक्रमं क्षणमेकं चकितचकितस्य··· क्षणमेकं भयजडस्य······क्षणमात्रानन्तरं ततः प्रपलायितस्य······निशम्याऽऽ-क्रन्दं······'रिपुः······रिपुः' इति······विजित्य प्रभंजनस्यापि स्वं सर्वव्यापिनं

सर्वतः प्रसरन्तं। अनुदधाव तं निःशब्दीकर्तुं । न परंतु शशाक तं बन्दीकर्तुं ······पणीकृत्य प्राणान् साक्रन्दं धावन्तं समुद्दिश्य नातिदूरवर्तिनं पटवासं स्वसेनाभागनायकस्य······अबू अब्दुल्लास्यस्य !

साक्षाच्चकार वैयर्थ्यं प्रयत्नस्य स्वनायकेन प्रियदर्शनेन निर्भयभीम-पालेनांगीकृतस्य । निश्चिकाय (–स्वनायकनिर्देशानुसारं–) तस्मिन्नेव क्षणे सूचयितुं तद्वैफल्यं इतरेभ्यः सर्वेभ्यः दलेभ्यः, आक्रमितुं च सावधानप्रायं परबलं सह तैः······'विमुखस्य मरणापेक्षया सन्मुखस्य मरणं श्रेष्ठतरम्–' इति मन्यमानं । ददार च······अकस्मात् निश्चलतामुपगते, निरुध्य श्वासं प्रतीक्षमाणे इव भाविनं घटनाक्रमं, प्रभञ्जने······सहसा सर्वत्र प्रसृतां घनां नीरवतां······अस्पाष्टक्षरं श्रूयमाणेन 'गनीम······गनीम' इत्याक्रंदेन तस्यैव सैनिकस्य मुहुः मुहुः भज्यमानां······स्वेनावेशकर्कशेन रणघोषेण निर्द्धारित-पूर्वेण ।

श्रुत्वा तं······विचलित इव······प्रवृद्धकोप इव मनसिकृत्वा यत्किंचन-कारितां नियतेः······प्राक् निर्भयभीमं ततश्चाकस्मात् महमूदं तथोपकुर्वंत्याः ······सहसाऽऽरभत प्रवातुं द्विगुणितेन वेगेन प्रभंजनः । तद्भावभावित इव ······प्रवृत्त इव प्रोत्साहने तस्य हतदैवस्य राजकुमारस्य······सहसाऽऽरभत गर्जितुं मेघाटोपः कज्जलकृष्णः ।

परंतु–अहो आवेशः परजिघांसायाः !

अहो आवेगः स्वात्मरिरक्षिषायाः······मानवं (–किमिति मानवमेव ? ······प्राणिमात्रं) उन्मत्तप्रायं कुर्वन्त्याः !

इयानासीत् तुमुलः कोलाहलः······आवेगात् आवेशात् तस्मात् समुद्भूतः······प्रवर्द्धितः संरावेण घर्घरेण योद्धृघ्णां विस्फारेण तीक्ष्णेन धनुष्याणां ह्रेषारवेणाश्वानां······टणत्कारेण खड्गानां······सिंहनादेन हन्तृघ्णां······आक्रंदनेन हन्यमानानां चीत्कारेण मुमुर्षूणां······यत्······ शब्दमयमिवाभवत् कतिपयेष्वेव क्षणेषु ब्रह्माण्डं······श्रवणेन्द्रियदासमिवा-भवत् इन्द्रियचतुष्कम् !

प्रबर्द्धयितुमिव तस्य तां तुमुलतां (–यदि नाम तत् शक्यमासीत् !–) आजगाम तस्मात् दुर्गात्······अन्यः कोलाहलः रणघोषस्य···'किमयं तुमुलः ध्वनिः·········तीव्रेण वेगेनोद्गच्छन् अधस्तनात् अवरोधकसेनासंनिवेशात्,

क्रमशः प्रज्ज्वाल्यमानैरलातैः अस्पष्टतया प्रकाश्यमानात्,······प्रसरंश्च दश-दिशासु,······पार्ष्णितः सहसाऽऽक्रमतः अस्मत्सैन्यस्य स्वनामधन्येन महा-राजेनानन्दपालेन स्वयं रणशिरसि नीयमानस्य ?········उत शृगालचतुरेण परेण सहसा आलक्षितगूढनिष्क्रमणस्य कण्ठग्राहं च गृहीतस्य, पणीकृत्य प्राणान् प्रतिकर्तुं प्रवृत्तस्य अस्मत्सैन्यस्यात्रत्यस्य ?······आहोस्वित् सावेशं युध्यमानस्य परसैन्यस्य ?–'इति विनिश्चेतुमपारयतोऽपि सहसा रणावेशा-विष्टस्य प्रस्फुरद्बाहुदण्डस्य······अपावृत्य सिंहद्वारं दुर्गस्य, आरुह्य स्वं स्वमश्वं, उद्धृत्य स्वं-स्वं खड्गं बहिर्निर्गच्छतः····दुर्गरक्षाधिकृतस्य भारतीय-सैन्यदलस्य······आवेशशुष्कात् कण्ठशतात् उद्गच्छन् !

पश्यतामेव चाद्भुतं दृश्यं तत्तस्य अवरोधनस्थलस्याबू अब्दुल्लासंचा-ल्यमानस्य······औत्सुक्येनेवाधः अवतीर्णानां······दिदृक्षयेव दुर्निवार्यया वारं वारं विद्युत्प्रकाशं प्रक्षिपतां····वारिदानां सान्द्राणां······आरभत विजयश्रीः प्रदर्शयितुं स्वां इच्छां वरितुं आरुह्य कृष्णवर्णं एकस्य यवनसैनिकस्य पटोट-जात् प्रसह्यापहृतं विद्युद्वेगेन युद्धक्षेत्रेऽनवरतं संचरन्तं······असकृत् निहत्य मार्गपतितान् यवनसैनिकान् स्वान् वीरान् नामग्राहं प्रोत्साहयन्तं निर्भयं भीमपालम् !

परंतु–(अहो दुर्दैवसूचकः शब्दः !–)प्रसह्य निवारिता तथा करणात् तया जरत्या (–का हि जरतीतरा तदपेक्षया ?–) नियत्या दुष्टहृदयया यत्किंचित्कारिण्या······विनिपात्य भूमौ सहसा राजकुमारं तुरगात् तृणा-च्छन्नापरिलक्षितभूविवरस्खलितवामाग्रखुरात् इवाकस्मात् अपराद्धपदक्षे-पात्······समुत्पाद्य मनःसु तस्य सैनिकानां····युद्धव्यापृतानामपि तमेव मुहुः-मुहुः पश्यतां,······तस्मादेव प्रतिक्षणं स्फूर्तिप्रकाशं प्राप्नुवतां,····अवधारणां तस्य हतेः,·····संप्रेर्य च तान् रक्षितुमात्मानं येन केनापि प्रकारेण,········सहसाऽलंचकार यवनमेव विजयमालया !

प्रदर्शयामास च यवनराजाय······निशम्य तस्य यवनसैनिकस्य 'गनीम ······गनीम' इत्याक्रन्दं प्रबुद्धायापि,······निरीक्षणे भागान्तराणामवरोधक-सैन्यस्यानाक्रमितानामपि स्वे-स्वे स्थाने सावधानानां अप्रत्याशिताक्रमण-प्रतिकारार्थं सन्नद्धानां व्यापृततया चिरायिताय,·····स्वेनाग्रजेन आतुरेणापि योद्धुं पितुरादेशमुल्लंघयितुमक्षमेणानुगम्यमानाय,·····सकौतूहलं रणक्षेत्रे

कृतपदक्षेपाय······अबू अबदुल्लं······विजयस्मितोत्फुल्लाननं,······स्वसैनिक-संमर्दं विजयानन्देन नृत्यन्तं,····रणक्षेत्रं च हताहतसैनिककलेवरखचितम् !

दृष्ट्वा च तत् रोमहर्षकं चंचलालातशतप्रकाशितं दृश्यं परं समाधान-मलभत सः······कृत्वा मनसि–'तया कपटेन समाक्रान्तमपि अनवहितमपि (–त्रुटिरियं विशिष्य परिहार्याऽतः परम् ! –)······बलं मम······अन्ते प्रस्था-पयामास एव स्वां श्रेष्ठतरतां साक्षादायोधने ।'

समाधानं तत् तस्य········अभवत् किंचिद्ग्रस्तं नैराश्येन ज्ञात्वा न केवलमानन्दपालं तं तस्य संततोपद्रवकारिणं च पुत्रं····धर्मपालं······आदित एव अपक्रान्तं सहाधिकतरेण स्वेन बलेनाक्षुण्णबलेन तस्मात् दुर्गात्,······ अपि तु राजवंशांकुरं तमात्मानं निर्भयत्वेन प्रख्यापयन्तं भीमपालमपि······ आयोधनव्यापृतानामेव तत्सैनिकानां······युद्धक्षेत्राद्व्यपगतं सह कैश्चित् अंगरक्षकैः ।

परंतु······अनिच्छुकः भंक्तुं मनोबलं स्वसैनिकानां······किंचिन्न्यूनीभू-तविजयोन्मादानां, विज्ञाय कर्णपरंपरयाऽऽगतं तं······तदाऽऽसमन्तात् कृत-संमर्दानां, अपेक्षयेव पारितोषिकस्य तन्मुखं साभिप्रायमवलोकयतां········ जगूह तत् आत्मनः नैराश्यं,·····प्रेषयामास तत्क्षणं एकं गवेषणचतुरं दलं सहस्राधिकानामश्वसादिनामनुसर्तुमानेतुं च भीमपालं······मृतं जीवन्तं वा, ······अन्वजानात् सस्मितं स्वान् निःशब्दं आज्ञां याचमानान् सैनिकान् प्रवेष्टुमपावृतमहाद्वारं······दृश्यमानं शून्यशून्यमिव······परदुर्गं लुण्ठितुं च धनं तत्रत्यानां नागरिकाणामुच्चावचानां,·········न्यषेधीत् तान् लुण्ठनात् धनस्य······दुर्गान्तिर्वर्तिदेवतायतनेषु राजकीयप्रासादेषु शासकीयकार्यालयेषु राजकीयकोषागारेषु च विद्यमानस्य (स हि दृढममन्यत तत् तदीयम् ! –), ······आदिशत् तान् बन्दीकर्तुं सर्वानपि श्रमसक्षमशरीरान् पुरुषान् दुर्गान्त-र्भागे तत्र तत्र निलीनान् अविगणय्य तेषां उच्चावचत्वं······अन्यं यं कमपि-भेदं वा······उपस्थापयितुं तान् समक्षं तस्यान्तिमे प्रहरे तस्य दिवसस्य,······ प्रेषयामास अन्यत्सैनिकदलं शासकीयधनानयनार्थं दुर्गाभ्यन्तरतः,······न्यव-र्तत च स्वं पटप्रासादं······सद्यः समाप्ते घोरे रणकंदने ईषदप्यक्षतं······ प्रतीक्षितुं पालनं तस्याज्ञानाम् ।

प्रातिष्ठत च······अन्ते प्रथमस्य प्रहरस्य दिवसस्यापरस्य······दिदृक्षये-

वापरितृप्यन्त्या ह्यस्तनस्य रणक्षेत्रस्याधः प्रसृतस्य सत्वरं प्रवसति पूर्वं-दिगंगणात्······आरक्तमेघशकलसंकुलात् प्रतिफलितरक्तरंजितरणक्षेत्रा-दिवाद्भुतदर्शनात्······भास्वति,·······निपतितकबंधसहस्रसंपर्कपरिजिहीर्ष-येव स्तोकमपि अवाति नभस्वति,·····स्वं गृहराज्यं समुद्दिश्य,·····अनु-गम्यमानः·····परिवृतसहस्राधिकदासकदंबेन, राजकोषपरिक्षकेण, लुण्ठित-नागरिकधनराशिं मनसि कृत्वाऽसकृन्मोदमानेन, कदाचित् स्मृत्वा निहतं स्वबांधवादिकं दन्दूयमानमानसेन, कदाचित् अहतमात्मानं बहुमन्यमानेन··· स्वेन बलेन·····श्रान्तेनापि रणरणकखिद्यमानहृदयेनापि विभाव्य साफल्य-मभियानस्य हृष्टेन,·····कृतपार्ष्णिभागसुरक्षोपायः·····पालराजवंशस्य समूलोन्मूलनस्योपायानां विधिधप्रकारकाणां चिन्तने व्यापृतोऽपि आकस्मिकस्य पराक्रमणस्य विषये सदा जागरूकः·····कदाचिदभियाने सद्यः समाप्तिं गते प्रत्यक्षीकृतस्य शौर्यस्यैव स्वबलस्य विषये चिन्तयन् ।

इत्थंप्रकारके तर्कवितर्के व्यग्रोऽपि अव्यग्रमिवात्मानं प्रकटतो दर्शयन् च प्राप स्वां राजधानीं·····गजनीं·····ख्यातिं जगद्व्यापिनीं वेगेनाधि-गच्छन्तीं, स्वागतं विजयश्रिया मण्डितस्य स्वाधीशस्य कर्तुमुत्सुकोत्सुकां···· प्रार्थनामंदिर विनिर्गच्छत्प्रार्थनास्वरनिनादितदिगन्ताम् !



## सप्तमः परिच्छेदः

अनाथ-नाथ ! 'गरीब-परवर!'–आह सः वृद्धः धवलश्मश्रुलः रेखांकिताननः आरक्तगौरवर्णः पारसीकः विक्रेता दुर्लभानां वस्तूनां,····· उपसंहरन् स्वं निवेदनं, 'अधिकतमो भागः अस्य जीवनस्य सप्ततितमे वर्षे सद्यः प्रविष्टस्य यापितः अनेन भवतां दासेन देशान्तराणां पर्यटने निरीक्षणे च तत्रत्यानां भौगोलिकानां निवासिनां वा वैशिष्ट्यानां।····· परंतु ····· नान्यत्र कुत्रापि निरीक्षितानि मया तादृशानि वैशिष्ट्यानि····· यादृशानि तस्मिन् खण्डप्राये मूर्तिपूजके देशे····· भारतवर्षे,····· आम् !····· वैशिष्ट्यानि प्रायः धीनि,····· वैशिष्ट्यानि यथा–अपारं वैभवं निरतिशयञ्च दारिद्र्यं शारीरिपरस्परविरोकस्य सामर्थ्यस्य तद्रक्षणायाऽऽवश्यकस्य,····· सैद्धान्तिकं विश्वबंधुत्वं प्रात्यक्षिकञ्च पारस्परिकेर्ष्याकलहप्रियत्वं,····· अगाधं सहिष्णुत्वं निरवधिकं मनोदौर्बल्यञ्च,····· निष्कामकर्मयोगोपदेशप्रियत्वं निःसीमं कर्मदारिद्र्यञ्च·····'

'परन्तु–'आह सहसा यवनाधिपः····· निक्षिप्य एकं कटाक्षं दिशि राजकुमारस्य मसूदस्य····· अवस्थाय वातायनसमीपे बहिरवलोकयतः,····· परंतु ····· वस्तुतः········ एकाग्रेण चित्तेनाऽऽकर्णयतः वृत्तान्तं तस्य विक्रेतुः सद्यः आगतस्य यात्राया आर्यावर्तस्य,········ स्पृशतश्च वारंवारं स्वं चिकुरिलं कज्जलकृष्णं मृदुलमृदुलं सुगंधिनं श्मश्रुपाशं,···· तु अनुभवः तद्देशीयविषयकः नितान्तं भिन्नः !······ अस्माभिस्तु तद्देशीया अनुभूताः ऐश्वर्यशालिनः अथ च पणीकृत्य प्राणान् तद्रक्षणार्थं बद्धपरिकराः,····· परस्परेर्ष्याग्रस्ता अपि स्वधर्मरक्षणार्थं एकीभवन्तः (–अभ्युपेयते विलंबेन इति।········ परंतु–स विलंबः अतिविशालत्वात् तद्देशस्य अपि संभवी !–),····· सहिष्णवः अथ च दुर्जेयप्रायमनः सामर्थ्यसंपन्नाः,····· यथा पांचनदः।'

'व्यतीतानि खलु बहूनि संवत्सराणि····· अस्माकं····· विजेतुं तान्····· विनाशयितुं तान्····· भंक्तुं तेषां मनोबलं····· प्रयतमानानाम् !····· न च लब्धं साफल्यं प्रयत्नेषु स्वेषु····· समाधानप्रदम् !····· लब्धः विजयः अभियानेषु अद्यावधिकेषु।····· परंतु····· सोऽपि प्रायः अनुकूलत्वान्नियतेः,·····

न मनोदौर्बल्यात् तेषाम् !……यथा हि अस्माकं सद्यः समाप्ति गतेऽभियाने ।……यदि नाम सैनिका अस्माकं कतिचनपूरयितुं दैहिकीरावश्यकताः कान्तारमध्ये गन्तुं प्रेरिता नाभविष्यन् नियत्या……तर्हि पांचनदस्य तस्य (–सकौतुकमिव–) राजकुमारस्य समरव्यूहः सः……अपरिलक्षित एवास्माभिः प्राक्……नियतमलमकरिष्यत् तमभूतपूर्वसदृशेन विजयेन !'

–'परंतु,……अब्बाजान !–' आक्षिपन् इव तद्वचः……अवदत् कोपादिव प्रस्फुरन्नासिकापुटः मसूदः……सहसा प्रत्यावर्तिताननः…'दृष्टिकोणोऽयं लघूकरोति पराक्रममस्माकं सैनिकानाम् !'

'न लघूकरोति–' तैक्ष्ण्यं सहसा उपगतया वाचा प्रत्यवदत् तत्पिता ।……'यदि हि ते पराक्रमिणः नाभविष्यन्……न ते समर्था अभविष्यन् लब्धुं अधिकतमं लाभं नियतेः !'

'विस्मृता नूनं त्वया–' क्षणमेकं विरम्याग्रेऽवदत् सः, 'सा उक्तिः…… सुप्रचलिता तेषु मूर्तिपूजकेषु……अस्माकं राजसभारत्नेन……अल्बरूनिना निवेदिताऽस्मभ्यं……'शौर्यान्वितं पुरुषसिंहमुपैति सिद्धिः'……इतीव किमपि कथयन्ती ।'

'अपि च–दृष्टिकोणोऽयं……न प्रकटनीयः सैनिकानां सामान्यानां पुरस्तात्,……अपि तु–धार्यः मनसि सदा तेषां नेतृत्वं कुर्वाणेन…… रक्षितुमात्मानमाहोपुरुषिकायाः सर्वविनाशकारिण्याः ।'

'परंतु–' विनम्रस्वरं व्यज्ञापयत् नातिदूरे एकस्मिन् आसने समुपविष्टः, तावत्कालपर्यन्तं मूकमूकः, तस्य प्रधानामात्यः,……'नियतिरपि अनुकूलाऽस्मत्सैनिकानां मनसि कृत्वैव–'संप्रेषितः, नेता एतेषां परमेश्वरेणास्मिन् जगति प्रसारयितुं प्रकाशं सद्धर्मस्य एकमात्रस्य इति ।'

वक्तुकाम इव किंचित् तत्संमुखीनोऽभवत् यवनराजः ।……परंतु न उवाच किमपि……सहसा संयमितस्वान्त इव ।

अथवा–उवाच स्वमनोगतं शनैः शनैराविर्भूतेन सकुत्सेनेव स्मितेन ।

'आशयः मम एतावान् एवासीत् यत् भारतीयाः न तावन्तः दुर्बलाः शरीरेण चित्तेन वा……यावन्तः वर्ण्यन्तेऽनेनवृद्धेन–' उपसंहर्तुकाम इवावदत् सः कतिपयक्षणानन्तरम् ।

'दासानुदासः अयं सम्राजः,'–आरभत मन्द्रस्वरं याचितुं तत्क्षमां……

सकंप इव सः सायात्रिकः, 'नानुकंपितः भाग्येन दत्वा बुद्धिं सर्वग्राहिणीं··· अतिक्रम्य स्वपक्षाभिनिवेशं·····निष्पक्षेण दृष्टिकोणेन वस्तुस्थितेराकलने क्षमां !······उपकर्तव्यः अतः सम्राजा क्षमादानेन उदारेण ।"

'स्वीचकार तदनुरोधं मन्देन स्मितेन सम्राट् । आह परन्तु–(अवलोकयन् दिशि मसूदस्य साभिप्रायं)–'सर्वदा नरेण स्वं कुशलं कामयमानेन·····उपस्थिताया वस्तुस्थितेः निष्पक्षमाकलनं कर्तुं प्रयतितव्यम् ।

'अस्तु'-संतुष्ट इव किंचित् अवलोक्य मसूदस्याननमारक्ततरं निरुत्तरं··· आह अग्रे सः तं वणिजम् ।······'अप्यस्ति किमपि अपरं ते वक्तव्यम् ?'

'यदि अनुज्ञायते दासोऽयं'–प्रत्युवाच सः विनम्रमुखः ।

'अनुज्ञायते–' किंचिद्विस्मित इव प्रत्याहापरः ।

'येषां खलु भारतीयानां संपर्के सम्राट् आगतः एतावत्कालपर्यन्तं······ ते नूनं भारतीयेषु श्रेष्ठतराः,······श्रेष्ठतराः शारीरिकेण सामर्थ्येन······ मानसिकेन बलेन,······अभिमानैकधनाः,······स्वधर्मसंस्कृत्यभिमानिनः,······ आत्मानं निखिलस्य राष्ट्रस्य उदीच्य-पाश्चात्त्यसीमाद्वाररक्षकंमन्याः,······ तद्रक्षणार्थं प्राणानपि उत्स्रष्टुं संनद्धाः ।···परन्तु–अवशिष्टा भारतीयाः··· विशेषतः आर्यावर्तीयाः (–आर्यावर्ते एवाहं व्यचरं वाणिज्यार्थम्–) न तावन्तो भाग्यशालिनः······ऋते वैभवात्,······शरीरेण लघवः,······आधिभौतिकानि कष्टानि चिरं सोढुं असमर्थाः,······मनसा दुर्बलाः, क्षुद्राहंकाराध्मातशिरसः,······क्षुद्रस्य वैयक्तिकस्य स्वार्थस्य कृते स्वं धर्मं स्वां संस्कृतिं (–ययोस्ते स्तुतिगीतानि गायन्तः न क्षणमात्रमपि म्लायन्ति !–) बलिं दातुं तत्पराः,······'आत्मार्थे पृथिवीं त्यजेत्'–इति ध्येयवाक्यं सततं ध्यायन्तः······कथं खलु अभवन् स्वामिनः तावतो वैभवस्य ?···कथं च दासाः विवेकहीनतायाः स्थापयितुं वैभवं तावत् विशिष्टेष्वेव स्थानस्य ?–इमौ खलु यक्षप्रश्नौ असमर्थमेवात्मानमनुभवामि उत्तरयितुं······अद्यापि ।'

'केषु खलु स्थानेषु विशिष्टेषु स्थापितं तावद्वैभवं तैः ?' अपृच्छद्यवनेश्वरः समुपजातकौतूहल इव······मध्ये एव ।

'देवतायतनेषु······स्वप्रासादेषु च'–प्रत्याह तत्क्षणं स वृद्धः ।

'स्यान्नाम तेषां मूर्खाणां धारणा यत् तेषां देवाः (–आपत्काले मानवीयं······अन्यविधं वा······यत्किमपि······रूपं धृत्वाऽऽविर्भवन्तःइत्यहो

उर्वरकता तेषां कल्पनाशक्तेः ! ······) अथवा तेषां नृपाः (–यांस्ते अंशावतारान् देवानां मन्यन्ते !–)······वैभवं तेषां संचितं आपदि रक्षयेयुः–' इति'–सोपहासमवदत् मध्ये एव राजकुमारः।

'परिगणय केषांचित् एतादृशानां स्थानविशेषाणां नामानि–' समुपेक्षमाणः वचः आत्मजस्य आज्ञापयामास यवनाधीशः।

'तेषां पवित्रा नगरी······स्थानेश्वराभिधा,······प्राचीना वा महानगरी हस्तिनापुरनाम्नी,······दैवी लीलास्थली मथुराह्वा,·····मंदिरनगरी वाराणसीति नाम्ना प्रसिद्धा······' (मध्ये एव विरम्य परिगणनप्रयत्नात् असमर्थ इव) 'कियतां वा स्थलानां नामानि परिगणयिष्यामि अहम्।······समस्त एव–आर्यावर्तः खचितस्तैः।······न केवलः आर्यावर्तः,······अपि तु समस्त एव देशः।······कियांश्च विशालः सः······न कोऽपि जानाति······तद्देशीयः परदेशीयो वा।·········इयं विशालता एव······मन्ये······अरक्षत् तं देशम् आधिपत्यात् अद्यावधिपर्यन्तं परकीयाणां रोमकहूणसदृशानाम्,······अरुणत् च तस्य प्रत्यर्थीन् तत् संपत्लुण्ठनात् निःशेषात्।

इत्थं कृतारम्भः···समवलोक्य तान् सर्वान् एकाग्रेण चित्तेनाऽऽकर्णयतस्तत्कथनं प्रोत्साहितः······सः······तथाऽऽरभत वर्णयितुं वैभवं भारतवर्षस्य अतिशयोक्त्यनुप्राणितया रीत्या······साक्षात् यवनसम्राट् अपि······पिबन्निव तस्य वणिजः प्रत्येकं शब्दं······न परिलक्षयांचकार······अवलोक्येव तस्य वित्तेषणां······आदित एवासाधारणप्रबलां·········प्रवर्द्धमानां प्रतिक्षणं······ विषलतामिव जलौघेन······निर्विण्णमिव,······निर्विद्य च पश्चिमाम्बुनिधौ मिमंक्षिषया तत्समीपमुपसर्पन्तं······मन्दप्रभं प्रभाकरं,······'किं नु मंत्र्यते मम भर्त्राऽद्य सह वृद्धेनाभ्यागतेनापरिचितेन एतावत्कालपर्यन्तं मंत्रणाकक्षेऽवधीर्य सुखदं दैनंदिनं सायंभ्रमणं प्रासादारामे विकसद्विविधकुसुमामोदसुवासिते ?'–इति समुपजातकौतूहलया यवनराज्यश्रिया संप्रेषितं गुप्तचरमिव निभृतं कक्षान्तः प्रविशन्तं, प्रविशन्तं, प्रविश्य निशम्य च वार्तालापं तत्रत्यं ततः निभृतं निःसरन्तं सायंसमीरं,······तेन संसूचितायाः हृष्टायाः साहाय्यं जगन्नियन्तुः स्वभर्तुरभियानेषु याचमानायास्तस्याः भावस्निग्धं प्रार्थनास्वरमिव प्रमुखतमात् राजकीयात् प्रार्थनामंदिरात् उच्चैः उद्गच्छन्तं च सायंप्रार्थनास्वरम्।

अवेत्……चिरात्……समयगतिं……अवलोक्य रत्नदीपं एकतमं प्रज्वलितमानीतं च कक्षान्तः सेवकेन वृद्धेन एकेन,……अन्वजानात् तं वृद्धं वणिजं……अनुज्ञां गमनाय निःशब्दं याचमानं……अपसतुं हस्तेंगितमात्रेण, ……अक्षिपत् च……गते तस्मिन् विनयप्रह्वे संमुखीने एव कक्षात् तस्मात् आदाय स्वां रत्नपेटिकां……एकां साभिप्रायां दृष्टिं किंचिदारक्तां ज्वरोत्तप्तामिव दृष्टिं दिशि स्वात्मजस्य……वातयनसमीप एव पूर्ववत् तिष्ठतः, पूर्ववन्निश्चलस्य, परंतु व्यावर्त्य मुखं कक्षान्तः तमेव सद्य आनीतसायंदीप प्रकाशितं निर्निमेषया दृष्ट्या ध्यायतः……अपरांच दिशि स्वामात्यप्रमुखस्य ……आसन एव पूर्ववदुपविष्टस्य पाषाणोत्कीर्णस्येव पूर्ववन्निश्चलस्य…… परंतु किंचिदुन्नमय्य मुखं तमेवाऽऽदरप्रह्वयाऽपि साध्वसमूकयाऽपि साभिप्रायया दृष्ट्या तमेवावलोकयतः ।

अवलोक्य च दृष्ट्योस्तयोः भावं…प्रतिफलितमिवाभिन्नं स्वात् भावात् ……परमं समाधानमलभत ।

भावो हि……लब्ध्वा स्वानुकूलं प्रत्युत्तरं……प्रतिशब्दं……प्रतिबिंब… मनःसु स्वेतरेषु……परमं आश्वासं लभते ।

विशेषतो दुष्टो भावः………आसुरः………पराहिताश्रितः,………भावः लुलुण्ठिषासदृशः,…असमर्थ इवावस्थातुं एकक एव प्रकाशे स्वात्मज्योतिषः !

मा……मा……सकुत्सं स्मितं कुर्वन्तु भवन्तः………चिंतयित्वा–'कुतः खलु अनन्यसदृशस्य परधनलुण्ठकस्य तस्य……आत्मज्योतिः ?' इति ।

तस्मिन्नपि अविद्यत तत् ।……अत एव तु सः……अजूगुपत् स्वां परधनलालसां 'रजोगुणसमुदभवां' सात्विकेन (–अथवा आपाततः सात्विकेन–) आवरणेन स्वसद्धर्मप्रसारणेच्छायाः ।

अत्यल्पमिदमुक्तं–ततोऽपि नीचतरेऽविद्यत……विद्यते……वेत्स्यते च तत्……सान्द्रतमेन रजोगुणपटलेन विनाशितप्रायमपि ।

मानवः……अथवा सचेतनः……अथ च स्वात्मज्योतिषा विहीनः–इति व्याहतं वचः ।

अस्तु !……प्रकृतमनुसरामः ।

तथा समुपजाताश्वसश्च आरभत सः (–बलादिव नियोजितः नियत्या) प्रकटीकर्तुं पुरस्तात् तयोः (–वस्तुतः……पुरस्तादात्मन एव……निमित्तीकृत्य

तौ–! )········भव्यं मनोराज्यं स्वं निर्माणस्याभूतपूर्वसदृशस्य तौरुष्किक-पारसिकसाम्राज्यस्य······भारतवर्षसमायाः स्वर्णभूमेराक्रमणस्य दासीक-रणस्य लुण्ठनस्योपरि आद्धृतस्य······मनोराज्यं······तावत्कालपर्यन्तमनति-सुस्पष्टीकृतमसंभवनीयप्रायमिति मनसिकृत्य।

इयत् भव्यमासीत् तच्छब्दचित्रं तस्य संकल्पितस्य साम्राज्यस्य······भौतिकैश्वर्यमण्डितस्य वौद्धिकोत्कर्षचिरस्मरणीयस्य विविधकलाविलास-रमणीयस्य······यत् श्रुतमस्माभिः······निशि तस्यां नियते समये उदिता······नियते समये मध्यं गगनस्याऽऽरूढा चतुर्थीचंद्रकला (–ध्वजे तदीये गौरवा-चितं स्थानमलंकुर्वाणा–) अपि······निशीथनीरवे गगने समुत्तुंगतत्प्रासाद-शिखरवर्तिनः मंत्रणाकक्षात् अविच्छिन्नं निःसरतस्तस्य भाषणस्य श्रवणस्य लोभमपारयन्तीव संयमितुं चिरमचिरयत तत्र !····अविदत च चित्तोल्लासं परमम् !

का कथा तर्हि······तस्य श्रोत्रोः······आदित एव प्रबलेषणात्रयाऽऽयास्य-मानान्तःकरणयोः,······तं······तमेव एककं······क्षमं इन्द्रधनुष इवावऽऽकर्ष-कस्य मनोराज्यस्य तादृशभौतिकसत्यतलेऽवतारणस्य मन्यमानयोः ?

का वा······कतिपयदिवसानन्तरमेव तस्य संकल्पं श्रुतवतां······तस्योच्चा-वचानां सैनिकानामधिकारिणां, तमेव एककं स्वमादर्शं मन्यमानानाम् ?······तस्य साधारणानां सैनिकानां, अनुगन्तुं तं स्वर्गेऽपि······नरकेऽपि वा····सदा संन्नद्धानाम् ? तस्य······प्रजाजनानां, नागरिकाणां ग्रामीणानाञ्च······तं···सफलीकर्तुं तन्मनोराज्यानि वंशपरंपरयाऽऽगतानि······अस्पष्टास्पष्टान्यपि सततमनुभूयमानानि······परवरदिगारेण स्वयं संप्रेषितं युगपुपुरुषं मन्य-मानानाम् ?

इयान् आसीत् तेषां सर्वेषां चित्तोल्लासः······तज्जनितः····यत् सः······अतिक्रम्य देशमर्यादाः······समुल्लंघ्य राज्यसीमाः······अभिबभूव समस्तमेव यावनं विश्वं······प्रेरयामास च तत्रत्यान् पुरुषान्······युवकान् अथ च प्रौढान्······सधनान् अथ च निर्धनान्····साधारणान् अथ च विशिष्टान्····आगन्तुं गजनीं, अर्पयितुं च स्वां स्वां सेवां यवनाधिपाय तत्र।

इयती आसीत् तेषां सर्वेषां उत्तेजना प्रखरा······यत् सा मासाभ्यन्तरे एव······अवधीर्य सर्वं पार्थक्यं······अभिबभूव समस्तं अयावनमपि विश्वम्।

वार्त्ता हि अत्याचारस्य······भूतस्य वा भवतो वा भाविनो वा······(–न विद्मः किमिति–) प्रसरति प्रबलतरेण वेगेन···वार्त्तायाः सदाचारस्य अपेक्षया ।

अभिबभूव विशेषतः भारतीयं विश्वम् ।

परंतु–वैपरीत्येन ।

यावनं विश्वं सा पूरयामास निर्मर्यादिन उत्साहेन,······भारतीयं विषादेन ।······विषादः सः तेषां वृद्धिं इयाय शतगुणितां······विज्ञाय कर्णोपकर्णिकया यत् आगामीनि आक्रमणानि तस्य तद्देवस्थानानि लक्ष्यीकृत्य भावीनीति । प्रेरयामास च तान्······नहि संवर्द्धयितुं स्वां शक्तिं तद्रक्षणेच्छया दुर्दमनीयया, अपि तु······अपि तु······अनुरोद्धुं तत्तद्देवस्थानपूजकान् (–वस्तुतः–स्वार्थसाधनमात्रतत्परान्, प्राक्तनात् स्तरात् आचारस्य भ्रष्टान्, ······स्वदेहपूजकान् !–) आराधयितुं दैवीं शक्तिं······विस्मृत्य सनातनं सत्यं यत्–कृते दैव्याः सर्वत्र समभावायाः न विद्यते किमपि अन्तरं मध्ये आक्रमणसंरक्षयोः !

पांचनदं तु नरेशं······निर्भयस्वभावमपि स्वाभिमानधनमपि······अनुभूयासकृत् पराजयमेव यवनैः सहाऽऽयोधनेषु तदवधिकेषु भग्नप्रायमनोबलं··· संस्मृत्य वारं वारं यवनविजितान् भागान् उदीचीनान् अहर्निशं खिद्यन्तं,··· प्रयतमानं तस्यामपि मनोवस्थायां एकीकर्तुं सामर्थ्यं भारतीयानां नरेशानां निवर्तयितुं च यवनसंकटमपुनःप्रतिनिवर्तनाय···अपेक्षमाणं च तदर्थं समयं,··· तत्पूर्वमेव विज्ञाय गुप्तचरेभ्यः स्थानेश्वरं साक्षात् आगामिनः यवनाक्रमणस्य लक्ष्यं हताशं······अवतारयत् सः विषादः निम्नतमे स्तरे वैश्यवृत्तेः,······ असुसूचच्च तं संप्रेषयितुं संदेशमभूतपूर्वसदृशं सेवायां यवनसम्राजः······ प्रस्तावयन्तं समर्पणं मदोद्धतगजपंचाशिकायाः तस्मै उत्सृष्टस्थानेश्वरदूषणसंकल्पाय,······(क्रेतुं–यथार्थतः अक्रय्यमपिद्रव्येन ! ),······अर्जितुं च कृत्वा एवं यावच्चन्द्रदिवाकरस्थायिनीं अपकीर्तिम् !

कुतः हि भयातुरस्य लज्जा ?

यदा तु यवनसम्राट्······अभिनिर्याणोत्सुकः······सम्प्रार्थ्य परमेश्वरं राजधान्याः प्रमुखतमे प्रार्थनामन्दिरे सह उच्चावचैः नागरिकैः साफल्यदानाय प्रारब्धप्राये भारतीयेऽभियाने······पामरान् मिथ्याधर्मावलम्बिनः

सद्धर्मपथपथिकान् विधातुं विनाशयितुं च मिथ्याधर्मस्य प्रचारस्थानानि विशिष्यांगीकृते······राजसभायां समुपस्थितः संबोधयितुं स्वां प्रजां तज्जय-कारमुखरां प्राक् प्रस्थानात्······आकर्णयामास तं संदेशं······तदा······ अनुमाय पांचनदं······तावत्कालपर्यन्तं रक्षकमिव भारतीयसीमायाः प्रवेशं तस्य तस्मिन् विशाले देशे रूंधन्तं······हतबलं······निभृतं संतुष्टोऽपि······ अनुभूय क्षुद्रतां तस्य विनिमयद्रव्यस्य आत्मानं तेन मूढेन अपमन्यमानं (–तदपि साक्षात् तस्य राजसभायां–) मत्वा क्रोधान्धः······क्रोधकारणं तद्वास्तविकं तत्क्षणमेव निगूह्य······'कृत्वा तादृशं प्रस्तावं स पांचनदः अपामन्यत नूनं तत्समं सद्धर्मप्रसारणेच्छया परमपक्तिया पणीकृत्य प्राणान् अवधीर्य राज्यसुखानि दूरदूरतरविदेशगमनाय तत्परं'–इत्येव प्रकटतो दर्श-यितुं कृतनिश्चयः······आताम्रमुखः······धिक्चकार तीव्रैः शब्दैः··· अवलोक-यत्स्वेव राजसभायामुपस्थितेषु विविधेषु अधिकारिषु सैनिकेषु नागरिकेषु धर्मगुरुप्रतिनिधिषु च शुभ्रवस्त्रधारिषु जपमालाव्यापृतहस्तेषु······संदेशहरं भयशुष्कमुखबिलं कंपमानगात्रं भारतीयं,······आदिदेश च तंमुच्चैः कथयितुं स्वस्वामिने–'न सम्राट् महमूदः······आत्मानं परमेश्वरेण प्रेषितं तुच्छं दूतं मन्यमानः······क्रय्यः तादृशैः प्रस्तावैः–' इति ।

अलभत चापेक्षितं फलं स्वचातुर्यस्य क्षणमात्रानन्तरं······रुपेण–'खुदा सलामत रखें !······खुदा सलामत रखें !'–इत्याशीर्वचनानां······ राजसभायामुपविष्टानां अर्द्धमुद्रितैः लोचनैः सर्वां तां घटनां साक्षात्कृत-वतां, उन्नमय्य स्वौ स्वौ हस्तौ किंचित् तस्मै साधुवादं ददतां धर्मगुरुप्रति-निधीनां,······'फखरे सलातीन जिन्दबाद !······फखरे सलातीन जिन्दबाद !' –इत्यभिनंदनानां······प्रस्फुरद्बाहुदण्डानां सैनिकानामधिकारिणां,······ 'जिन्दबाद !······जिन्दबाद !' इति जयजयकाराणां च······विद्युद्वेगेन बहिः प्रसृतां तां पांचनदप्रस्तावप्रत्याख्यानवार्त्तामति-रंजितां श्रुत्वा चकि-तानां हृष्टानां पुरस्ताद्राजप्रासादस्य कृतसंमर्दानां असंख्येयानां नागरि-काणां मुखेभ्यः सहसा निर्गतानाम् ।

आध्माताहंकारः तेन······प्रतिष्ठत प्रहरमात्रानन्तरमेव (–सहसा कृत-निश्चयः······अतिक्रम्य पांचनदराजधान्यै कृतप्रस्थानं तं भारतीयं संदेशहरं ······उपगन्तुं पांचनदसीमां,······अभिभवितुं चाकस्मात् पांचनदनराधिपं

तदुत्तरप्रतीक्षाविश्रब्धं–) सह विशालया सेनया······अभिनंद्यमानः राजपथे तत्प्रस्थानमेव प्रतिपालयद्भिः नागरिकैः,·········सादरं अवलोक्यमानः उभयपार्श्ववर्तिसौधवातायनकृतसंमर्दाभिः यवनिकान्तर्हिताभिः तद्दाराभिः कौतूहलविस्फारितलोचनाभिः।·········अतिक्रम्य दीर्घदीर्घतरमपि तावता कालेन सुपरिचितं मार्गं कतिपयैरेवाह्रोभिः प्रभंजनवेगेन······प्रविवेश पांचनदराज्ये······चचाल च दिशि स्थानेश्वरदेवस्थानस्य······अलब्ध्वा लेशमात्रमपि प्रतिरोधं पांचनदस्य सेनानां प्रगुणितोत्साहः।

आकर्ण्यानिवरतं सीमाप्रदेशादागच्छद्भ्यः प्रजविदूतेभ्यः समाचारमनपेक्षितं तस्य विद्युच्चपलस्याऽऽक्रमणस्य सीमारेखायाः, प्रसरणस्य च दिशि तस्य देवस्थानस्य किंकर्तव्यताविमूढ एवाभवत् नूनं पांचनदः नरेशः ······अकालवार्धकेनाऽऽक्रम्यमाणः।······तथा च–राजकुमारः······तावता कालेन समतिक्रान्तयौवनरेखः धर्मपालः······अवस्थाय नरेशसमीपे एकीकर्तुं भारतीयान् नराधिपान् परचक्रसंकटनिवारणाय प्रयतमानः।······परंतु······ न तावान्। स एव······अविलुप्तप्रत्युत्पन्नमतिः······'प्राप्तस्य गतिश्चिंतनीया' इति न्यायमनुसृत्य······निश्चिकाय प्रेषयितुं तत्क्षणं एकमतिविश्वसनीयं चपलं दलं पंचानां सैनिकानां वार्त्ताहराणां अनेकदाऽनुभूतचातुर्याणां सेवायां हस्तिनापुरनराधिपस्य राज्ञः विजयपालस्य सूचयितुं तं विषये आकस्मिकस्याक्रमणस्य तस्य दुष्प्रतिरोध्यस्य मूर्तिभंजकस्य,······'स नूनं······तथा प्राक् संसूचितः·······पणीकृत्यापि सर्वस्वं·······यतेत रक्षणार्थं उत्तराखण्डे सुप्रसिद्धस्य तस्य देवस्थानस्य स्वराज्यसीमाभ्यन्तरावस्थितस्य'–इति आशासानः।

परंतु······अहो भवितव्यता !

सैव हि नूनमदात् आक्रामकाय यवनराजाय······स्वभावत एव दूरदृष्टये······अनागतविधात्रे······तत्रापि साक्षात्कृत्यात्मानमाक्रम्य पांचनदराज्यप्रदेश प्रविशन्तं अभ्यन्तरे साक्षात् आर्यावर्तस्य दक्षतराय······बुद्धिं प्रेषयितुं सर्वतः······अग्रे······पार्श्वयोश्च······मुख्यस्य स्वसैन्यस्य···आपाततः निरुपद्रवाणि परंतु आपतिते प्रसंगे प्राणापहारीणि······लघूनि दलानि स्वसैनिकानां भारतीयसैनिकवेषधारिणां······समादिष्टानां मध्ये एव मार्गस्य यत्र कुत्रापि आपतितानां······दृष्टमात्राणां वा······दूतानां पांचनदस्य राज्ञः

सूचनां निवेदयितुं दिशि हस्तिनापुरस्य निभृतं प्रसरताम् ।

सैव हि नूनमदर्शयत् तदन्यतमदलाय निरुद्वेगमिव स्वैरं भ्रमते······ अलक्ष्यप्रायं तद्दलं राजकुमारेण धर्मपालेन संप्रेषितानां वार्त्ताहराणां सैनिकानां ······पचेलिमसस्ये एकस्मिन् निर्जने क्षेत्रे निलीय निभृतमागमनं निशायाः प्रतिपालयतां तंद्रालसानाम् ।

सैव हि नूनं प्रैरयत् तद्दलं······अवतीर्य स्वेभ्यः अश्वेभ्यः······निभृतमुपसृत्य मार्जारपादैः······आक्रमितुं तद्दलमनवहितं····हन्तुं च तत् निरपवादम् ।

सैव चायच्छत् तद्दलाय पूर्णां सफलतां तस्मिन् छद्माक्रमणे ।

इत्थमालक्ष्य आनुकूल्यं नियतेः (–नियतिमर्थादिव सः तत्वेन नैव लेशतोऽपि अवागमत् ।······कुतो हि तस्य······शारीरिकसामर्थ्यमात्रोपासकस्य मात्स्यन्यायमात्राभिज्ञस्य ईषणाधिक्याऽऽयास्यमानमानसस्य परपीडायां यत्किंचिदपि अनुचितममन्यमानस्य प्रत्युतात्मानं महत्तमकार्यकरणार्थं परवरदिगारेण प्रेषितं लोकोत्तरं पुरुषवरं मत्वाऽऽध्मातशिरसः नियतिसदृशस्य गूढस्य दार्शनिकहृदयमात्रानुभवनीयस्य सिद्धांतस्य अवगमः ?····तथापि·····साक्षात्कृत्य स्वानुकूला घटना अविच्छिन्नया परंपरया घटमानाः सः यां कामपि शक्तिमतिमानवीं स्वानुकूलाममन्यत–इत्यत्र न संशयः !–) द्विःकृतं सुकृतं भवति इति संचिन्त्य दृढतरीचकार स्वां अभियानवार्त्ताप्रसरनिरोधव्यवस्थामविलंबमेव······चचाल च दिशि स्वलक्ष्यस्य········स्थानेश्वरतीर्थस्थानस्य······ प्राक्तनेनैव वेगेन ।

ददर्श च तद्दूरतः········अनतिचिरादेव·····सद्योदितबालरविकिरणोद्भास्यमानसूक्ष्मतमविशेषं, चकासन्मंदिरस्वर्णकलशैः दर्शयदिवान्तिमं गन्तव्यस्थानं भक्तजनेभ्यः तदेवैकं शरणीकर्तुमागच्छद्भ्यः सर्वतः, मन्दप्रातः समीरलहरीचाल्यमानपताकाभिः निवारयदिव तं तदाक्रमणदुःसाहसात्, अनवरतप्रहण्यमानपटहमुरजादिमंगलवाद्यध्वनिनिर्घोषेण कथयदिव तस्मै अज्ञाय किमपि, प्राचीनप्राचीरावृतं, अन्तःप्रविशद्बहिःनिःसरद्भक्तजनसंकुलसदापावृतमहाद्वारं, देवस्थानं निखिलार्यावर्तविख्यातं, तेन दिवाऽसकृच्चिन्तितं·····रात्रौ चानेकदा स्वप्नेषु अद्भुतेषु दृष्टम् ।

ददर्श च तत्·····निराकुलं····निरुद्विग्नं·····निश्चिन्तं···स्वं दैनंदिनं कार्यचक्रमनुसरत्,·····अपि च–नितान्तमरक्षितम् ।

दृष्ट्वा तत् ऐश्वर्यमण्डितं मंदिरनगरं······धनतृष्णाव्याकुलं मनस्तस्य नुनोद तं······समुपसर्तुं······आक्रमितुं······लुण्ठितुं च······अविलम्बमेव ।

दृष्ट्वा तत् निराकुलं निरुद्विग्नं निश्चिन्तं······अरक्षितमिव······ सहसा सावधानं चेतस्तस्य······स्मारयत् तं अनुभवस्य सुखपालसंबद्धस्य······ कथयामास तं विरन्तुं सहसा समुपसरणात्······आक्रमणात्, प्रेषयितुं स्वल्पमपि आकस्मिककपटाक्रमणप्रतिरोधक्षमं अश्वसादिबलमेकं आदौ······ आदेष्टुं तत् प्रवेष्टुं नगराभ्यन्तरे······निरीक्षितुं वास्तविकीं स्थितिं तत्रत्यां ······प्रत्यागत्य च निवेदयितुं तां तस्मै ।

क्षणमात्रं परस्परोपमर्दिविचारसंघर्षाकुलाकुला बुद्धिस्तस्य···अर्थादेव··· निश्चिकाय अनुसर्तुं उपदेशं चेतसः,······प्रेरयामास च तं कर्तुं तथा ।

अनुसृत्य तस्यास्तां प्रेरणां संप्रेषितदलस्य तत्प्रत्यागमनं प्रतिपालयतस्तस्य इयान् निर्दुष्टः आसीत् निरातुरताऽभिनयः (–अपि सर्वे एव यशस्विनः राजनेता कुशला अभिनेतारः ?–)······यत् तन्निकटतमवर्तिनः सहयोद्धारोऽपि तममन्यन्त निरातुरमेव अमन्यन्त स्वं कुशलं तदनुकरणे एव······ लुलुण्ठिषाव्याकुलान्तःकरणा अपि ।

आरभन्त च प्रतिपालयितुं प्रत्यागमनं स्वसहयोद्धृणामभ्यन्तरे नगरस्य गतानाम् ।

व्यतीयुः अथ तेषां प्रतिपालनक्षणाः···लोहपादा इव···महता कष्टेन ।

महान् आसीत् तेषां समाश्वासः समवलोक्य स्वं दलं प्रत्यागच्छत् प्रविकसितवदनम् ।······महत्तर तेषां विस्मयः निशम्य तस्मात् प्रत्यागतात् समाचारं सर्वथाऽसंनद्धस्य स्वसंरक्षणाय तस्य स्थानस्य ।······महत्तमश्च तेषां उत्साहः निरीक्ष्य स्वं नेतारं······शिरसि तेषां सेनायाः अश्वं स्वं संयमयन्तं यवमसम्राजं······अजेयं महमूदं······प्रेरयन्तं वेगेन स्वमश्वं दिशि महाद्वारस्य देवस्थानप्राकारस्य उन्नमय्य स्वं दीर्घं भल्लं······गर्जन्तं च 'दीन !······ दीन !' इति स्वरेण आवेशघर्घरेण ।

निरीक्ष्य तं तथाऽऽक्रमणप्रवृत्तं सहसा रणावेशाविष्टाः···'दीन! ···दीन!' –इत्यगर्जन् तेऽपि,······अधावन् तेऽपि ह्रेषारवमुखरतुरगाधिरूढाः······दिशि तस्यैव महाद्वारस्य उन्नमय्य स्वं स्वं रक्तसिष्णासाऽऽतुरफलकं भल्लम् ।

परंतु–भल्लस्तेषां रक्तसिष्णासाऽऽतुरफलक एवातिष्ठत्······प्रविष्टा-

नामपि प्राकारमहाद्वारेण नगराभ्यन्तरतः,······दृष्ट्वा तान् अनपेक्षितागमनान् अपरिचितवेषभूषान्, वैदेशिकानिव भासमानान् कौतूहलेन नागरिकैः पूजापात्रादिव्यापृतहस्तैः विस्मृतनामस्मरणैः संमर्दितैः अवरुद्धप्रायेण,······पिष्ट्वा तन्मध्यात् कतिपयान् विस्मयातिरेकनिश्चलान् मार्गपतितान् स्वतुरगदलखुरपातेन वज्रकठोरेणासह्याघातेन······सीमन्तिनीसीमन्तरेखासरलदीर्घे विस्तृतेऽपि जनसंकुलतयाऽन्यथेव भासमाने, उत्तुंगाट्टालिकापरंपराऽऽबद्धोभयपार्श्वे राजपथे (–देवपथे इति तु स्यात् समीचीनतरम् । देव एव हि आसीत् तस्य नगरस्य राजा !–) च अवतीर्णानाम् !

रक्तसिष्णासातुरता सा तस्याभवत् उपशमिता अन्ते–साक्षात्कृत्य नगरान्तः प्रवेशं स्वसैन्यस्य तथा सहजसिद्धं प्रहृष्टस्यापि, अवसरं तं संस्थापयितुं स्वातंकसाम्राज्यं तस्मिन् प्रमुखे देवस्थाने (–तन्माध्यमेन च समस्तेऽपि आर्यावर्ते !–) अनुकूलतमं वृथा कर्तुमनिच्छुकस्य यवनसम्राजः कर्कशामाज्ञां राजपथे तुरगसहस्रखुररवनिनादितेऽपि सुस्पष्टां यवनभाषोदीरितामपि सुलक्ष्यपरिणामां निशम्य विस्मयनिश्चलानां अथ भयाक्रान्तानां अथ च पलायमानानां पलायितुमप्यसमर्थानां (–इयान् प्रचण्डः आसीत् जनसंमर्दः !–) निरपराधानां नागरिकाणां निष्कारणमेव हनने आहनने प्रवृत्तैः यवनसैनिकैः अनवरतं साट्टहासं सगर्जनं सापशब्दं प्रयुज्यमानस्य !

इयती तीव्राऽऽसीत् तस्य भल्लफलकस्य रक्तसिष्णासा यत् सा आप्लावयामासाऽर्द्धाधिकं भागं तस्य प्रदीर्घस्य मार्गस्य कतिपयेष्वेव क्षणेषु रक्तप्रवाहेण भीषणेनानवरतं प्रवर्द्धमानेन । प्रस्थापयामास च साम्राज्यमातंकस्य समग्रेऽपि नगरे ।

अवलोक्य स्वामिच्छां आसुरीं तथा पूरितां संतुष्टः सः यवनसम्राट् निवारयामास स्वसैनिकान् प्रवेशात् आपणेषु गृहेषु च ससंभ्रममावृतद्वारेषु, आरभत च चालयितुं तान् तावत्या कालकलया निर्मक्षिकतामापन्नेनार्द्धमृतेनेव मृतेनेव मार्गेण दिशि दूरतः अस्पष्टं दृश्यमानस्य मुख्यस्य देवतायतनस्य (न वेगेन,–यथा अशकत् सः कर्तुं विनायासमेव, अपि तु (–अहो तस्याऽऽडंबरप्रियता !–) शनैः शनैः······सावधानः···क्षणमेकमप्यप्रमतः ।

संभावयंश्च प्रतिक्षणं कूटमाक्रमणं पार्श्वतः·····आदिदेश·····उपगत एव समीपे मुखस्य राजपथसंबद्धस्य प्रत्येकस्योपमार्गस्य······शताधिकान् स्व-

सैनिकान् प्रवेष्टुं व्याप्तुं च तं मार्गं तदग्रिमाऽऽदेशश्रवणपर्यन्तम् ।

एवं आतंकयन् नागरिकान्·····अवलोक्य तं भीषणं रक्तपातमादित एव भीतान्, आपाणेषु गृहेषु प्रासादेषु येषु केषुचिदपि—अकृत्वा स्वकीय-परकीयविचारं—प्रविष्टान्, प्रविश्य च तेषु द्वारेभ्यः वातायनेभ्यः किंचिद-पावृतकपाटेभ्यः तमेव निःशब्दं कंठागतप्राणमवलोकयतः,·····सकुत्सं स्मय-मान इवावलोक्य तेषां आतंकं साक्षात्कृत्य च तेषां समुपपन्ने संकटे स्वा देवता अपि उज्झित्वाऽऽत्मानं रक्षतां·····प्रविवेश प्रहरमात्रानन्तरं चत्वर-मेकमतिविस्तृतं, समुत्तुंगप्रासादपरंपरापरिवेष्टितपार्श्वभागं, समाकर्ण्य तदा-गमनवार्त्तां भयाकुलैः भक्तजनैरापणिकैः च ससंभ्रमं परित्यक्तं, शून्यशून्यम्!

ददर्श च मध्ये तस्य········एकं········धवलपाषाणखण्डविनिर्मितायां पुरुषाधिकोन्नतायां विस्तृतायां चतुरस्त्रायां लघुतमदेवतायतनचतुष्कभूषित-चतुष्कोणायां द्वादशाधिकसोपानपरंपराऽऽरोह्यायां पीठभूमौ विराजमानं····गगनचुम्बिना माध्यंदिनदिनकरकरप्रकाश्यमानेन स्वर्णकलशेन विभूषितं····निर्वातपतितेन, आकलय्य इवाऽऽगामिनीं भीषणतमां विपदं मूर्च्छितेन ध्वजेन सनाथं······दर्शनार्थमिष्टदेवताया दूरदूरतः आगतैरपि आकर्ण्य मूर्ति-भंजकस्य तस्यागमनवार्त्तां भयातुरैः, विहाय स्वां स्वां पूजासामग्रीं तत्र तत्रा-दर्शनं गतैः भक्तकदंबकैः, परित्यज्य स्तोत्रपाठं असमाप्य मंत्रघोषं विनष्टैः पूजकगणैश्च परित्यक्तं········शून्यशून्यं········प्रमुखतमं देवतायतनं तस्य नगरस्य !

दृष्ट्वा तस्य भव्यतां समुपजातविस्मयस्स तस्य मनः·····अवाञ्छतोऽपि तस्य·····आरभत तोलयितुं तत् पूजास्थानं सह प्रमुखतमेन प्रार्थनामंदिरेण स्वधर्मानुयायिभिः भव्यतमत्वेन प्रस्तूयमानस्य,·····निष्चकर्ष च तदाहो-पुरुषिकामात्रानुप्राणितमिति ।

परंतु—क्षणमात्रमेव ।

क्षणमात्रानन्तरमेव हि सः,···सहसा स्मारितः असंख्यानां लोचनानां···कृष्णानां पिंगलानां·····शोभनानां काणानां·····नवीनानां जराक्लान्तानां···कौतूहलास्फारितां भयाकुञ्चितानां·····लोचनानां भारतीयानां, निगूह्या-त्मानं गृहेषु प्रासादेषु आपणेषु देवालयेषु ततः निभृतं तमेवावलोकयतां,······जुगूहाऽऽत्मनो विस्मयं, दर्शयंश्चात्मानं चिरात् परिचितमिव तादृशैः·····

ततोऽपि भव्यतरैः······भवनैः, आदिदेश समीपमेव तस्यादेशं प्रतिपालयन्तं उच्चाधिकारिणं सैनिकानामेकं तीव्रेण, निःशब्दे तस्मिन् चत्वरे निनदता स्वरेण······श्रावयन् सर्वान्······प्रवेष्टुं तत् स्थानमविलंबं······पराजेतुं यं कमपि प्रयत्नं तत्प्रतिकारस्य······भंक्तुं निःशेषं मूर्तिकदम्बकं तत्रत्यं···संग्रहीतुं सौवर्णं······राजतं च······रत्नखचितं सर्वमपि वस्तुजातं निरपवादं···आनेतुं तद्बहिः···राशीकर्तुं तत् चत्वरे पुरतः तस्य······प्रतिपालयितुं च तस्याग्रिममादेशम्

अवतस्थौ च स्वयं तत्रैव······स्वे स्थाने एव······संमुखीने मुख्यस्य देवतायतनप्रवेशद्वारस्य,······मूर्तिवन्निश्चलः······स्वमहाप्रमाणाश्वारूढः······ अनातुरमुखमुद्रः······स्पृशन् असकृत् स्वं कज्जलकृष्णमपि प्रसह्याविर्भूतैः कतिपयैः रजतशुभ्रैः केशैः प्रौढावस्थां तस्य सूचयत् श्मश्रुपाशम् ।

अवतस्थौ मूर्तिवन्निश्चलः ।······दृष्टिस्तु तस्य······स्वभावत एव सर्वग्राहिणी पराभिभाविनी परान्तर्मर्मभेदिनी······बभ्राम चतुर्दिक्······तत्परामर्दितुं प्रतिचिकीर्षां क्षीणतमामपि तत्रात्यानां नागरिकाणां मनसि भ्रूणामवस्थायामेव ।

शशाक च मर्दने तस्याः निरपवादम्–इत्येतदेव विघ्नः ।

वास्तविकं तथ्यं तत् किं खलु व्यानक्······अभिभविष्णुतां लोकोत्तरां तस्य दृष्टेः ?······आहोस्वित् अभिभवनीयतां निम्नतमस्तरां तत्रत्यानां नागरिकाणां······इत्येतत् तु न ।

न क्षणमात्रमपि साऽन्वजानात् तत्रत्यान् नागरिकान् उत्क्षिप्तुं स्वां करांगुलिमपि···निरुद्धश्वासं विस्फारितनयनं समुच्छुष्कमुखबिलं सरोमाञ्चं सकम्पं अवलोकयतः तमुदग्रदर्शनं आधिकारिणं समाकर्ण्य स्वसम्राज आदेशं हृर्षोत्फुल्लैरपि संयमितस्वमनोभावैःसैनिकैः सह उपानद्गूढपादमेव मन्दिरान्तः प्रविष्टं,······अनुमिन्वतः तं···समाकर्ण्य तांस्तान् ध्वनीन् मन्दिराभ्यन्तरतः निर्गच्छतः······मूर्तिविध्वंसने स्वर्णभाण्डादिसंग्रहणे प्रवृत्तं,······साक्षात्कुर्वतस्तं बहिः मंदिरात् प्रेषयन्तं माध्यमेन स्वसैनिकानां विविधाः विभिन्नमुद्राः मूर्तीः······काश्चित् राजताः······काश्चित् सौवर्णाः······काश्चित् धवलपाषाणोत्कीर्णाः···काश्चित् विविधरत्नखचिताः······काश्चित् मौक्तिकालंकारालंकृताः······सर्वा अपि चिरपरिचिताः······सर्वा अपि चिरपूजिताः······

सर्वा अपि चिरवंदिता:·····सर्वा अपि प्राचीना:·····सर्वा अपि सोपहासं खण्डिता:,·····विभिन्नानि सौवर्णानि राजतानि पूजाभाण्डानि·····विविधप्रकाराणि विभिन्नप्रयोजनानि उपायनीकृतानि विविधभागेभ्य: भारतवर्षस्यागतै: भावुकै: जनै: परमया श्रद्धया·····पश्यतश्चान्ते प्रहरस्य एकस्य युगकल्पस्य स्वयं सह समस्तै: सैनिकै: परिश्रान्तैरपि प्रफुल्लवदनै: बहिरागत्य मंदिरात्·····प्रणतिपुर:सरं आदेशं सम्राज: अनुष्ठितं निवेदयन्तम् ।

न सा अन्वजानात् उदीरयितुं दु:खव्यंजकं शब्दमेकमपि तत्रत्यान् नागरिकान्·····साश्चर्यं निरीक्षमाणान् तेन क्षणमात्रानन्तरं पुरत: स्वस्वामिन: सगर्वमुपस्थापितं, तावत्कालपर्यन्तं सैनिकै: परिवृततयाऽलक्षितप्रायं, विलूनवामकूर्परमपि अनवरतप्रवहद्रुधिरधारार्द्रप्रायाधोवसनमपि वेदनाव्याकुलमपि पुरत: मूर्तिभंजकस्य साभिमानं तिष्ठन्तं, क्रोधारक्ताभ्यां विस्फारिताभ्यां नयनाभ्यां यवनराजमात्रनिगडिताभ्यां दहन्तमिव, प्रस्फुरदोष्ठसंपुटेन मुखेन नि:शब्दं शपन्तमिवात्याचारिणं, नि:शस्त्रं, अध:पतितोपवस्त्रं, विलूनयज्ञोपवीतं, यवनसम्राजा सोपहासं किंचित् कर्तुमादिश्यमानं, तं च तमोदेशमवधीरयन्तं, तत्क्षणमेव क्रोधोद्दीप्तस्य सम्राज: आदेशमनुसृत्य तत्समीपतरमुपसृतेन सैनिकेनान्यतमेन ग्रीवायां वार्धकचलायां खड्गेन 'कालीकटाक्षभीषणेन' आहन्यमानं, क्षणमात्रानन्तरमेव च पुरत: सर्वेषां 'जयतु स्थानेश्वर:' इति विस्पष्टाक्षरमुदीर्य जयजयकारं स्वेष्टदेवस्य चत्वरभूमौ निपतन्तं एकं वृद्धं ब्राह्मणं·····तस्य मंदिरस्य प्रमुखतमं पूजकं··· अधीत्य वेदशास्त्राणि श्रीविश्वनाथनगर्यां आगत्य स्थानेश्वरदेवस्थाने स्वं कर्तव्यं स्थानेश्वरपूजनस्य एकनिष्ठेन चित्तेन तत्क्षणपर्यन्तमनुतिष्ठन्तं आदरणीयं यज्ञेश्वर–शर्माणम् !

अवलोक्य स्वपूजकानां तत्रत्यानां नागरिकाणां तद्हृदयदौर्बल्यं खिन्नं इव·····भगवान् भास्कर:·····स्वयमभ्यस्त: असकृत् समुत्तरणस्य ग्रहणविपत्सागरस्य·····आरभत विनाशयितुमात्मानं निपत्य पश्चिमाम्बुनिधौ····· तावत्या कालकलया ।

अमाय तद्हृदि बहिर्निर्गच्छन् नैराश्यपूर इव च·····निशामुखतिमिरस्तोम: व्याप्तुं विश्वं चराचरम् ।

अवलोक्य तत् सहसा सावधान:,·····'एवं विजितायामपि एवं आतं-

कितायामपि परनगर्यां यापनं निशायाः अन्धतामिस्रायाः नूनं सर्वविनाशावहं स्यात्' इत्येतां संभावनां, देवलनगरीप्रविष्टहतसैन्यस्य सिन्धुराज्यविजेतुः कासीमसुतस्य मुहम्मदस्य जीवनगाथायाः असकृत् बाल्ये श्रुतायाः निष्कृष्टां, अकस्मात् स्मरन्······सः······यवनराजः, त्वरितोऽपि अत्वरित इव, तत्क्षणमादिदेश पञ्च दलानि स्वसैन्यस्य, चत्वरे तेन सह अविचलभावेन विद्यमानस्य, नेतुं बहिर्नगरात् स्थापयितुं च पुरतस्तस्य पटप्रासादस्य (–तावता कालेन सन्नद्धस्य–) सर्वाण्यपि महार्हाणि सौवर्णानि राजतानि रत्नखचितानि च वस्तूनि, अवचितानि तस्मात् पुरुषत्रयाधिकोन्नतात् राशेः लुण्ठितवस्तूनां,······अन्यानि च त्रीणि दलानि विनाशयितुमवशिष्टानि वस्तूनि······ऋते दैवयोगात् तद्दृग्पथे पतितायाः मूर्तेः चक्रधरस्वामिनः, अन्याभ्यः मूर्तिभ्यः विशिष्टायाः प्रमुखतमायाः सुंदरतमायाः शुभ्रपाषाणोत्कीर्णायाः ।

तां······स आदिदेश, श्रावयितुं सर्वान् (–विशिष्य तत्रत्यान् नागरिकान्–)तीक्ष्णतरीकृतेन स्वरेण स्वान् सैनिकान्······भंक्तुं त्रिषु भागेषु,······नेतुं तां तथा भग्नां आदौ सेनासंनिवेशं ततः राजधानीं,······निखातुं च तस्याः भागान् भूमौ प्रवेशद्वाराणां त्रयाणां नगरमहाचत्वरस्य तत्प्रासादसंमुखीनस्य······यथा तेऽहर्निशं गतागते कुर्वतां तत्रत्यानां यवनगागरिकाणां पदक्षेपैरपमन्येरन् !

तेऽपि तान् आदेशान् प्रत्यपालयन् अतीव हृष्टाः ।

सूक्तमेव–यथा स्वामी तथा भृत्याः इति ।

उपरराम तत् ताण्डवं नृत्यं दानव्याः प्रवृत्तेः······अन्ते प्रथमस्य प्रहरस्य नैशस्य ।

निष्चकर्ष सर्वमपि स्वं सैन्यं चत्वरात् यवनाधिपः, आदिदेश च तत् यापयितुं त्रियामामवशिष्टां संनिवेशे······संनद्धमाकस्मिकस्य यस्य कस्यापि छद्माक्रमणस्य विफलीकरणार्थम्······नगरमार्गस्थापितं तु तत्रैवावस्थातुं आनिशावसानं······खड्गहस्तं······विनाशयितुं (–असंभवनीयकल्पं–प्रयासं नागरिकाणां विद्रोहस्य भ्रूणावस्थायामेव ।

नूनं कालरात्रिरिव कथमपि व्यतीयाय सा रात्रिः······त्रियामाऽपि अनन्तयामा कृते तत्रत्यानां नागरिकाणां······घनान्धकारमग्नेषु यथापूर्वमेव

निलीनानाम् ।

उत्सवरात्रिरिव च······अविदितगतयामा······क्षणदा······कृते नगरान्तर्वर्तिषु स्वेषु स्वेषु निलयस्थानेषु यथाभ्यासं निलीनानां, अनवरतं निशम्यापरिचितान् ध्वनीन् भीतभीतानां, असकृत् अवघ्राय दुर्लभं वसामांसमज्जारुधिरगंधं परमरुचिरं लालास्रावकं बहिरागन्तुं व्याकुलाकुलानामपि कर्तुं तथा प्राणसंकटभयवशात् अपारयतां, अवतरिते एव चिरमितेऽधतामिस्रे स्वस्वस्थानेभ्यः संघीभूय निर्गतानां, सर्वत्र······निषिद्धतम्प्रवेशेष्वपि स्थानेषु ······यथेच्छं भ्रमतां, जातिब्राह्मणवत् अहमहमिकयाऽऽहोपुरुषिकया वसामांसादिभिः दुर्लभैरुदरं भरतां, रक्तामृतपानेन तृप्तिमपारामनुभवतां आखुविडालसारमेयादीनां ग्राम्याणां पशूनाम् !

व्यतीतायां च तस्यां······अपरेद्युः······प्रातरेव······स यवनेश्वरः······ क्षणमपि अननुभूतविश्रान्तिसुखोऽपि सुविश्रान्त इव प्रसन्नवदनकमलः······ अनपनीतयोद्धृवेषः······बहिरागत्य पटप्रासादात्······प्रादात् स्वसैनिकेभ्यः ······संततजागरणारक्तलोचनेभ्योऽपि श्रान्तेभ्योऽपि तदाज्ञानुपालनसमुत्सुकेभ्यः (–अहो प्रभावः कठोरस्य संततस्यानुशासनस्य !–)········सद्यः समाप्तिं नीते प्रमुखतममन्दिरलुण्ठनसमारोहेऽलब्ध्वाऽपि पारितोषिकं वैयक्तिकं किमपि अखिन्नेभ्यः······स्वामनुज्ञां लुण्ठितुं मंदिराणि इतराणि गृहाणि भवनानि नागरिकाणां तत्रत्यानां यथेच्छं तद्दिनावसानपर्यन्तम् ।

परमचतुरः राजनीतिज्ञः······यथार्थद्रष्टा सेनानायकश्च······सः द्वयमियेष साधयितुं प्रदाय तामेकां अनुज्ञां······दृढीकरणं घोरस्यातंकभावस्य··· सर्वत्र भारतीयजनमानसि दावानलवेगेन प्रसरतः आतंकस्य······संतर्पणं च लुलुण्ठिषायाः मनसि स्वसैनिकानां निर्धूमं परंतु संततं ज्वलन्त्याः ।

समभावयत् हि सः संवेदनक्षमः दूरदृष्टिः यत्······प्रसारिते तथाविधे घोरतमे आतंके उर्वरितेष्वपि भागेषु आर्यावर्तस्य जिह्वोपजिह्विकया मंदिरनगरं तत् स्वेष्टदेवतादर्शनाभिलाषया आगतैः तीर्थयात्रिभिः, तत् ताण्डवं नृत्यं विनाशस्य मूर्तिभंजकैः कृतस्य दृष्ट्वा स्वं स्वं प्रदेशं भयविवर्णमुखं लुण्ठितसर्वस्वं प्रतिनिवृत्तैः,······विजयस्तेषां भागानां स्यात् तस्य सैनिकानां कृते क्रीडामात्रम् ।

साक्षादकरोच्च वस्तुनिष्ठदृष्टिः–‘सैनिकास्तस्य सेनायां यत् तथा

अपूर्वेणोत्साहेन सम्मीलिता अभवन्,······विपरीतास्वपि परिस्थितिषु निरपवादेनानुशासनेन आबद्धा अतिष्ठन्,······अद्वितीयेन च शौर्येण परान् अघ्नन्······तत्······तत् सर्वं···परधनलाभेच्छया केवलया प्रेरिता एव ।······ सद्धर्मप्रसारेच्छादिकं तु तेषां···असकृत् उच्चैश्चोद्घुष्टमपि······आवरणमात्रं प्रदर्शनमात्रप्रयोजनकम्'—इति ।

यथा (—स्वीचकार सः स्वमनसि—) तस्य !

'अतर्पितायां च तस्यां सत्येव समये······ते एव······निराशाः······क्रुद्धाः ······उद्धताः······निरंकुशाः······समुल्लंघ्य तच्छासनं यथेच्छं वर्तमानाः······ तमेव······तेषां नेतारं परमेश्वरप्रेषितदूतंमन्यं···पश्यत एव समस्तस्य जगतः ······उपहसनीयतां प्रापयेयुः'—इत्यपि ।

वस्तुनिष्ठदृष्टिः सः एतदपि साक्षादकरोत् यत्—तर्पितायां तस्या······ साधारणाः जनाः······निर्दोषाः जनाः······नराश्च नार्यश्च······बालाश्च वृद्धाश्च······अपारां पीडां······अरुंतुदां वेदनां······अनुभवेयुः इति ।

परंतु—न तत् सः अकरोन्मनसि······अभूतपूर्वसदृशसाम्राज्यस्थापना-गौरवलिप्सयाऽऽविष्टः ।

तादृश्या ईषणयाऽऽविष्टः न कोऽपि चकार तत्पूर्वं······न कोऽपि चकार तदनंतरं······वा ।

नात्र च किमपि आश्चर्यम् ।

एतादृशी एव रीतिः जगतः······आसीत्······अस्ति······स्याच्च ।

कः खलु मनसि करोति अक्षावापः दुःखम् अक्षाणाम् ?

कृते महमूदसदृशानां······साधारणाः जनाः······अक्षसदृशा एव········· तुच्छाः ।

अथ च ते साधारणा जना आसन् तस्य कृते······भारतीयाः······मूर्ति-पूजकाः······पशुनिर्विशेषाः ।

किमिति वा स कुर्यात् मनसि तत् तेषाम् ?

प्रायाश्चित्तं खलु तत् तेषां······संपन्नानां अथ च स्वसंपद्रक्षणेऽसम-र्थानां······द्विरपराद्धानाम् !

कियती निर्दुष्टाऽऽसीत् सा तस्य दूरदृष्टिः—स्पष्टोबभूव तत् अवसानात् पूर्वमेव तस्य दिवसस्य ।

लब्ध्वा तस्यानुज्ञां तस्य ते सैनिकाः हि······बुभुक्षया प्रचण्डया पीड्य-मानाः श्वापदा इव मांसादना मृगवनं······नगरं तत्······आदित एवार्द्ध-मृतं······तथाऽऽचक्रमुः······तथा लुलुण्ठुः······तथा तन्निवासिनो भयमूढान् पलायितुमपि असमर्थान् जघ्नुः······तथा तद्दारान् पीडयामासुः······तथा तदर्भकान् आक्रोशमुखरान् उरसि चिच्छिदुः······यथा अचिरादेव समस्ता-र्यावर्तनिवासिनः जनाः······निशम्य वार्त्ताः तस्य लोकविलक्षणस्य हत्या-काण्डस्य कर्णोपकर्णिकया······बभूवुः आतंकिताः, अवलोकयामासुः वदन-कमलानि स्वस्वाधिपानां······व्यसनक्षामक्षामाणि, अनुबभूवुश्च शतगुणित-मातंकं अवलोक्य तानि भयग्रस्तानि······निःश्रीकाणि ।

स्वभावतः शीलोपमर्दभीताः हि अबलाः······अवलोक्य स्वान् पतीन् तद्रक्षणासमर्थान् अधिकमेव बिभ्यति !

साक्षात्कृत्य तत् साम्राज्यमातंकस्य······('अवर्णनीयम्' इत्येतेन एक-मात्रेण शब्देन वर्णनार्हम् !)······परं संतुष्टः यवनाधिपः आरभत संकल्प-यितुं आक्रमणं हस्तिनापुरस्याऽऽर्यावर्तमध्यवर्तिनः अपि तस्मिन्नेवाभियाने ।

स्वभावतः स्थिरमतेरपि, सुविनिश्चित्य सर्वप्रथमं विशिष्टं लक्ष्यं प्रत्येकस्याभियानस्य तत्र कदापि परित्यजतः, नातिवर्तिनः, अपि तस्य हृदयं आरभताभिलषितुमतिवर्तितुं लक्ष्यं तस्य विशिष्टस्याभियानस्य विजेतुं च हस्तिनापुरं······सत्येव प्रभावे तस्यातंकस्य नवीनतमे–इत्यहो प्रभावः मादकः विजयश्रियः······तत्रापि अनायासलब्धायाः ।

नातिचिरादेव परंतु निर्ममभावेन तत्याज तां अभिलाषां···आकर्षकां··· परंतु गुरुतरविपत्संभावनादूषितामिति······समाकर्ण्य नातिरुचिरं परंतु परिणामहितकरं परामर्शं स्वसेनाधिकारिणां वरिष्ठतमानां····सत्सु साधार-णेषु सैनिकेषु तन्मंदिरनगरलुण्ठनव्यग्रेषु भाविकार्यक्रमविचारार्थं तस्मिन्नेवा-ह्नि तस्य पटप्रासादे आहूतानां······सति पृष्ठभागे जयपालपुत्रसदृशे पांचनदे नरेशे भग्नमनोहृदयेऽपि पूर्णतयाऽविजिते, पराजेतुं स्वधर्मवैरिणं येन केनापि उपायेन समुत्सुके, सति च पार्श्वे वामे चंद्ररायसदृशे नराधिपे कूटाक्रमणाय योग्यतममवसरं प्रतीक्षमाणे, संकटानि प्रवेशस्यमध्यभागे विस्तीर्णस्यार्या-वर्तस्य विनम्रैरपि सुस्पष्टैः शब्दैः व्याकुर्वताम् ।

स्वभावेन परामर्शं (–विशेषतः रणनीतिविषयकं–) अन्यदीयमनपे-

क्षमाणोऽपि·····प्रदत्तमपि तं बहुधा मनस्यकुर्वाणोऽपि·····सः·····स्वयमेव संदिहानः विषये औचित्यस्य स्वसंकल्पस्य·····स्वीचकार तं स्वेच्छाविपरीतमपि ।

बह्वमन्यत च तं (—अर्थात् मनस्येव । न हि स धूर्तः कदापि प्रकटीचकार बहुमानमन्यविषयकं कदापि !—)·····समाकर्ण्य अवसाने तस्यैव दिवसस्य एकाकिनस्तस्य सेवायामुपस्थितस्य गुप्तचरस्यैकस्य पांचनदप्रदेशे स्वकार्यरतस्य मुखात् वार्त्तां संभवनीयस्य प्रयासस्य उदीचीनानां भारतीयानां नृपाणां केषांचित्·····अवरुद्धय तं निवर्तनमार्गे एव पराजेतुं कूटैराकस्मिकैः आक्रमणैर्विद्युच्चपलैः ।

समाकर्ण्य तां वार्त्तां किंचिच्चिन्ताग्रस्तोऽपि·····किंचिद्भीतोऽपि·····सः·····निगूह्य स्वां चिन्तां·····स्वां भीतिं·····अपरेद्युरेव प्रातिष्ठत स्वराजधान्यै·····प्रदर्शयन् आत्मानं निश्चिन्तं·····निर्भयम् ।

दृढं हि सः धूर्तः विशश्वास प्रभावे प्रदर्शनस्य !

•

## अष्टमः परिच्छेदः

अस्फुटं गायन् अंशं गीतिकायाः·····तस्मिन्नेवापराह्णे राजसभायां पारसीकायाः नृत्यांगनाया मुखात् श्रुतायाः,·····अवलोकयन् अधःप्रसृतायाः, क्षितिजस्पर्शिन्याः, न्यक्कृत्य वेगेन प्रसरत् तत् सांध्यं तमः स्वानन्दमहोत्सवं यथापूर्वं मन्तुं कृतनिश्चयाया इव प्रतिगृहं प्रतिमार्गं प्रतिरथ्यं प्रतिचत्वरं प्रतिप्रासादं प्रत्यापणं प्रज्ज्वाल्य दीपमालिकाः सायंसमीरचंचलशिखाः अनन्ता असंख्या दिवसमिव बलादवतारयन्त्याः, युगपत्प्रहतविविधवाद्य-कोलाहलस्य मिषेण स्वानन्दमिव तस्मै निवेदयन्त्याः, विशालायाः राज-धान्यास्तस्य शोभां·····न परिलक्षयांचकार अपगमं दिवसावशेषस्य अतिक्रमं च तदनुपदमेवागतस्य निशामुखस्य····अनवरतमद्यपानाऽऽरक्तलोचनः महार्ह-वेषः अनावृतमस्तकः यवनराजः·····सुखमासीनः आसने हंसपक्षतिमृदुले एक-स्मिन्·····वलभ्यां स्वस्य नवनिर्मितस्य गगनचुम्बिनः राजप्रासादस्य····· अस्फुटस्मितरेखोल्लसन्मुखमुद्रः ।

न परिलक्षयांचकार·····अवसानं प्रथमस्य नैशस्य प्रहरस्यापि,····· मार्जारपादं प्रविश्य परिचारकेण केनचित् कोणे वलभ्याः स्थापितस्य रत्नदीपस्य निखायां निगडितदृष्टिः,·····पश्यन् मनश्चक्षुषाऽतीतद्रष्टा मालिकां चिरस्मरणीयानां घटनानां तस्मिन् प्रथमवर्षग्रंथिदिवसे स्थानेश्वर-विजयस्य घटितानां·····तेन तस्मिन्नेव वर्षे व्ययीकृत्यांशमनल्पं धनस्य देवता-यतनात् तस्मात् लुण्ठितस्य निर्मापितस्य, समस्तेऽपि यावने विश्वेऽद्वितीय-स्य, प्रार्थनामंदिरस्य प्रार्थनासभागारेऽतिविस्तृते सह स्वाधिकारिभिः कृतया परमेश्वरप्रार्थनया प्रारब्धानां,·····तेन तस्मिन्नेव वर्षे व्ययीकृत्यांशं अर्द्धाधिकं धनस्य राजकीयात् कोषागारात् स्वात् निर्मापितस्य राजप्रासादस्यानन्य-सदृशविभवस्यातिविशाले भोजनकक्षे आयोजितेन सहभोजेन, अपराह्णवे-लायां सुधाधवलशिलाखण्डविनिर्मिते सहस्रस्तंभे रत्नखचितसौवर्णसिंहा-सनालंकृतैकपार्श्वमध्यभागे राजसभाकक्षे आहतया तस्य सामन्तानां माण्ड-

लिकानां यवनधर्मगुरुप्रतिनिधीनां च सभयाऽलंकृतमध्यानां,⋯⋯सायंसमये च तस्य प्रजाजनैः स्वयमायोजितेन दीपमहोत्सवेन सद्यःप्रचलितविविधनृत्य-गीततौर्यत्रिकसमारोहसाक्षिणा शनैः शनैरूपसंह्रीयमाणानां⋯⋯घटनानाम् !

न परिलक्षयांचकार स्वं प्रमुखतमं परिचारकं वृद्धं अहमदं निवेदयितुं तस्मै अतिपातं नियतायाः तत्सांध्यभोजनवेलायां शनैः शनैरागच्छन्तं⋯⋯ संस्मृत्यात्मानं—आत्मानमेव केवलमेकं—सर्वासामपि तासां मोदमयीनां घट-नानां मूलं कारणं प्रमुखं लक्ष्यं प्रधानमुद्गमस्थानं अहंभावाध्मातः,⋯⋯ समुत्प्रेक्ष्य आत्मानं—मूलतः अतिसाधारणनृपतनुजानधिकं—प्रविष्टकल्पं आबाल्यात् अहर्निशं ध्यातायां अपारैश्वर्यमण्डितायां तौरुष्किकपारसीक-साम्राज्यावस्थायां स्वराज्यस्य प्रहृष्टः,⋯⋯संकल्पयित्वा विभाजनं उत्तर-दायित्वस्य तत्साम्राज्यपरिवर्द्धनसंगोपनरूपस्य मध्ये द्वयोः स्वसुतयोः मसूदमुहम्मदयोः युद्धदशान्तिप्रिययोः निश्चिन्तकल्पः ।

स्मारितोऽपि च तेन निरुद्विग्नचित्तः (—उद्विजते स्म हि अन्यथा सः⋯⋯विद्वान् स्वसमयमूल्यस्य⋯⋯⋯कालातिपातेन साधारणेनापि—) कृतकृत्य इवशान्तचित्तः शनैः शनैरुदतिष्ठत् स्वासनात् चिरादधिष्ठितात्, अक्षिपत् स्निग्धां दृष्टिमेकां दिशि अधःप्रसृतायाः समुपेक्ष्य निशीथसमयं पूर्ववदेव महोत्सवमहोदधौ निमज्जनसुखमनुभवन्त्याः स्वराज्यधान्याः, अन्वसरच्च धीरगंभीरया गत्या अहमदं⋯विज्ञाय स्वस्वामिनः लंघनविचारं तस्मै शयनकक्षमार्गं प्रदर्शयन्तम् ।

प्रविश्य तं मन्दतरदीपालोकितं, अधिरुह्य तन्मध्यवर्तिनं विशालमपि कयाऽपि रमण्यानधिष्ठितं, (—न हि सः⋯⋯आ जन्मनः एकान्तप्रियः ⋯⋯⋯अभिललाष सांनिध्यं प्रियतमाया अपि समये तस्य सुषुप्तेः! —), हिमधवलमशकहरीपरिवृतप्रान्तं महार्हं चंदनपर्यंकं, निमज्य तदास्तृतायां शशिकरपुंजविनिर्मितायामिव मृदुलधवलायां शय्यायां, निमील्य नेत्रे मदर-क्ते विश्रान्तिसुखायानातुरे⋯⋯प्रायतत चिरं स्वपितुम् ।

न तु शशाक कर्तुं तथा⋯⋯आ प्रसरं प्रथमस्य प्रार्थनाऽऽमंत्रणस्वरस्य ।

अतिरेको हि सुखस्य⋯⋯दुःखस्येव⋯⋯घातकः स्वापस्य !

यदापि शशाक⋯⋯तदापि नातिचिरम् ।

अचिरादेव हि सः सहसा अबुद्धयत⋯⋯प्रोद्गच्छत्प्रस्वेदक्लिन्नवपुः

प्रस्फुरदोष्ठपुटः आबद्धमुष्टिः,······उदतिष्ठत् हठात् शय्यायाः,······प्रैरयत् लोचने स्वे आरक्ते अविश्रान्तेऽपि विलुप्तनिद्रे भयविह्वले आसमन्तादात्मनः, ······पर्यवस्थापयामास प्रयत्नेन महता क्षुब्धमिव स्वान्तःकरणं साक्षात्कृत्याऽऽत्मानं चिरपरिचितशयनकक्षाभ्यन्तरवर्तिनं········आसीनं स्वशय्यायां, ······साक्षाच्चकारात्मानं दुःस्वप्नमात्रोद्वेजितं,······विलीनभयः चिरं प्रायतत च स्मर्तुं दुःस्वप्नं तत्····तथैव निषण्णः, आकर्णयन्नपि अनाकर्णयन् प्रार्थनाऽऽमंत्रणस्वरं पूर्ववत् प्रसरन्तं, अवलोकयन्नपि समीपस्थात् वातायनात् अनवलोकयन् उद्गमस्थानं तस्य·····सर्वोच्चं शिखरं प्रार्थनामन्दिरस्य तस्य ।

सस्मार च तं सहसा ।

स्मरणक्षण एव चानुबभूवेव········आत्मानं एकस्य योद्धृवेषधरस्य युवकस्येव अभिमुखं तिष्ठन्तं,······युवकं तं अनतिविस्पष्टमुखाकृतिं समुत्क्षिप्य परशुमिव किंचित् तेन स्वयं संवर्द्धितस्य तस्य प्रियतमस्य सद्यःकृतयौवनावस्थाप्रवेशस्य अशोकस्य वृक्षस्य छेदने प्रवर्तमानं,······आत्मानं, निवारयितुं तं तथाकरणात् प्रयतमानं·····युवकं तं समुपेक्ष्य तस्य प्रयत्नं दारुणं कृत्यं तत् यथापूर्वं कुर्वन्तं,·····आत्मानं च·····क्षोभेण केवलेनाकिंचित्करेण क्षुभ्यमानम् ।

पुनरनुभूय··· तमधिकमेवोत्तेजितः, परित्यज्य शय्यां, प्रविश्य वलभीं आरभत चिन्तयितुं तस्यैव दुःस्वप्नस्य विषये·····उद्गच्छद्दिनकरकरसमुद्भास्यमाने सौवर्णे शिखरकलशे प्रार्थनामंदिरस्य निखातनयनः ।

प्रयतमानस्यैव तस्य समुपेक्षितुं सर्वं स्वसमुत्तेजितकल्पनामात्रकल्पितमिति···शनैः शनैः समुद्भवत् मनसि तस्य विश्वासः यत् स्वप्नः सः आसीत् ······सार्थकः·····अनागतसंसूचक इति ।

शनैः शनैरारभत सः विश्वसितुं यत् उपस्थितिः अशोकवृक्षस्य दुःस्वप्ने तस्मिन् निःसंदेहं समसूचयत् यत् स्वप्नः सः तद्भारतीयसाम्राज्यविषयक आसीत्·····तच्छेदनव्यापारश्च तद्विनाशनव्यञ्जक इति ।······'कस्तर्हि आसीत् सः युवकः········यः समुपेक्ष्य तं········तं तथाविक्रान्तचरितं······ अविद्यमानमिव·····दुर्व्यापारे तस्मिन् प्रवर्तितुं अधृष्णोत् ?'—व्यस्मयत स चिरम् ।·····प्रायतत च दृढं प्रत्यभिज्ञातुं तं कृतनिश्चयः विनाशयितुं तं

तादृशदुर्व्यापारप्रवर्तनात् पूर्वमेव।······प्रायतत चिरं······न परन्तु शशाक कर्तुं तथा।······अशक्नुवंश्च तं प्रत्यभिज्ञातुं तत् समवयःसु तत्प्रतिद्वंद्विषु ······प्रावर्तत सः समुत्प्रेक्षितुं तं तरुणतरवयःसु।······प्रवृत्तमात्रस्यैव तस्य मनः······(आदित एव तदपायशंकि–) तथाऽऽबबंधाऽऽत्मानं समुत्प्रेक्षया पांचनदस्य धर्मपालस्य (–तत्कल्पनानुसारं तरुणतरवयसः–)······यथा······ क्षणमात्रमपि नोदसहत समुत्प्रेक्षितुं अन्यं कमपि तरुणम्।

अहो प्रभावः भवितव्यतायाः!

तद्वशादेव तु न तदुदसहत उत्प्रेक्षितुं गृहराज्यसमीपतरवर्तिनमपि अनवरतमुपद्रवकरमपि तरुणं नेतारं······तत् स्वप्नप्रदर्शितम्।

तथाऽऽबद्धं च तत् व्यस्मयत आत्मनः अदूरदर्शितामभिलक्ष्य। कथं खलु तत्······चतुरंमन्यं······समुपेक्ष्य गजनिमीलिकया तस्य देवमूर्तिपूजकस्य देशस्य प्रवेशद्वारे एव वर्तिनमवरोधं······परिकल्प्याऽऽहोपुरुषिकया तं विनाशितप्रायं अकिंचित्करं······उदसहत मन्तुमात्मानं निखिलस्यापि तस्य देशस्य भाविनं शासकं?······उदसहत मन्तुमात्मानं अधिपतिं साम्राज्यस्य नगाधिराजोभयपार्श्वव्यापकस्य?······उदसहत मन्तुमात्मनः अभिधानं इतिहासपृष्ठेऽभूतपूर्वसदृशतौरुष्किकपारसीकसाम्राज्यप्रस्थापकपुरुषविशेषत्वेन स्वर्णाक्षरैः अलिखितमिति?

उपकृतं चात्मानं मन्यमानं नियत्या········पुरुषसिंहपक्षपातिन्या······ दर्शयित्वा त्रुटिं तस्य तस्मै सत्येव समये माध्यमेन तस्य दुःस्वप्नस्य······ प्रैरयत् तं प्रातरेव अपरेद्युः आमंत्रयितुं स्वां मंत्रिपरिषदं सह समज्यया वरिष्ठतमानां सेनाधिकारिणां······समुद्घोषयितुं च स्वं संकल्पं······अथवा निश्चयं······अभियानस्य तत्समक्षम्।

निशम्य तस्योद्घोषणां······निखिलाऽपि सा परिषत्···परं व्यस्मयत। समुदप्रैक्षत हि सा विरामं प्रातिवार्षिकयुद्धमालिकायाः।······न केवलं समुदप्रैक्षत······अपि तु–अभिललाष तं निरपवादम्। दृढं हि साऽमन्यत– अकृत्वा अशितं पक्वं अधिकभोजी मंदाग्निर्भवतीति।······दृढं हि सा(–सदा युद्धोत्सुकात् राजकुमारात् मसूदात् उद्विजमाना कोमलस्वभावेन राजकुमारेण मुहम्मदेन चातृप्ता–) अभिललाष आत्मनः स्वामिनं······विरम्य व्यापारात् प्रातिवार्षिकाणां युद्धानां कतिपयवर्षपर्यन्तं नागरिकप्रशासनवि-

धावपि दत्तचितं,⋯निःशब्दं विश्वसन्ती यद् दृष्ट्वा साक्षात् स्वजनकसमानं वीरवरं तथा प्रशासनानुरक्तं प्रवर्तेत नूनं राजकुमारः मसूदोऽपि कर्तुं तथा, ⋯उत्सहेत च कोमलस्वभावः मुहम्मदोऽपि हातुं अवलोचितं वैशिष्ट्यं स्वस्वभावस्य–इति ।

परं व्यस्मयत न केवला मंत्रिपरिषत् । अपि तु–समज्यापि सा सेनाधिकारिणाम् ।⋯शस्त्रमात्रोपजीविन्यपि प्रकृत्या युद्धप्रियाऽपि साऽभिललाष विरामं युद्धपरंपरायाः⋯निरपवादं विजयपर्यवसायिन्या अपि⋯ निरन्तरं समृद्धिकारिण्या अपि,⋯विश्वसन्ती यत् उपभुज्य फलानि कतिपयवर्षपर्यन्तमर्जितानां विजयानामवस्थाय स्वेषु स्वेषु गृहेषु नूनं संधुक्षेत युयुत्सा वीराणां तत्सैनिकानां निरतिशयमिति ।

व्यस्मयत ।⋯न तु उदसहत सूचयितुमपि स्वं विस्मयम् ।⋯ कुतस्तर्हि शब्दयितुं स्वं वैमत्यं ?

अपि तु⋯बभाज तूष्णींभावमेवाधोवदना ।

परभावनाभावनविचक्षणः तत्क्षणमनुबभूव तस्या वैमत्यं यवनसम्राट् । न तु मनसि चकार तत्⋯अंशतोऽपि ।

कः खलु दिग्विजगीषुश्चकार⋯करोति⋯करिष्यति⋯वा ?

न खलु कोऽपि ।

न मनसि चकार तत् मंत्रिपरिषदः⋯सैन्याधिकारिणां समज्यायाः, ⋯अपि तु–सामान्यानां नागरिकाणामपि⋯अवलोक्य स्वबान्धवान् रणक्षेत्रात् अक्षतशरीरं प्रत्यागतान् हृष्यतां, सामान्यानां स्वसैनिकानामपि ⋯साक्षादनुभूय बंधुजनसमागमसुखं स्वप्नेषु दिवास्वप्नेषु असकृदनुभूतचरं मोदमानानाम् ।

आरभत च–अनभिज्ञ इव तेषां सर्वेषामपि अनिच्छायाः संनाहं संकल्पितस्याभियानस्य⋯तद्भारतविजयपथकंटकायमानस्य पालराजवंशस्य समूलोन्मूलनार्थं कृताध्यवसायः ।

अहो अभिभविष्णुताऽध्यवसायिनाम् !

अवलोक्य तस्य एकलस्य तमध्यवसायं⋯सर्वेऽपि ते कतिपयेष्वेव दिवसेषु, विसस्मरः स्वं वैमत्यं, जहुः स्वमौदासीन्यं, बबंधुश्च परिकरं स्वं कर्तुं सहकार्यं तस्य नवीनतमे भारताभियाने⋯तदुत्साहानुप्राणिताः

तन्मनोरथप्रेरिताः तदावेशाष्टिाः !

एतावान् क्रमशः बभूव तेषामावेशः प्रचण्डः······यत् न केवलः प्रधानः सेनासंनिवेशः राजधानीसमीपस्थः······अपि तु उपसेनासंनिवेशा अपि, समस्ते गृहराज्ये तत्र यवनसम्राजा आदित एव कल्पिताः···भेजुः सादृश्यमचिरादेव चंचलस्य जनसागरस्य·····देशविदेशागतैः विभिन्नवयोवेषवृत्तान्तैरपि विभिन्नभाषाभाषिभिरपि विभिन्नधर्मानुयायिभिः (–आसन् मध्ये तेषां आर्यधर्मानुयायिनोऽपि–इत्यहो दुर्जेयता धनलिप्सायाः !–)अपि एकया युयुत्सया (–लुलुण्ठिषया इति तु वस्तुस्थितिः !–) अनुप्राणितैः, आहोपुरुषिकया स्वं स्वं शौर्यमतीतेषु समरप्रसंगेषु प्रकटीभूतं वर्णयद्भिः, स्वानि स्वानि आयुधानि महत्या प्रौढ्या प्रदर्शयद्भिः योद्धृभिः आकुलाकुलाः !

तं तेषामावेशं···प्रस्थानसमये राजमार्गे कृतसंमर्दैः नागरिकैः 'अल्लाहो अकबर !'–'अल्लाहो अकबर !'–इत्याद्युद्घोषमुखरैः संधुक्षितं·····अवलोक्य तुतोष स्वयं यवनसम्राट् अपि·····असुलभतोषः ।

अलभत च पारितोषिकमनुकूलतमास्वपि परिस्थितिषु क्षणमात्रमपि अप्रमाद्यन्त्याः सावधानतायाः······रूपेण एकस्यास्तद्गूढपुरुषाऽऽनीतायाः वार्त्तायाः······क्षीणबलमपि, विहाय स्वं पैतृकं राज्यं पराक्रान्तकल्पं काश्मीरराजमाश्रितमपि, सर्वान् भारतीयान् नरेशान् परप्रतिकाराय एकीकर्तुं गूढमनवरतं च प्रयतमानं, पांचनदं राजानं, समाकर्ण्य तदभियानप्रस्थानसमाचारं लोहकोष्ठाभिधं दुर्गमेकं शरणीकृतवन्तं संसूचयन्त्याः ।

बभूव च अधिक एव सावधनः ।

श्रुतं हि आसीत् तेन·····विपक्षिणां अधिपानां राज्यानां भौगोलिकसामाजिकार्थिकादिपरिस्थितीनां चारचक्षुर्भिः निरीक्षणे सदा व्यापृतेन·····अनेकदा······'यत् समस्तेष्वपि काश्मीरराज्यान्तर्वर्तिषु शैलदुर्गेषु सः लोहकोष्ठदुर्गः, सार्थकाभिधानः, उन्नततमे समीपवर्तिभ्यः शिखरेभ्यः अहंभावेनेव दूरावस्थिते हिमालयशिखरे एकस्मिन् दूरदर्शिना केनचित् काश्मीरराजपूर्वजेन·····कालपु षविलोपितनामधेयेनापि प्रशंसनीयपरिश्रमेण·····महता धैर्येण निर्मापितः·····विस्तृतप्रस्थान्तर्भावकः·····अनेकाक्षय्यनैसर्गिकजलाशयसमृद्धः·····दुराक्रमणीय आसीत्' इति ।

श्रुतमेतदपि आसीत् तेन यत् 'ततोऽपि दुराक्रमणीयः आसीत् 'महेन्द्रः'

इति सार्थकाभिधानः सर्वविधसुविधोपपन्नः अन्यः शैलदुर्गं विद्यते स्म तस्मिन् राज्ये' इति ।

'किमिति पलायनशूरः पांचनदः न शरणीचकार तमेव' ? क्षणमात्रं स व्यस्मयत श्रुत्वा तां वार्त्ताम् । न हि स व्यजानात् यत् स महेन्द्रः न केवलः दुराक्रमणीय आसीत्, अपितु–नितान्तं असंपृक्तोऽपि बाह्येन जगतीतलेन इति,···'तमाश्रितः अहं सर्वथा असमर्थ एव भविष्यामि भारतीयान् अन्यान् नरेशान् प्रोत्साहयितुं आक्रमणाय पृष्ठतः परिवृत्य मामवस्थितस्य रिपुसैन्यस्य'–मत्वा इत्थं पांचनदेन वर्जित इति च ।

श्रुत्वा परं तथा दुराक्रमणीयं शैलदुर्गं शरणीकृतवतं स बभूव सावधानः । न तु खिन्नः । प्रत्युत प्रवृद्धोत्साहः ।

विक्रान्तचरिताः (–निष्कारणपरपीडकतया दुर्जनोऽपि, अहंभावदुःसहोऽपि, स आसीत् 'विक्रान्तचरित' इति हि तथ्यम् अप्रत्याख्येयमेव······ इतिहाससाक्षिकं–) हि न तथा उत्सहन्ते समूलोन्मूलने रिपोः दुर्बलबलस्य यथा तस्य प्रवलबलस्य (–स्यान्नाम तर्हि तस्य तद्बलं बाह्योपाधिजनितम् !–)

तथा प्रवृद्धोत्साहश्च सः······स्थापयित्वा दलानि स्वबलस्य अश्वसादिप्रमुखस्य तत्र तत्र पादाक्रान्ते पांचनदराज्ये,······प्रेषयित्वा च तानि सीमावर्तिषु काश्मीरराज्यप्रदेशेषु······प्रतिचकार संभाव्यान् पार्श्वतः पृष्ठतो वा कूटाक्रमणप्रयत्नान्,······व्यावर्तयामास च दिशि तस्योदीचीनस्य लोहकोष्ठदुर्गस्य स्वं मुख्यं बलं······तावता कालेन निशम्य कर्णोपकर्णिकया दुर्गमतमदुर्गाभियानवार्त्तां किंचिन्मन्दीभूतयुयुत्सुम् ।

यथा यथा स निनाय तद्बलं (–भग्नलुलुण्ठिषं) पथा······क्रमशः संकीर्णीभूय शनैः शनैः कापथरुपमंगीकृत्यान्ते दुर्लक्ष्यप्रायेऽपथे पर्यवसितेन······ उन्नतोन्नततरप्रदेशाभिमुखेन······तथा तथा मांद्यमधिकाधिकमेवाभजत तद्बलयुयुत्सा ।

न तु तस्य ।

अभजत प्रत्युत–तैक्ष्ण्यमधिकाधिकम् ।

परंतु–अहो दुर्गमता तस्यापथस्य !······यदा हि स आरभत नेतुं तस्य तद्बलं निःशब्दं तेन,······प्रचण्डानां हिमावृतशिखराणां निश्चलानां निः-

शद्वानां, सकृत्समिवावलोकयतां क्षुद्रस्य मानवस्य स्वबांधवनिष्कारणपीडनाग्रहं, मध्ययायिना,……प्रचंडगण्डशैलसंकुलेन,……संततप्रवहत्हिमशीतलप्रबलप्रतीपमवातदुर्गमप्रवासेन,……यदा हि स आरभत नेतुं तस्य तद्बलं अनुशासनप्रभावेण (–प्राणान्तदण्डभयेन इति तु वक्तुं युक्ततरम् । कठिनेऽवसरे परित्यज्य सेनां स्वप्राणजुगुपिषया कान्दिशीकभावं भजमानान् स्वसैनिकान् प्रसह्य बन्दीकृत्य दुःसहयातनाबहुलं प्राणान्तं दण्डं अदात् हि सः–) यंत्रवत्……तमिव स्वात् अश्वात् अधः अवतीर्ण……तमिव हस्तधृततत्प्रग्रहं……अनुसरत्…तदा तदा तस्यापि सा युयुत्सा मन्देवाभवत् चिन्तया।

गूढं हि सः अचिन्तयत्–'यदि नाम प्रदेशमिमं करतलगतामलकवत् जानन् श्रृगालचतुरः अस्माकं रिपुः अकस्मादाक्रमेत सैन्यमेतत् एतदवस्थं मार्गेऽस्मिन्……तर्हि कथं खलु प्रभवेत् एतत् रक्षितुनात्मानम् ?' इति ।

दुश्चिन्तया एतयाऽहर्निशं पीड्यमानस्यापि तस्य मानसं बह्वमन्यत एव कल्पकतां दूरदर्शितां च तथा तमायासतोऽपि अज्ञातनामधेयस्यापि काश्मीरराजपूर्वजस्य तादृशेन दुर्गमतमेन मार्गेण केवलेन प्राप्ये स्थाने दुर्गं स्वं निर्मापयतः ।

स तस्य बहुमानः अभवत् शतगुणितः……अवलोक्य अन्ते तस्य क्रोशदशकमात्रदीर्घस्यापि दीर्घदीर्घतमस्येव कष्टेन महता शनैः शनैः आक्रमितस्य मार्गस्य……अकस्मात् दृष्टिपथे पतितायाः एकस्याः नातिविस्तृतायाः करतलसमायाः अधित्यकाया, एकस्मिन् प्रान्ते दुरारोहमहीध्रतटपरिरक्षितपार्श्वभागे निर्मितं, समप्रमाण–कज्जलकृष्ण–पाषाणखण्डविनिर्मितेन निर्वातायनेनात्युन्नतेन प्राकारेण परिवृततया सार्थकीकुर्वन्तं स्वं नामधेयं… दुर्गं लोहकोष्ठं…आभ्यन्तरजयस्तंभशिरसि विराजमानेन मन्दसायंसमीरान्दोलितेन अस्तं जिगमिषोः सहस्रांशोरंशुभिः तिर्यक्निपतद्भिरुद्भासितेन काश्मीरराजध्वजेन शोभायमानम् ।

अवलोक्यैव तं प्रज्वलितजिगीषः……इयेष आक्रमितुं तं तत्क्षणमेव… स्थितः शिरसि स्वसैन्यस्य……क्षणमेकं सविस्मयं दुर्गं तं चित्रोपमं अवलोकयतः तदनंतरं च 'अल्लाहो अकबर'–'अल्लाहो अकबर' इति रणगर्जनाभिरनवरताभिः गिरिकन्दराः निनादयतः ।

संययाम परन्तु तां इच्छां……प्रकृत्यैव सर्वपक्षदर्शी…क्षणमात्रानन्तरं…

कृत्वा मनसि विचारं समासन्नप्रायायाः निशायाः, अपरीक्षितप्रायायाः दुर्ग-स्थितेः, मार्गाक्रमणश्रान्तायाः स्वसेनायाः आदिदेश च तां······दृष्ट्वा तस्य निश्चयकठोरां मुखमुद्रां न्यूनीभूतोत्तेजनां······संनिवेष्टुं परिवृत्य तं दुर्ग-मभितः अविलम्बम् ।

साऽपि······अनेकयुद्धानुभवसमृद्धा···'निरुद्धय दुर्गं सर्वतः निरुच्छ्वासं, विनैव रक्तपातं, पराजिगीषते एतदन्तः विलीनं मूषकायमानं पांचनदमस्माकं स्वामी–' इति अनुमाय नियमितस्वान्ता पालयामास तदादेशं अवधीर्य वेगेनावतरत् सांध्यं तिमिरं······मूर्तिमत् दुःखमिव वास्तुदेवतायाः तस्य दुर्गस्य साक्षात्कृत्याऽऽत्मानं तथा स्वे जीवने······संवत्सरशतकद्वयादपि दीर्घ-तरे स्वे जीवने······प्रथमतः निरुद्धं निर्विण्णस्य ।

अर्पयामास पदं अचिरादेव गगनांगणे······अथ···अवलोकयितुं विशिष्य तमभूतपूर्वसदृशमवरोधमागतानां द्युसदां तेजस्विभिर्वायुयानैरिवासंख्यैः नक्षत्रैः खचिते······निशा,······तामनु च······भाग्यहीनस्य जीवने इव शून्यशून्ये··· अहः ।

अहर्निशं तत् अनुससार अन्यदहर्निशम् ।······तच्चान्यत् ।

पश्यतामेवं चानिमेषं तदद्भुतं रणं निष्क्रंदनं निःशब्दं रणस्थलीं तां परिवृत्य निश्चलमवस्थितानां दुरवगाह्यभावानां हिमगिरिशिखराणां······ अहर्निशानि यानि दध्रुः रूपं पक्षस्य······पक्षौ च मासस्य ।

दध्रुः······परंतु न शेकुः आनेतुं स्तोकमपि परिवर्तनं स्थितौ पक्षद्वयस्य, विदारयितुं वाऽऽत्मविश्वासमवरोधकस्य सावहितस्य······अविगणयतः समये समये उद्भूवतः हैमान् वात्याचक्रान् दुःसहान्, वर्षापातांश्च अन्धंकराणाम् ।

अवरोधस्य तस्य स आत्मविश्वासः अनुबभूव स्तोकं विदारणं······ मासान्तरं······निशम्य वार्त्तां, समग्रसेनासंनिवेशव्यवस्थायामधिकृतेन सेना-नायकान्यतमेन व्यवस्थानिपुणेन यासीनाख्येन एकस्मिन् निशामुखे तस्य पटप्रासादेऽधोमुखं सविषादं समुपस्थितेनानीतां, सैनिकखाद्यसामग्रीं अधो-वर्तिभ्यः समतलेभ्यः प्रांतेभ्यः समये समये आनेतुं मार्गेण पार्वतेनाऽऽदिष्टानां सैनिकदलानां मध्यात् एकस्य दलस्यानागमस्य सूचिकाम् ।

प्रायतत सः समाश्वासयितुं सेनानायकं तं (–तेन सह स्वात्मानमपि–) संप्रदर्श्य तस्मै संभावनां तस्य विशिष्टस्य दलस्य मार्गे तथा संकटबहुले

कदाचित् अनपेक्षितेन गण्डशैलपातेन विनाशितस्य,······रात्रौ वा पाताल-गभीरे गर्ते—विभ्रश्य पथः दुर्लक्ष्यप्रायात्—निपतितस्य ।

प्रयत्नः सः तस्य······मूलत एव आहार्यस्वरूपः······बभूवाधिकाधिकः दुर्बलः······प्राप च विलोपं आत्यंतिकं पक्षाभ्यन्तर एव निशम्य वार्त्ताः अन-वरतं समापतती:, सूचयतीश्च तृतीयस्य······ततः, पंचमस्य······ततश्च नव मस्य दलस्य······मार्गेणेव स्वयं जग्धस्य······अनागमनम् !

न हि नैसर्गिकी विपत् दृष्टा कदाचित् पुनः पुनरात्मानं तथाऽऽवर्त-यन्ती ।······त्रुटिर्वा ।

प्राप्त एव च तस्मिन् विलोपमात्यंतिकं······आत्मविश्वासः तस्य······विपरीततमास्वपि परिस्थितिषु अक्षय्यः, 'विपुलतमधान्यसंग्रहोऽपि निरन्तर-जलस्रोतः संपन्नोऽपि, इत्थं निरुच्छ्वासमवरुद्धः रिपुरयं पराजयं स्वं स्वी-कर्तुं बाध्यः (—स्यान्नाम द्वित्रैर्वर्षैः—) भविष्यत्येव'—इत्याकारकः···आरभत यातुं क्षयं वेगेन······प्रतिक्षणमाक्रम्यमाणः दुःशंकाभिः······'इत्थं बुभुक्षा-मुखकन्दरायां घोरदंष्ट्रायां शनैः शनैः प्रसह्य नीयमानं अस्माकं बलमेतत् (—एतावत्कालपर्यन्तमनभिज्ञं परिस्थितेः —) कियन्तं कालं यावत् शक्ष्यति रक्षितुं स्वं मनोबलम् ?···शक्तमपि···आमरणं,···कथंकारं शक्ष्यति पराजेतुं प्रत्यर्थिबलं दुर्गस्थं, अनुमाय क्षुधाक्षीणक्षीणामवस्थां एतस्य समुद्घाट्या-कस्मात् दुर्गद्वाराणि आगत्य बहिः वेगेनाऽऽक्रमणे प्रवृत्तम् ?······रक्षितुमेव आत्मानं वा तस्मात् ?—'इत्याद्याकारकाभिः ।

अगाच्च क्षयमात्यंतिकं पक्षाभ्यन्तरे एव निशम्य एकस्मिन् निशीथे घोर-तिमिरे······अकृत्वा कालाकालविचारं तत्सेवायां (—तत्पूर्वप्रदत्ताज्ञानुसारं इति तु अलिखितमपि ज्ञास्यन्त्येव भवन्तः-) उपस्थापितात् विश्वसनीयतमात् गिरिचरवेषात् संततप्रवासश्रान्तादपि तद्दर्शनसमुत्सुकात् गूढचरात् अनव्वर-खानाभिधनात् वार्तां प्रयत्नस्य ससीपतरभारतीयनृपतिसमुत्तेजनार्थं अनवरतं प्रयतमानस्य तस्य पांचनदस्य उपद्रवकरस्य राजकुमारस्य धर्मपालस्य ।

'अहो !······वंचितोऽस्मि चतुरंमन्यः······एतेन चतुरतरेण······आदित एव परिकलय्यावश्यंभाविनमेतद्दुर्गावरोधं, कृत्वाऽत्राऽऽगतं स्वं बंधुजनं विशालधान्यभण्डारसंपन्नं पर्याप्तबलसहितं स्वसंरक्षणक्षमं स्वयं बहिरव-स्थितेन,······अनुकूलं समयं यावत् स्वमात्रविदिते गूढे कस्मिंश्चित् स्थाने

निलीनेन, अवलोक्य मामेतद्दुर्गावरोधव्यग्रं च स्वपूर्वसंकल्पितयोजनानुसारं कार्यकरणप्रवृत्तेन ।'

'नूनमयं·····निःशेषं विनाशयन् मार्गे एव मम सैनिकदलानि, संकट-बहुलेन मार्गेण सह खाद्यसामग्र्याऽवरोधकसैन्यसंनिवेशमिमं उद्दिश्य आगच्छन्ति, माध्यमेन दुर्गमतमं गिरिप्रदेशमिमं करतलगतामलकवत् जानतां पार्वतवेषधराणां स्वसैनिकानां (–स्यान्नाम वनेचराणामेव स्वपक्षपातिनां शस्त्रसंपन्नानां–) इच्छति हन्तु मां ससैन्यं क्षुधाक्षामं निराशं·····अवलोक्य मम दुरवस्थां समुपजातविश्वासैः भारतीयैरन्यैः नृपैः प्रदत्तस्य तेन स्वयं संचाल्यमानस्य पार्ष्णिपीडकस्य सैन्यस्य पूर्वनिर्धारिते समये दुर्गात् बहिरा-गतस्याक्षुण्णभोजनपुष्टस्य पांचनदस्य सैन्यस्य चान्तराले·····क्रमशः विलुप्य-माने·····अन्ते च विलुप्ते·····पिष्ट्वा !'

'तदयं रणव्यूहः एतस्य पराजेयः·····सत्येव समये·····सत्येव तस्मिन् चतुरे अन्यान्यभारतीयनृपप्रोत्साहनव्यग्रे·····सत्येव च समयेऽनुकूले···सत्येव च सैन्ये मम स्वसंरक्षणक्षमे·····प्रवासक्षमे !'

'तस्य च एकमात्रः उपायः·····इतः सद्यः निवृत्तिः ।'

'इत्थं निष्फलं निवर्तमानस्य इतः, एतावत्कालपर्यन्तं सफलमेव निर्वर्तितस्य मम·····अवश्यं भविष्यति अपकीर्तिः साधारणेषु जनेषु !'

'भवतु नाम !·····किं तया ?·····बहु मंस्यन्ते तु रणपण्डिताः उपायं मम·····एतेषु मूर्तिपूजकेषु विख्यातमाभाणकं–'सर्वनाशे समुत्पन्ने अर्द्धं त्य-जति पण्डितः' इत्याकारकं स्मरन्तः' ।

'मन्यन्ताम्·····न वा मन्यन्ताम् । अहं तु करिष्ये तत्·····यत् उचितं प्रतिभाति मे समुत्पन्नासु अप्रत्याशितासु परिस्थितिषु !'

सम्प्रधार्य चेत्थं·····आदिदेश सः सर्वमपि बलं भंक्तुं तं संनिवेशं निवर्तितुं च ततः यावच्छक्यं निभृतं···यावच्छक्यं निगूह्य स्वं कार्यकलापम् ।

सैन्यमपि तस्य·····अनभिज्ञमपि संभाव्यानां संकटानां, विस्मितमपि निशम्य तमादेशं सर्वथा तस्मादनपेक्षितं, निष्क्रियतोद्विग्नं, निवर्तितुं तस्मात् रणकंदनदृष्ट्या नातिसमुपयुक्तात् स्थलात् समुत्सुकं, आरभत निवर्तितुं ततः तद्दिनावसाने एव वेगेन अवतरतः नैशस्य तिमिरस्य कज्जलनिभस्याऽऽवरणे-नाऽऽवृत्य आत्मनो व्यापारम् ।

आरभत च नेतुं तत् तन्नायकः सर्वबलपार्श्ववर्ती दुर्योधसैनिकदल-परिवृतः।

निभृतं हि स उत्प्रेक्षते सा तत प्रहारं दुर्गान्तर्वर्तिनः परबलस्य, साक्षात्कृत्य आत्मनो व्यूहमाक्रामकेन तथा विफलीक्रियमाणं कुपितस्य, समुद्घाट्य दुर्गद्वाराणि सहसा बहिरागतस्य, दुष्प्रसहेन च वेगेनाक्रमणप्रवृत्तस्य।

विपत् परंतु सा तदुत्प्रेक्षितः न प्रजहार तद्बलम्।

अपि तु—अन्यैव।······सर्वथा अनुत्प्रेक्षिता।······

आरभत हि तस्य सैन्यं तां अनुभवितुं एकस्मिन् अपराह्णे कतिपयदिवसानन्तरमेव कठिनतममार्गवर्ति······दक्षिणपार्श्ववर्तिनां गगनचुम्बिनां दुरारोहाणां पंक्तिबद्धानां पार्वतानां तटानामलक्ष्यप्रायशिखराणां शृंगेभ्यः भूकम्पचाल्यमानानामिव स्वस्वस्थानेभ्यः परिभ्रश्यतां, वेगेन उत्तरोत्तरं वर्द्धमानेनाधः सहान्यैः क्षुद्रैः पाषाणखण्डैरागत्य उपरि तस्यैव निरंतरं निपततां, गण्डशैलानां वर्षायाः अरुंतुदायाः रूपेण।

आरभत······अनुभवितुं वैक्लव्यं अननुभूतचरम्,······असमर्थं प्रतिकर्तुं तत्······असमर्थं प्रतिरोद्धुं तत्······असमर्थं रक्षितुमात्मानं तस्मात्।

आरभत च······अवलोकयितुं मुखं स्वनायकस्य······अपेक्षया,······मूकमूकयाऽपि मुखरया।

सोऽपि (—विस्मितोऽपि विचलितोऽपि कृताकारगूहनः—) तत्क्षणमेव व्यापारयामास दलमेकं स्वसैन्यस्य पर्वतारोहणे विशिष्य प्रशिक्षितं आरोढुं तान् तटान्, अन्वेष्टुं उपद्रवकरान् परसैनिकान्, वेद्धुं च तान् दूरत एव विषाक्तमुखैः बाणैः, आज्ञापयामास (—सुनिपुणं जानन् आदित एवात्मनः उपाययोजनायास्तात्कालिकमात्रप्रभावत्वं—) सैन्यं स्वं अग्रे सर्तुं अनवरतं······समुपेक्ष्य विघ्नानि तादृशानि······गृहनिवर्तनमार्गे समापतन्ति। निनाय च तत् यावच्छक्येन वेगेन······प्रतिदिनं······अनुभूयानुभूय पाषाणवर्षाप्रहारान् अधिकाधिकं क्षीयमाणमपि··तमिव··धैर्येण महता क्षतिं तां समुपेक्षमाणं।

परंतु—छिद्रेष्वनर्थाः बहुलीभवन्ति।

संप्राप्ते एव हि तस्मिन् सह स्वसैन्येन निम्नतरे मार्गभागे पार्वते समतलपांचनदप्रदेशसमीपतरवर्तिनि महारण्यमध्ययायिनि······परिचचार तमनेकदिवसपर्यन्तं घनाऽनन्ता कादम्बिनी अकालोद्भूता······उपकर्तुमिव

तद्रिपुं बद्धपरिकरा।......न केवलं परिवव्रारा—अपि तु—आरभत प्रहर्तुं तं ससैन्यमविच्छिन्नाभिः स्थूलस्थूलाभिः हिमशीतलाभिः जलधाराभिः।...... न केवलमारभत प्रहर्तुं तं, अपि तु आरभत कर्तुं तं......स्वसैन्यस्य मुखेऽवस्थाय तन्नयन्तं......कुण्ठितमतिं कृत्वा तस्य पद्यां......सर्वत्र निपतितैः पर्णैः शुष्कैरादित एव समाच्छन्नप्रायां......आदित एव दुर्लक्ष्यप्रायां......अदृश्यां जानुदघ्नेन कषायेण वर्षाजलपूरेण।

तस्यामपि दुरवस्थायां निरन्तरं प्रवसन् (—न हि शशाक सः विरन्तुं तस्मात्......प्रत्यहं क्षीणतामधिकाधिकामुपयान्त्या खाद्यसामग्रया स्वसैन्यस्य पीड्यमानः—)......असकृत् भ्रश्यन्नपि पद्यायाः गवेषयन् तां महता धैर्येण न स प्रतिपालयति स्म वर्षाविरामं दिनमेकमपि।

एवं क्रमे प्रवासेऽथ व्यतीतेषु पक्षाधिकेषु दिवसेषु......स......एकस्मिन् अपराह्णे......एवमेव भ्रष्टः पद्यायाः......आदिश्य स्वं सैन्यं उन्नततर वर्षाजलाक्रांतवनप्रदेशावस्थितं निरन्तरप्रवासकष्टक्लांतक्लान्तं बुभुक्षाम्लानम्लानं मध्याह्नभोजनादिदैनिकव्यापारव्यापृतं प्रतिपालयितुं तत्प्रत्यागमनं तत्रैव......कतिपयैरंगरक्षकैः सह तां गवेषयन्......अपश्यत् नातिदूरे एव दलमेकं......अनावृतप्रायाणां, तार्णपरिकरपिहितमध्यभागमात्राणां, धनुर्धराणां, निक्षिप्य स्वानि धनूंषि एकतः जलक्लिन्नायां वनभूमौ कंदमूलानि महता मनोयोगेन प्रज्वालिते धूमबहुले वन्हौ पचतां, अवलोक्य तं सहसा संमुखमागतं क्षणमेकं विस्मयमूढानां, क्षणेऽपरस्मिन्नेव भयाक्रान्तानां, सहसा...... परित्यज्य भोजनसामग्रीं संनद्धप्रायां...अदर्शनं यातुमुद्यतानां, वनेचराणाम्।

अनिवारयत् तत् तथाकरणात् समुत्थाप्य स्वं दक्षिणं हस्तं निःशस्त्रमभयसूचकम्।......अपृच्छत् तत्......आहार्येण स्मितेन यावच्छक्यं कुर्वन् स्वां मुखमुद्रां कोमलां......प्रलोभयन् तत् प्रसारित—खड्गमुष्टिसंघर्षकठिन—करतल—गतया पर्णान्तरालनिपतद्रविकिरणोद्भास्यमानया रत्नमालया एकया......पांचनदप्रदेशयायिनीं पद्यामधिकृत्य......कोमलेन स्वरेण।

यदा च तत्......रत्नमालाविनिगडितलोचनं....महता प्रयासेन विज्ञाय तत्पृच्छां सहसा स्मेरमुखं......व्यानक् स्वामिच्छां रत्नमालालाभशतगुणितां प्रदर्शयितुं तां तस्मै स्वयमेव,.......तदाऽवसितदुश्चिन्ताभार इव सहसा समुल्लसितमुखमुद्रः तत्क्षणमेव सह तेन रत्नमालाविभाजनव्यग्रेण संनिवेशं

प्राप्तः, समादिशत् सर्वमपि स्वसैन्यं सद्यःकृतभोजनं मुहूर्तमात्रं विश्रान्तं भक्तुं संनिवेशं अनुसर्तुं च तत् पांचनदप्रदेशस्य दिशि प्रचलितम् ।

चचाल सह तेन······निशम्य पांचनदस्य प्रदेशस्य·········गृहप्रदेशस्येव समाश्वासकस्य······नाम समुपजातोत्साहेन सैन्येन स्वेनानुगम्यमानः······तद्दिनावसानपर्यन्तं······अतिक्रामन् अदृष्टपूर्वान् कदाचित् गहनविपिनान्धकारितान् कदाचित् निर्वृक्षप्रकाशितान् कदाचित् समुन्नतपर्वतमालापरिवेष्टितान् कदाचित् करतलसमतलान् प्रदेशान् ।

अन्ते च कल्पयामास तस्य दिवसस्य स्वं संनिवेशं तटे एकस्य निस्तरंगस्य प्रतिबिंबितसांध्यमेघस्य सुदूरप्रसृतस्य सरसः······सह तेन वनेचरदलेन, स्तोकमपि अश्रान्तेन, भाषायां दुर्बोधायां तं (–स्यान्नामाधिकृत्य सामीप्यं पांचनदस्य प्रदेशस्य–) निरन्तरं समाश्वासयता ।

वभूव च कथमप्यपनीतक्षुधः······वनभूमितलकल्पितशय्य एव···अधीनः निद्रादेव्याः······अनुकंपयेव तं प्रसह्य स्वांके गृह्णन्त्याः ।

तथा बभूव तदधीनः·········यथा न किमपि अवेत्······आ निशान्तम् । ······अजागश्च सहसा·········प्रबोधितः अपरेद्युः विहाय उदयाचलशिखरं गगनांगणे प्रेङ्खितस्य बालसूर्यस्य करैः वृक्षान्तरालोपसर्पद्भिः स्पृष्टः नयनयोः ।

जागरितश्च प्रसह्य व्यापारयामास लोचने स्वे दिशि वनेचरदलस्वापस्थानस्य नातिदूरस्य ।

न तु शशाक द्रष्टुमेकमपि वनेचरं तत्र ।

'भवेयुर्नाम गताः संघीभूताः प्रातर्विध्यनुष्ठानार्थम्' इति विचार्य सकुतस्स्मिताननः क्षणमात्रानन्तरमुदतिष्ठत् आजुहूषया परिचारकस्य ।········· उत्थितस्यैव परंतु तस्य पेततुः लोचने उपरि रत्नानां······व्यतीत एवाहनि वनेचरदलप्रमुखाय तेन महत् औदार्यं (–अर्थात् आहार्यं······स्वार्थसिसाधयिषया प्रेरितं–) प्रदर्शयता प्रदत्तायाः रत्नमालायाः (तेन दलप्रमुखेन तथा) पृथक्कृतानां······सतिरस्कारं सावज्ञं परित्यक्तानामिव······अनाथानामिव वनभूमौ क्षुद्रोपलबहुलायां लोटतां·········तस्यां दुरवस्थायामपि स्वप्रभया लोचने हठात् आकर्षतां मार्गपथिकस्यान्यमनस्कस्यापि,······चक्रतुः तं तत्क्षणमेव निश्चलं विस्मृताऽऽजुहूषं अर्द्धविवृतमुखबिलं,······मेथतुस्तस्य मानसं

……'अरे! ……अरे ! ……कथं खलु ते……वनेचराः……परित्यज्य एतानि एवं अपारयन् गन्तुं अन्यत्र……प्रातर्विध्यर्थमपि ?……कियान् आसीत् खलु मोहः एतेषां विषये तेषाम्! ……दृष्टिमात्रपतितानाम् ! ……कियांश्च मोदः प्राप्य एतान् पारितोषिकरूपेण ! ………कियत्या दक्षतया व्यापृत आसीत् प्रमुखस्तेषां विभाजने एतेषामविलंबमेव……संभाषमाणोऽपि सह अस्माभिः-……दलान्तर्गतकलहप्रसंगपरिजिहीर्षुः ! ……कथं खलु तेऽपारयन्……स वा तर्हि…इत्थं परित्यज्य एतानि अत्र…गन्तुमन्यत्र?…(सवितर्कम्) अभिव्यनक्ति नूनमेषामेतादृशी समुपेक्षा………अनादरं……तिरस्कारं………मनसि तेषां वस्तुतः एषां विषये विद्यमानाम् !…… (सकुण्ठं) परंतु—अनादरः…… तिरस्कारः तेषां एतद्विषये नोपपद्यते ।……वनेचराः हि……प्रकाशमानेन वस्तुमात्रेण समाकृण्यमाणाः श्रुताः ।……(सविस्मयं) तत् किं नासन् ते वास्तविका वनेचराः ?……(सविषादं)……अपि तु……अपि तु—वनेचर-वेषधारिणः अन्ये केऽपि ।……यदि अन्ये……तर्हि के ?……के खलु विपिने-ऽस्मिन् घोरे संकटबहुले सप्रयासं धृत्वा वेषं वनेचराणां (—कियान् विश्वसनीय आसीत् स तेषां वेषः ! —)……सपरिश्रमं कृत्वाऽभिनयं वनेचराणां (—कियान् सत्यकल्प आसीत् स तेषां अभिनयः……आंगिकः वाचिकश्च! —) नयेयुः मां……परकीयं विधर्मिणं पथच्युतं……मार्गेण तन्मात्रविदितेन मदभीष्टस्य पांचनदस्य प्रदेशस्य ! ……(सविषादम्) अहो, ज्ञातम् ! (—परंतु कियता विलंबेन ! —) नासन् ते वनेचराः……परोपकारिणो वा दयाशीलाः वनौकसः………परवरदिगारेणनुकंपया प्रेषिता उपदेष्टुं मह्यं गृहगमनमार्गम्! ……अपि तु……अपि तु—शृगालचतुरेण पांचनदेन तेन मद-भीष्टात् मार्गात् भ्रंशयितुं मामधिकमेव विशिष्य संप्रेषितास्तत्सैनिकाः! ……अत एव—ते विलयं गता एवं……अवलोक्य मां सबलं प्रसुप्तमवलोक्य ……संसूच्य स्वं तिरस्कारं……स्वं विद्वेषं……मद्विषयकं……मत्प्रदत्ताया रत्नमालाया अस्या अवमाननेन ।……(सवितर्कं) यत्तु अवलोक्य मां तथा प्रसुप्तमपि……न ते दधर्षुः मां हन्तुं……तन्नूनं समुत्प्रेक्ष्य मां स्वापसमयेऽपि अनपनीतकवचम् ।……परंतु—यदि ते आसन् पांचनदस्य सैनिकाः……तर्हि-अथवा—किमेभिस्तर्कवितर्कैः ? अनुपदमेव लप्स्ये वास्तविकं उत्तरं गूढस्य एतस्य……लाभेनालाभेन वा मार्गस्य पांचनदं प्रदेशं प्रहरमात्रे नीयमानस्य ।

……(सविषण्णस्मितं) असकृत् हि प्रमुखः सः तेषां……वनेचराणां……
समाश्वासयति स्म मां व्यतीते निशामुखे–'पार्ष्णिवर्त्येवास्यात्युन्नतस्य दाक्षिणात्यस्य पर्वतस्य हिमाच्छादितशिखरस्य पांचनदः प्रदेश' इत्याकारकैः वचोभिः, प्रवर्तयामासतुश्च तं……आत्मानं निराकुलमिव निरुद्विग्नमिव निश्चिन्तमिव निराशंकमिव प्रदर्शयन्तं……नेतुं स्वं बलं दिशि तस्य पर्वतराजस्य ।

अविलंबं तथा कर्तुं प्रवृत्तः अथ आरभत सः चलितुं सह स्वेन बलेन…
समुत्प्रेक्ष्यात्मानं पांचनदान् प्रदेशान् सुपरिचितान् प्राप्तप्रायं द्विगुणितोत्साहेन……प्रवृद्धजानुदघ्नतृणाच्छन्नतया दुर्लक्ष्यप्रायेण निम्नोन्नतेन मार्गेण उपसरस्तीरं सुदूरप्रसृतेन……आशासानः संदिहानेन मनसा तं तस्य दाक्षिणस्य कालेन तावता सुलक्ष्यविशेषस्य पर्वतस्य समीपे यायिनम् ।

षट्क्रोशाधिकेन मार्गेण तेन चलित्वा, दृष्टवां तं अकस्मादेव विपरीतायां दिशि वक्रीभवन्तं भग्नाशः,……अलभमानः अन्यं कमपि मार्गं……मार्गाभासं वा……दाक्षिणात्यस्य तस्य पर्वतस्य समीपे यायिनं,……निश्चिकाय निःशब्दः……साक्षात्कृत्य आत्मानं पांसुलपादमिव प्रवंचितं साधारणैः सैनिकैः प्रत्यर्थिनः कठोरतरमुखमुद्रः……अवधीरयितुं मार्गमात्रं……प्रसर्तुं च दिशि तस्याभीष्टस्य……कालेन तावता माध्यंदिनदिनकरकरस्नातशिखरस्य हैमस्येव लोचनेऽवलोकयितुः दीपयतः……पर्वतस्य……मध्यादेव तत्र तत्र सरस्तीरसंस्पर्शिनः वनस्य निबिडस्यापि ।

कृतनिश्चयश्च……आदिदेश स्वं बलं……साक्षात्कृत्य तावता कालेन…
महत्याऽऽशयाऽनुसृतं मार्गं अनभीप्सितायां दिशि परिवर्तमानं मन्दीभूतोत्साहं……तर्पयितुं जाठरमग्निं स्वं विश्रमितुं च तत्रैव मुहूर्तमात्रम् ।……
आज्ञापयामास च कथञ्चित् अपनीतक्षुधात् विश्रान्तात् तस्मात् शताधिकान् वलिष्ठतरान् सैनिकान् (–विश्रान्तिकाले एव मनसि निर्द्धारितान्–इत्यहो तस्य क्षिप्रकारिता !–) न्यस्तुं स्वं तुरगादिकं स्वसहयोद्धरि, ग्रहीतुं शतपरशून् सैन्यभण्डारात्, गन्तुमग्रे अग्रे स्वबलस्य पश्चादागच्छतः, निर्मातुं च तस्य कृते मार्गं वेगेनाविच्छिन्नेन छित्वा वृक्षमात्रं तदुपसर्पणावरोधनक्षमम् ।

पांसुलपादानां श्रममात्रोपजीविनां कार्यं तत्……तेन समादिष्टमिति…

अविलंबं निरुद्वेगं च······प्रत्युत सोत्साहं······कर्तुं प्रवृत्तास्ते योद्धारः······शूराः शस्त्रमात्रोपजीविनः धनिनः योद्धारः······नूनं तस्य विलक्षणां सैनिक-प्रियतां व्यानञ्जुः ।

इत्थं महतोत्साहेन······महता मनोयोगेन······मध्येविपिनं निर्मीय-माणेन मार्गेण संत्रासित-बहिरागत-कुपितसरीसृपवृश्चिकादिविषजन्तुविषमेण शनैः शनैः समुद्दिश्य दाक्षिणात्यं तं पर्वतं······अनुभूयेव तन्मनोभावनाः प्रतिक्षणं विभिद्यमानाः प्रतिक्षणं विभिन्नाः द्युतीः धरन्तं······प्रतिदिनं······स्वं बलं······आखेटितमांसाहारपरिपुष्टगात्रमपि विदीर्णवस्त्रं मलिनमलिनं प्रवृद्धश्मश्रुजालं क्षाममुखमारक्तलोचनं घर्घरस्वरं वनेचरबलमिव किमपि दृश्यमानं······नयतः तस्य मनः अपीड्यत अन्ययैव दुःशंकया (—असंविभक्त-तया (—स्वभावेनैवासमर्थ आसीत् सः संविभज्य भोक्तुं स्वानि सुख-दुःखा-नि······स्वाः आशानिराशाः······स्वकीयैः सह—) दुःसहतरया—)······'अप्यस्ति सत्यमेव परस्तात् अस्य पर्वतराजस्य पांचनदः प्रदेशः ?······धारणेयं मम आधारिता तस्य प्रवंचकस्य उक्तावेव ।······यदि नाम साऽपि मिथ्या पर्यवस्येत्······तर्हि······अपि समर्थमेतत् मम बलं······सोढुं तं अपेक्षा-भंगदुःखप्रहारं दुःसहम् ?······रक्षितुं स्वं मनोबलं पूर्ववत् अक्षुण्णम् ?······प्रयतितुं च पुनरपि अन्वेष्टुं स्वगृहप्रदेशगामिनं मार्गमन्यं ?···इत्याद्याकार-कया ।

एवं पीडयित्वा तस्य मनः अहर्निशं दुःशंकयाऽनयाऽतृप्त इव······तद्-बलमधिकतरं परीचिक्षिषुरिव······विधाताऽकस्मात् प्रारभत प्रहर्तुं तस्य बलं······निशीथे प्रसुप्तं, प्रभाते सुखनिद्रामग्नं, मध्याह्ने भोजनव्यापृतं, अहः-शेषे श्रान्तश्रान्तम्······परंपरयाऽऽकस्मिकानां तडिच्चपलानामाक्रमणानां···वृक्षेभ्य इव निर्गतानां, लतागुल्मेभ्य इव प्रादुर्भूतानां, शाखाभ्य इवाधःपति-तानां, सरस इवोद्गतानां, क्षणदृष्टनष्टानां वनेचराणाम् ।

विरराम चान्ते पक्षस्यैकस्येत्थंप्रकारकैराकस्मिकैः प्रच्छन्नैः आक्रमणै राकुलाकुलस्य तृप्त इव······संतुष्ट इव······परीक्ष्य धैर्यं तस्य मनसः ।

तद्धि······अवलोक्य तानि आक्रमणानि, दुश्चिन्ताभारभुग्नेषु विनिद्रेषु अनन्तेष्विव दीर्घदीर्घतरेषु नैशप्रहरेष्वपि नैकेषु अनुत्प्रेक्षितानि, समापति-तानि, अवधूयावसादभारं (—तस्मात् प्रवंचनस्मृतिदुःसहात् दुर्दिनादारभ्य

प्रतिदिनं वर्द्धमानं, सर्वेभ्यः सुगोपितं–) अकस्मात् प्रकृतिं प्राप्तं,……लब्ध्वा ऽवसरमप्रत्याशितं आजन्मनः शिक्षितायाः युद्धकलायाः परिचयदानस्य समुत्साहापूरितं,……प्रैरयत् तं प्रदर्शयितुं,……आत्मनः सर्वोत्कृष्टं कूटयुद्ध-संचालनकौशलं तासु विपरीततमासु परिस्थितिषु,……अकरोच्च तद्बलं प्राप्य मानवं रिपुं लक्ष्यीकर्तुं स्वक्रोधस्य चिरात् दिधक्षोः सहसोत्तेजितं…… दुर्जेयं च तत्कौशलप्रदर्शनेन ।

इत्थं विफलीकृत्य सर्वाण्यपि आक्रमणानि वनेचराणां (–निःसंदेहं तेन पांचनदेन, तत्प्रवासं निरन्तरं निरीक्षमाणेन, प्रेषितानां–) प्रक्षालित-प्रवंचनाकलंक इव सोत्साहः……अथ……आरभत सः सह स्वबलेन…क्षुधा-क्षामतरेणापि क्षीणतरसंख्येनापि मलिनतरेणापि प्रसन्नहृदयेणाहोपुरुषिकया स्वं स्वं शौर्यं स्वं स्वं प्रसंगावधानं सद्यः समाप्तेषु कूटाक्रमणेषु प्रकटीभूतं वर्णयता……आरोढुं (–स हि व्यापृतोऽपि तथा विफलीकरणे तेषां कूटा-क्रमणानां न कदाचिदपि व्यरभत् स्वमार्गाक्रमणात्–) तं……चिरावलोकितं चिराभीप्सितं पर्वतं दाक्षिणात्यमज्ञातनामधेयम् ।……न श्लथयामास स्वामारोहगतिं, अवरुध्द्‌यमानोऽपि पदे पदे कालेन तावता परिचितैः नैस-र्गिकैः कृत्रिमैश्च प्रत्यवायैः भूस्खलनगण्डशैलपतनादिसदृशैः ।……

प्रत्युत वर्द्धयामास तां……प्रत्यहं प्रेर्यमाणः वेगेन तीव्रतरीभवन्त्या आशया अवलोकनस्य तच्छिखरात् उन्नततमात् अधःप्रसृतस्य दिगन्तसम-तलस्य मन्थरं प्रवहमानाभिः, निपतद्रविकिरणोद्भासितजलप्रवाहाभिः, सुरत-केलिषु भूमितलप्रक्षिप्ताभिः मौक्तिकमालाभिरिव दिव्यांगनानां मनोहारि-णीभिः नदीभिः स्थाने स्थाने अलंकृतस्य, शाद्वलस्य, (वस्तुतः परदेशान्त-र्गतस्यापि स्वदेशसमीपतरस्थस्येति कृत्वा तथा) प्रियस्य पांचनदप्रदेशस्य ।

न च विदांचकार साकल्येन……याथार्थ्येन……प्रभावं प्रहारस्य तस्या आशायाः, निराशायां हठात् परिणतायाः, अवलोक्यैकस्मिन् अपराह्णे प्रखर-तापे तस्य पर्वतस्य शिखरात् प्रवातात् दृश्यं पारेवर्तिनः प्रदेशस्य……न दिगन्तसमतलस्य, शाद्वलस्य पांचनदस्य……अपि तु……अपि तु……अनु-पमस्यापि हृदयविदारकस्य, भव्यस्यापि चित्तोद्वेजकस्य, पातालगभीरस्य क्रोशपंचकाधिकविस्तारस्य गहनहरितवृक्षपटलावृतभित्तिकस्य अनवलोकित-पूर्वसदृशस्य गह्वरस्य……नात्युन्नतपर्वतमालिकानिबद्धदक्षिणप्रान्तस्य ।

विदांचकार तु तं निशीथे······कालनेमिक्रमेणापराह्णं तं चिरस्मरणीय-मनुसृते······शिखरप्रदेशे एव नातिविस्तृतेऽपि निम्नोन्नतेऽपि दुर्लभजलेऽपि प्रवातेऽपि असंभाव्यकूटाक्रमणे कथमपि कल्पितस्वबलसंनिवेशः,···अकृत्वैवा-हारं इतरेतरसैनिकवत् भूमितलकल्पितशय्यानिपतितः, दिगन्तप्रसृतनक्षत्र-पटलविनिगडितलोचनः, अवलोकयन् सिंहवत् घटनाप्रवाहं तस्याभियानस्य··· उररीकृत्य तादृशानि भव्यानि दिवास्वप्नानि उत्साहेन महता समारब्धस्य, तत्तदकल्पितविपत्परंपरासंकुलस्य विदेशमरणदिशि च नियत्या प्रसह्य उप-संह्रीयमाणस्येव दृश्यमानस्य ।

आजुहाव च प्रत्यूषे एवापरेद्युः······जागरणात् अन्यस्माद्वा कस्मात्-चित् कारणात् आरक्तलोचनः, निगूहितमनोभावः, अपठनीयमुखमुद्रः, समस्तमपि बलं स्वं प्रबुद्धं मूकमूकयापि भावमुखरयाऽपेक्षयेव कयाचित् आनतं तस्यैवावलोकमानं, प्रार्थयितुं परमेश्वरं कृपादानमनन्तम्।······ जगाम च भूमौ जानुभ्यां स्वप्रधानतमतीर्थस्थलसंमुखः ।

अनुससार अन्यस्मिन्नेव क्षणे तदुदाहरणं समस्तमपि तद्बलं किंचिद्-विस्मयमानमपि दृष्ट्वा तं अहंमन्यं प्रार्थनाबले नातिविश्वसन्तं तथा याच-मानं कृपादानम् ।

निनाय च तत्······अन्ते प्रार्थनायाः 'अल्लाहो अकबर !' इत्युद्घोष-निनादितदशदिशं······अधः तस्मात् शिखरात् तटेन पारेवर्तिना···कुत्रचित् प्रपातकल्पेन, कुत्रचित् अतिबृहद्गण्डशैलावरुद्धेन, कुत्रचिद्वेगवन्निर्झर-प्रवाहदुरुल्लंघनीयेन, कुत्रचित् निबिडकंटकद्रुमवनदुर्गमेन, कुत्रचिदनूपोप-मेन,······कदाचिदपि कथंचिदपि केनचिदपि मानवेन अप्रतिरुद्धप्रसरः······ आशायां दक्षिणस्याम् ।

एवं वज्रोपमेन निश्चयेन नेतृत्वं कुर्वाणस्य, अभिनिविष्टस्येवाविगण-स्य नैसर्गिकाणि विघ्नानि मार्गापतितानि निरन्तरं प्रवसतः तस्य मनोगतं द्वित्रैरेव दिनैः बुबोध तद्बलम् । अनुससार च तं छायेव निष्ठयाऽ विचलितया ।

प्राप च फलं स्वनिष्ठानुरूपं पक्षाभ्यन्तरे एव रूपेण दर्शनस्य चिर-वांछितस्य स्वप्नेष्वपि अनेकदा दृष्टचरस्य समतलस्य दिगन्तप्रसृतस्य पांच-नदप्रदेशस्य ।

इयदभिभूतमभवत् तत् हर्षेण यत् न शशाक तत् अभिव्यञ्जितुं तं 'फखरे सलातीन जिंद:बाद'......'शाहे गजनी जिन्द:बाद' इत्यादिभिः जयघोषैः चिरात् खलु अनुच्चारितैः,......अवलोकया मास क्षणमेकं स्वं नेतारं संकटात् तस्मात् तत् तथा रक्षन्तं साश्रुभिः लोचनैः क्षणमात्रं,... प्रदर्शयामास स्वां कृतज्ञतां नमाजे—जयतु अधीशः गज राज्यस्य' शुक्रानाम-माध्यमेन निःशब्देन,......प्रविवेश तं तद्विजितप्रायं परिचितं प्रदेशं,...... आरभत चाक्रमितुं वलित्वा पूर्वोत्तरस्यां दिशि मार्गं गृहयायिनम् ।

शनैः शनैः मार्गे निपततींनां कासांचित् क्षुद्राणां ग्रामटिकानां निवासिभिः......पांसुलपादैः, स्वस्वकार्यव्यग्रैः, अकस्मात् दृष्टिपथे पतितं क्षुधाक्षामं जीर्णशीर्णध्वजपताकं, विनष्टप्रायाश्विकं, व्यपगतश्रीकं, निःशब्दं प्रवसत् तदवलोक्य चकितचकितैः, 'तदेवैतत् विक्रांतचरितं दुर्जयतया दिगन्तविश्रुतं यावनं बलं' इति प्रत्यभिज्ञातुमसमर्थैः,......सोपहासमिवावलोक्यमानं तदवलोक्य विचलितस्वान्तेन आवश्यकतां पुनःप्रस्थापनस्य तदातंकस्य भृशमनुभवता स्वनेत्राऽनुज्ञातं च ततःपरं मार्गे आपततां सर्वेषामपि ग्रामाणां नगराणां च निवासिनः निरपराधानपि अनपकुर्वाणानपि यथेच्छं निर्दयं लुण्ठत्, तद्धनेनात्मनः क्षतिपूर्तिं कुर्वत्, तद्गोमांसभक्षणेन स्वास्थ्यं स्वं पुनरपि प्राप्नुवत्......प्रविवेश स्वगृहराज्यसीमां मासाभ्यन्तर एव ।

प्राप चानुशासनबद्धं स्वां राजधानीं...अनधिगत्य तत्समाचारं विनष्टमेव तन्मन्यमानैः, लोकान्तरादिव कालमुखादिव निवृत्तं तत् दृष्ट्वा विस्मयहर्षादिभावनाकुलाकुलैः प्रजाजनैः राजमार्गे कृतसंमर्दैः निःशब्दमभिनंद्यमानं......पराजितं, परंतु निसर्गेण,......न मानवेन,......अथवा—न केनापि पराजितं......यतो हि अविनष्टयुयुत्सम् !

●

## नवमः परिच्छेदः

'शहंशाह ! '—'राजाधिराज! सहसा बभञ्ज तदा अनतिप्रगाढां यवन-सम्राजः······विश्राम्यतः महार्हे सुधाधवल-मशकहरी-पर्यावृते जवनिकाति-रोहितमहाप्रमाणवातायनप्रविशत्सूर्यप्रकाशोद्भासितविशालशयनकक्षमध्य-स्थिते चन्दनपर्यंके,······निमील्य नेत्रे एकदेशेन चित्तस्य घटनाः युगान्तरे इव पुरुषान्तरेणेवांगीकृतस्य तादृशे भंगे पर्यवसितस्य काश्मीराभियानस्य व्युत्क्रमं पर्यालोचयतः,······अन्येन प्रमुखतमात् प्रार्थनामंदिरात् विनिःसृत्य प्रशान्ते वातावरणे सर्वत्र प्रसरतीः प्रातःप्रार्थनास्वरलहरीराकर्णयतः,······अन्येन तीव्रात् दीर्घदीर्घात् कफज्वरात् सद्योमुक्तेः सुखमननुभूतचरमद्भुतमनु-भवतः,···ततोऽपि अन्येनानिच्छुकेनापि बलात् केनचित् प्रवर्तितेनेवानागतस्य विषये क्षणमात्रं चिन्तयतः,······बहुमूल्यसुखदस्पर्शलोमशास्तरावृतक्षीण-क्षीणकायस्य,······क्षामवदनस्य,······प्रोन्नततरनासिकस्य,······किंचिद्वलित-भालप्रदेशस्य,······रजतधवलकेशलाञ्छितश्मश्रुपाशस्य,······उच्छूनकपोला-स्थियुगलेन स्वां सद्योमुक्तिं रोगात् क्षेत्रियकल्पात् विस्पष्टं सूचयतः,······संबोधनशब्दः अस्पष्टास्पष्टः, लोकान्तरादिवागतः, अपार्थिवेनेव केनचित् शरीरिणा समुच्चारितः, सादरः, सानुकम्पः, स्नेहार्द्रः भीतभीतः······कस्य-चित् चिरपरिचितस्यापि अपरिचितस्येव भासमानस्य ।

'कोऽयं धृष्णोति जाल्मः········अनाहूत एवागतः······अननुज्ञात एव उपस्थितः अस्मत्समक्षं ?'—क्षणमात्रं जज्वाल तस्य चित्ते, प्रसह्य वर्तमानेन कालेनातीतात् कालात् समाकृष्टे······क्रोधस्तीव्रः,······प्रेरयामास तं समुद-घाटयितुं किंचित् स्वे लोचने आरक्तरेखांकिते,······उपशशाम चापरस्मिन्नेव क्षणेऽवलोक्य स्वसमक्षं उपस्थितामाकृतिं आदरप्रह्वस्याऽऽबद्धकरसंपुटस्य भूमितलनिखातनयस्य युद्धनिष्णातस्य अथ च विवेकशीलस्य वयसाऽनति-प्रौढस्यापि प्रौढतरान् अन्यान् सेनानायकान् अतिशयानयस्य तत् तौरुष्कि-कपारसीकसाम्राज्यस्वप्नसहभागिनः तद्विश्वासास्पदस्य (—यदि नामासीत्

कश्चित् तद्विश्वासास्पदम् ! –)स्वसेनानायकान्यतमस्य अफ्जल्खानस्य··· तेन स्वयं आहूतस्यातीते निशामुखे माध्यमेन प्रधानामात्यस्य शुश्रूषया वार्त्तानां सैनिकीनां स्वदेशपरदेशसंबंधिनीनाम् ।

श्रुत्वा च ताः संभाषणप्रवाहे क्रमश आगताः तस्मात्·····तेन उन्नमय्य स्वं कृशं दक्षिणहस्तं कर्तुमासनपरिग्रहं सस्मितं निःशब्दं समादिष्टात्, सविनयं तथापि महार्हविचित्रास्तरणास्तृतायां भूमावेव समुपविष्टात्, दृष्ट्वा बहोः कालादनन्तरं स्वं स्वामिनं हृष्टादपि अवलोक्य तं तथा क्षामक्षाममस्थिपञ्जरमात्रावशिष्टं खिन्नात्, 'इयान् खलु भारश्चिन्तायाः·····कदाचिदपि कस्मैचिदपि अप्रदर्शितायाः·····वोढः स्वामिना अनेन एकलेन मम विगते काश्मीराभियाने,···व्यपगते एव यस्मिन् इत्थं बभूवायं लक्ष्यः अस्य रोगस्य!' इति साक्षात्कृत्य विस्मितात्, 'अहो दयालुता परमेश्वरस्य एतं रोगदंष्ट्रायाः मोचयतः !' इति कृपां परमात्मनः भृशं निभृतं च बहु मानयतः, 'मुक्तोऽपि एवं रागात् किं लभेतायं आरोग्यं सामर्थ्यं च पौर्वकालिकं' ? इति क्षणमात्रं संदिहानात्, ,लभेत एव निःसंदेहम् ।········विलक्षणं हि अस्य मनोबलम्'– इतिक्षणमात्रानन्तरं आत्मानं सान्त्वयतः,·····वार्त्ताः स्वदेशपरदेशसंबंधिनीः स्वामिनं कथयितुं समुत्सुकादपि मनसि कृत्वा सूचनां राजवैद्यस्य (कक्षान्तरे एवौषधोपचारं शारीरिकबलप्रदं विचारयतः–) आत्मनस्तत् औत्सुक्यं निगृह्णतः,·····केवला महत्वपूर्णा एव (–ता अपि यथासंभवं न्यूनीकृत्यैव तासां गाम्भीर्य–) निवेदयतः·····विलयमात्यंतिकं जगाम प्रहरमात्र एव ··· प्रसह्य समुत्सार्यमाणः आवेशेन, रुग्णावस्थायां विलुप्तप्रायेण ।

श्रुत्वा हि वार्त्तां स्वबलस्य·····तथाऽनुभूय पराजयं (–पराजयो हि निसर्गकृतोऽपि पराजय एव–) गृहं स्वं प्रत्यागतस्य,····अचिरादेव विस्मृत्य पराजयग्लानिं, पुनरवाप्य स्वं स्वास्थ्यं–दैहिकं मानसं च–प्रमार्जयितुं तं पराजयकलंकं समुत्सुकस्य,········निशिम्य दावनलवत् देशविदेशेषु प्रसृतं समाचारं तस्य गभीरस्य रोगस्य चिन्ताक्रान्तस्य,···तद्रोगमुक्तये परमेश्वरं स्मरतः,·····संतुष्टमपि तस्य हृदयं बभूवाऽऽविष्टं आवेशेन तीव्रेण श्रुत्वाऽपरां तां भारतीयनृपसंबद्धाम् ।

कस्य हि तेजस्विनः न भवेत् तथा हृदयं·····श्रुत्वा वार्त्तां स्वशत्रोः अनेकदा पददलितस्य, कर्तुं रणे सांमुख्यमधृष्णुवतः, दैववशात् एकदा–एक-

दैव–पराजितं तं विज्ञाय सोपहासं सकुत्सं हसतः ?

आविष्टश्च तेनाऽऽवेशेन (–तत् परिचितेन, तदुत्तंभकेन, तत्सुखदेन–), विचारमग्नः नावेत् तं अफ्ज़ल्खानं·····एवं लब्ध्वाऽप्रत्याशितं दुर्लभतमम-वसरं संभाषणस्य तेन सह धन्यंमन्यं,·········मुहुः मुहुः प्रणम्य तं, मुहुः मुहुः संप्रदर्श्य स्वं विश्वासं सद्यःस्वास्थ्यलाभे तस्य, प्रहरमात्रानन्तरं सादरं तत्पुरतः अवनतोत्तमांगमपसृतं,······राजवैद्यं वा······दृष्ट्वा तदनुज्ञातं संभाषणं तथा चिरायमाणमातुरीभवन्तं,···आगत्य कक्षद्वारे एव तदवसानं प्रतीक्षमाणं ······अपसृते एव तत आगन्तुके सस्मितं शय्यासमीपमागतं,······परीक्ष्य तत् स्वास्थ्यमवलोक्य तद्हृदयस्योत्तेजितामवस्थां सहसा चिन्ताक्रान्तं,······उन्नमय्य जयमालाधरौ स्वहस्तौ संप्रार्थ्य परमेश्वरं साफल्यप्रदानाय कृत्वा नवीनतरामौषधयोजनां शनैः शनैःकक्षात् तस्य विनिर्गतम् ।

के खल्वासन् ते विचाराः······आवेशेन तेनानुप्राणिताः, येषु कतिपय-दिनपर्यन्तं मग्नः सः नावेत् आत्मानं' अवधूय स्मृतिभारमतीतस्य पराजय-दुःखदुःसहस्य चेतसा लुब्धोपलब्धोत्साहसम्पदाऽनागते भव्यमनोरथमनोरमे विहरन्तं, अविगणय्य निर्देशोपनिषदं राजवैद्यस्याऽऽहारादि यथापूर्वमनु-तिष्ठन्तं, अथ च पश्यत एवोद्बाहुदण्डस्य उद्भ्रांतप्रायमस्तिष्कस्य पुनरा-क्रमणं रोगस्य प्रतिक्षणमुत्प्रेक्षमाणस्य राजवैद्यस्य आरोग्यं शारीरिकमथ च मानसिकं······पौर्वकालिकं, अथवा तत्कल्पं, वेगेन प्रतिदिनं लभमानम् ?

ते खल्वासन् शनैः शनैः मूर्तं रूपं धरतस्तस्य तौरुष्किकपारसीकसाम्रा-ज्यस्य विस्तारेण तीव्रतरेण संबद्धाः ।

नहि सः क्षणमेकमपि, कठिनतमायामपि तंद्रिलायां तीव्रज्वरावस्थाया-मपि, घोरतमायां नैराश्यान्धकारितायां मनोवस्थायामपि अजहात् मनोरथं तं स्वम् ।······नापि साम्राज्यस्य तस्याधिकतरो भूभागः भविता भारत-वर्षीयः–इति प्रत्ययमपि ।·········दृढं हि स अवेत् यत् विना तं साम्राज्यं तस्य हिमालयमर्यादितदक्षिणसीमं दिक्षु तदितरासु सूदूरप्रसृतमपि न भवेत् संपन्नम् । भवेत प्रत्युत दुरुच्छेद्येन द्रारिद्र्येण पीडितम् । (अधिकतरो हि भागस्तस्य भवेत् हिमदुर्दिनपीडितः अनुर्वरभूप्रदेशः हिमसंहतिदुर्गमः निर्जनः मरुस्थलसदृशः ।)अथ च दुर्बलम् इति । न हि स शशाक कल्पयितुं साम्राज्यं दरिद्रं·····अथ च सबलम् ।······'स्थापयितुं साम्राज्यं तौरुष्किकपारसीकं

प्रयतमानः सः, तथाविधे दरिद्रे दुर्बले साम्राज्ये परिणतप्रयत्नः, न खलु न भवेत् प्रशंसनीयः महारम्भः दृष्टौ भाविनां इतिहासलेखकानां, भवेत् प्रत्युत उपहसनीयः'–निःसंदेहं समुत्प्रैक्षत सः। 'कथं खलु ते सर्वतोदृष्टयः न पश्येयुस्तं अन्तर्भावयितुं भारतीयं भूप्रदेशं, धनधान्यसंपन्नं तृणदुर्बलैः भारतीयैः शासकैः शासितं, स्वे साम्राज्ये कृतप्रयत्नं, सभारत्नैः फिरदौसीसदृशैः महाकविभिस्तथा प्रोत्साहितं, अनुभूय सकृदेव पराजयं (–तमपि निसर्गकृतं–) भीतभीतं, प्रयत्नात् च तस्मात् विरतम् ?'–अतर्कयत् सः स्वात्मगतमेव।

'न हि······न हि······स अनुज्ञास्यति तान् तथोपहसितुं तं, लिखितुं च तस्य······महमूदस्य······नाम इतिहासपृष्ठेषु कज्जलकृष्णैरक्षरैः······'अनुकूलतमास्वपि परिस्थितिषु स्वसद्धर्मप्रचारसदृशात् पवित्रात् कर्तव्यात् परावृत्तः एको भीरुः शासकः' इति तमुपवर्णयद्भिः–निश्चिकाय स निःशब्दम्।

कृत्वा चैवं निश्चयं······प्रायतत एकाग्रेण चेतसा ताटस्थ्यनिष्पक्षेण मनसा कारणमन्वेष्टुं पराजयस्यात्मनः काश्मीराभियाने।

प्रयत्यापि चिरं परंतु नालभत किमपि कारणं······ऋते भूप्रदेशवैशिष्ट्यात् सर्वथा परपक्षानुकूलात्।

'तच्च वैशिष्ट्यं······नैसर्गिकं········चिरस्थायि'–आरभत विचारयितुं सः, परित्यज्य रुग्णशय्याम् एकस्मिन् निशीथे स्वशयनकक्षवलभीं प्रविष्टः, प्रविश्य च तस्यां······अधोदृश्यमानायाः दिगन्तप्रसृतायाः सुखप्रसुप्तायाः चित्रलिखिताया इव हृद्यायाः स्वराजधानेः अन्यमनस्कतयाऽवलोकने व्यापृतः, ······'कथं नाम प्रतिकर्तव्यम् ? ······अथवा······किं न प्रतिकर्तव्यम्,······ अपि तु–उपेक्षणीयम् ?······तथा उपेक्षणीयं····अर्थात् यथा न भवेत् अस्मदपकारक्षमम् ?······तच्च शक्यं कर्तुं तथा······स्नेहसंबंधमाध्यमेन एव।··· अतः आदौ तावद्वशीकरणीयः सः काश्मीरनरेशः (–आदित एव संघर्षभीरुः–) प्रसार्य स्नेहहस्तम्।····तेन वशीकृते तस्मिन् संपूर्णस्तद्राज्यप्रदेशः ······लोहकोष्ठसदृशानेकदुर्गमशैलदुर्गदुर्गमः···अनायासमेवेयात् ताटस्थ्यभावं, बहिष्कुर्यात् तं पांचनदमार्दितं एवानिष्टं परंतु 'शरणागत' इति कृत्वा मनसि प्रदत्ताश्रयम्।······बहिष्कृते च तस्मिन्······अनुजानीयात् नः (–अर्थादेव कृतपर्याप्तप्रगूढपार्श्वरक्षोपायान्–) प्रवेष्टुं हृदयप्रदेशमार्यावर्तस्य········

समतिक्रम्य वेगेनानेतृकं दिङ्मूढं पांचनदं प्रदेशं विजितकल्पम्······अनायासेनैव'।

'परंतु······स्नेहहस्तः······सबलेन प्रसारित एव······मीमांस्यते।······तत्······आदौ तावत्······अस्माभिः······परित्यज्य शैथिल्यं, विजित्य चेतोविषादमननुभूतचरपराभवानुभूतिसमुद्भूतं विस्मृत्यातीतं अनागतमेव साफल्यस्वप्नसुंदरं ध्यायद्भिः······बलं स्वं······प्रोज्झितुं स्वं पराजयकलंकमरुंतुदं समुत्सुकं······यथापूर्वं प्रबलबलं······ततोऽपि वाऽधिकतरबलं······कर्तुं बन्धनीयः परिकरः······करणीयश्च प्रयत्नः'।

'बध्नतैव च परिकरं, कुर्वतैव च प्रयत्नं······अभिभवनीयः स्वः प्रदेशः······अथ च परकीयः······विशेषतः सः मूर्तिपूजकः देशः अविच्छिन्नेन प्रबलेन प्रचारेण वार्त्तानां······एतावत्कालपर्यन्तं–अनिच्छतामेवास्माकं–स्वतः प्रसृताः अस्मदस्वास्थ्यसंबद्धाः वार्त्ताः समूलमुन्मूलयन्तीनां······जिगीषां चास्माकं, युयुत्सां बलस्यास्माकं······सातिशयोक्तिं वर्णयन्तीनाम्।

एवमभिभूतो हि स्वः प्रदेशः······प्रसह्योत्तारितः विषादपंकात्······पुनरुज्जीविताशः······भवेदातुरः दातुं स्वं सहकारम् आगामिनि अभियाने। ······परकीयश्च······हठान्निपातितः आतंककर्दमे······विलुप्ताशः······रक्षितुमात्मानं आगामिनः अभियानात् येन केनापि उपायेन······सूक्तेनासूक्तेन वा।'

'विशेषतः······सः मूर्तिपूजकः देशः।'

'देशिकाः हि तत्रत्याः (सकुत्सस्मितं)······प्रकृत्या चंचलाः······अस्थिराः······क्षुद्रेणैव निमित्तेन आशाशिखरिशिखरं आरोहन्तः······क्षुद्रेणैव च निमित्तान्तरेण निराशागहनगह्वरे निपतन्तः······आकर्ण्य कर्णोपकर्णिकयाऽस्माकं पराजयस्य विषादस्यास्वास्थ्यस्य च वार्त्ताः आत्मानं अस्मद्ग्रासात् विमुक्तप्रायं मन्यमानाः······स्वं स्वं तृणक्षुद्रं जीवनं यथापूर्वं यापयितुं प्रवृत्तकल्पाः······अकस्मात् अभियानसंकल्पसमाचारं नवीनमस्माकं निशम्य तथा हतबला भवेयुः······यथा अंगीकृत्य तृणनीतिं आत्मरक्षायैव आतुरा भवेयुः।'

विचारयित्वैवं सः अपरेद्युरेवाजुहाव स्वान् अमात्यान् सेनाध्यक्षांश्च प्रातः,······उद्घोषयामास च स्वं संकल्पम्।

ते तु······संप्राप्य तदाह्वानं (······चिरात् प्राप्तं।······प्रधानामात्य

एव हि शशाक द्रष्टुं तं रुग्णावस्थायां ।······सोऽपि राजवैद्यानुमत एव ।···)
द्रष्टुं तं समुत्सुकाः,······तं क्षामवदनं श्रान्तश्रान्तं शय्यासुखमनुत्सुकं पुनर्वोढुं शासनभारं(—तावत्कालपर्यन्तं प्रधानामात्येनैव वोढं—)कल्पयन्तः,······यदा तं साक्षाच्चक्रुस्तस्य शयनकक्षे······न शय्यासखं, अपि तु महार्हे सुखासने समुपविश्यावलोयन्तं दृश्यं प्रातःसूर्यप्रकाशस्नातायाः स्वराजधानेः, क्षामवदनमपि अश्रान्तं, न केवलमुत्सुकं पुनर्वोढुं शासनभारं अपि तु आतुरमंगीकर्तुमभियान्तरं—तदपि तमेव मूर्तिपूजकं देशमभिलक्ष्य······तदा (—नात्रातिशयोक्तेर्लेशोऽपि—) क्षणमात्रं विस्मिताः······मूकाः अपरस्मिन्नेव क्षणे परमेश्वरकृपां बहु मानयन्तः (—कुतो हि विना तेन नेतृत्वं कुर्वाणेनावसरस्तेषामर्जनस्य धनराशेः······विना परिश्रमम् ?—),···आदरप्रह्वया दृष्टया तं सभाजयन्तः,······तथा बभूवुः यथा विसस्मरुः तं सद्यः रोगमुक्तं,······ सहर्षमंगीचक्रुश्च कर्तुं तत्सहकार्यम् ।

या कथा मंत्रिपरिषदः······सेनापतिसमज्याया वा······सैव तस्य सेनाया अपि······तस्य जनताया अपि ।

तदुत्साहोत्साहिता सा मंत्रिपरिषद्, सा समज्या, सा जनता, सा सेना··· अथ······तथा प्रावर्तत कर्तुं संनहनं स्वे स्वे कार्यक्षेत्रे······यथाऽचिरादेव वार्तास्तत्संबंधिनीः आरभन्त प्लाययितुं न केवलं जगत् तद्धर्माक्रान्तं······ न केवलं प्रतिक्षणं तद्भयभीतभीतं श्वसन्तं भारतदेशम्······अपि तु—सुदूरवर्तिनं चीनदेशमपि ।

वार्ताः हि आक्रमणस्य तदिच्छया बलसंनह्नस्य वाः······जुगुप्सिषिता अपि प्रसरन्त्येव प्रसह्य चतुर्दिशम् ।

काः पुनः······सहेतुकं······सप्रयोजनं······प्रेरिताः ?

प्लावितास्ताभिः ते सर्वेऽपि आरभन्त कंपितुं भयेन ।

विशेषतः—भारतदेशः······असकृदनुभूय तत्सैन्यप्रहारान् विह्वलः ।

किमाश्चर्यं तर्हि—प्राप्य स्नेहसंबंधप्रस्तावकं अलंकृतभाषानिबद्धं संदेशं तस्मात् माध्यमेन यवनदूतस्योच्चाधिकारसंपन्नस्य सविनयं तत्सेवायामुपस्थितस्य······क्षणमात्रं न विशश्वास स्वयोः कर्णयोः नेत्रयोर्वा,···स्वीचकार च तं क्षणमात्रानन्तरं भावावेगकंपमानगात्रं सद्गदेन स्वरेण,······अवधीर्य तन्मुखमात्रनिगडितां साभिप्रायां तन्निविवृत्साव्याकुलां दृष्टिं पांचनदस्य

राजकुमारस्य धर्मपालस्य नातिदूरे एव समुपविष्टस्य,……–इत्यत्र ?

'सुरक्षितवामपार्श्वः……अहं……नयन् एत्–' चिन्तयामास अथ यवन-सम्राट्, एवं क्रमेण व्यतीते मासद्वये, एकस्मिन् प्रभाते समारुह्य स्वं कज्जल-कृष्णं अश्वं निरीक्षमाणः साभिमानं स्वं बलं……अभियानार्थं सन्नद्धं, तन्नि-रीक्षणार्थं स्वसंनिवेशसमीपवर्तिनि दिगन्तविस्तृते समतले भूभागे समुपस्थितं, पंक्तिबद्धम्, आश्विकबहुलं, प्रस्फुरद्रणावेशदुर्धर्षं, 'फख़रे–सलातीन जिन्दः-बाद', शाहे गजनी जिन्दःबाद' इत्यादिभिः स्वयंस्फूर्तैः जयघोषैः उन्नमय्य स्वं स्वं भल्लं उद्घुष्यमाणैः दिक्चक्रवालं निनादयत्, प्रचलनातुराणां ह्रेषारव-मुखराणां फेनिलोष्ठानां खुरेण भूमिं निरन्तरं उत्खनतां स्वतुरगाणां पादेभ्यः समुद्गच्छन्त्या धूल्या गगनांबरं धूसरं कुर्वत्,……स्मयमानः सकृत्सं मध्ये एव स्मृत्याऽऽशीर्वचनानि भूयांसि निशम्य तदभियानसंनहनसमाचारं सहसा उत्साहाऽऽपूरितेन सद्धर्मप्रसाराभिनिवेशं तदीयं बहु बहु मन्यमानेन (–वस्तुतस्तदानीयमानैश्वर्यैकभागविनिगडितगृद्ध्रदृष्टिना–) परमोच्चेन तद्धर्मगुरुणा ससंभ्रमं स्वोच्चाधिकारिणां माध्यमेन प्रहरमात्रपूर्वं अभिवृष्टानि,……स्पृशंश्चासकृत् सतोषेण स्वं सद्यःसुरभितं मृदुलमृदुलं रञ्जि-तधवलकेशं श्मश्रुपाशं, '……वेगेन विद्युन्निभेन मध्यात् पांचनदस्य प्रदेशस्या-दित एवानुभूय प्रहारान् अस्य असकृत् भीतभीतस्य, तत्रापि अनुशोच्य अनु-शोच्य स्वं स्वामिनं स्वशरीररिरक्षिषयाऽवलोचितया प्रपलायितं अनाथ-मित्रात्मानमनुभवतः, तत्रापि भृशं निशम्यैतस्य नवीनतमस्याभियानस्य समाचारान् विगलितधैर्यविशेषस्य, विजितप्रायस्य,……समूलमुन्मूलयन् दुःसाहसिकान् एतत्प्रतिरोधकरान् तत्रत्यान् सामन्तान् द्विमान् निरपवादं, ……तथा……तथा……आक्रमिष्यामि राज्यं कान्यकुब्जानां अधीशस्य, अननुभूतचरमदाक्रमणवेगस्यार्यावर्तरक्षकंमन्यमानस्य, स्वकर्तव्यात् परि-भ्रष्टस्य काश्मीरराजस्य राजसभाया विरज्य विनिर्गतेन कतिपयरक्षकमात्रानुगतेन तेनोपद्रवकरेण पांचनदेन धर्मपालेन शरणीकृतस्य, प्रतिदिनं च प्रतिरोद्धुं एतत् रक्षितुं च असंख्यानि स्वधर्म-स्थानानि प्रेर्यमाणस्य, अदूरदर्शित्वादंगीकृत्य तत्प्रेरणां कर्तुं तथा महताऽऽ-आडम्बरेण सेनासंनाहं कुर्वतः……यथा……प्रथमेन प्रहारेणैव भग्नमनोबलः कान्दिशीकः सः भविष्यति यमसदनातिथिः,……अंगीकरिष्यति वा मद्वशं-

वदत्वं समर्पयित्वा मह्यं तं उपद्रवकरं पांचनदं······धर्मपालं,······करिष्यति वा नेतृत्वं अन्यान्यभारतीयनृपाणां—न धर्मयुद्धे—अपि तु अनुपालने (सहसा सकृत्सस्मितं) तेषामेव नीतिशास्त्रे समुपदिष्टस्य तस्य 'आत्मानं सततं रक्षेत्'—इति नीतिवाक्यस्य !'

'प्रविलयं······विलयं······वा तथा गते तस्मिन् नरेशे,······यमसदनं च प्रापिते तस्मिन् उपद्रवकरे पांचनदे······क इवावशिष्येत प्रतिरोद्धुमेतद्बलं मम आर्यावर्तस्य अपारैश्वर्यमण्डितानां तीर्थस्थलानां (—सोपहासं—)······ भ्रष्टाचारस्थलानां······विध्वंसनात् ?'

चिन्तयित्वा चैवं······अन्त एव तस्य सप्ताहस्य······चचाल स्वराजधान्याः अभियियासया, प्रविवेश च भारतवर्षं उत्तरपश्चिमामाशां रक्षतः नगाधिराजस्य······दरीमार्गेण······पर्यालोच्य चिरमसमर्थतामात्मनः रक्षणे तं 'देवतात्मानं' मत्वाऽनादिनः कालात् पूजयतां भारतीयानां भग्नहृदयेनेव भासमानेन······कालेन तावताऽतिपरिचितेन ।

अवलोक्य च सीमायामेव आदित एवागत्य तत्र सदलं आगमनं तस्य महता औत्सुक्येन प्रतिपालयन्तमत्युचमधिकारिणं काश्मीरराजस्य······ स्वामिना सादरं प्रेषितानि विविधानि बहुमूल्यानि रत्नखचितानि अलंकरणानि अनेकराजतस्थालीनिहितानि विविधवर्णैः चीनांशुकैरावृतानि गृहीत्वा स्वे स्वे हस्ते (—स्यान्नाम साध्वसवशात्—) प्रकंपमाने तिष्ठद्भिः अनेकैः सेवकैः सहितं······संतुष्टोऽपि······गर्वोद्धतया मुद्रया स्वीकृत्य तानि उपायनानि स्वसेनानायकान्यतमस्य माध्यमेन······संस्थाप्य सैनिकदृष्ट्या महत्वशालिषु स्थानेषु तद्राज्यमध्ययायिनः मार्गस्य सशस्त्राणि स्वसैनिकदलानि,······अविगणय्य काश्मीरराजदूतमुखाभिव्यक्तां विस्मयछटां अपरेद्युरेव ततः प्रस्थितः······आरभत प्रचलितुं मार्गेण······शून्यशून्यक्षेत्रनिबद्धोभयपार्श्वेन,···निष्प्रतिरोधेन,···स्वाधिपेनाविगणय्य स्नेहपाशमनेकसंवत्सरशतकसंबंधदृढीकृतं परित्यक्तमात्मानं अनाथमिवानुभवन्तं पांचदनप्रदेशं विदीर्य निरन्तरं दक्षिणामाशां उपसरता,······सह स्वबलेन, लेशतोऽपि अक्षतेन,अवलोक्य काश्मीरराजेन समर्पितानि उपायनानि विस्मितेन, साक्षात् कृत्य आत्मानमनादिष्टं स्वसिपह सालारे—आजमेन पुनराक्रमणाय तथा दुर्गमस्य तद्राज्यस्य समुपजाताश्वासेन, दृष्ट्वा वारंवारं मध्येमार्गमापति-

तानि सद्यस्कसंक्रामकरोगग्रस्तानीव जनैः परित्यक्तानि नगराणि असंरक्षितानि लुण्ठितुं तानि आतुरातुरेणापि कर्तुं तथा विनैवानुज्ञां स्वनायकस्य तदातुरताऽनभिज्ञस्येव निर्विकारमुखमुद्रस्यानन्यमनसा दक्षिणदिक्यायिनं मार्गमेवाविच्छिन्नेन वेगेनाप्रतिहतेनानुसरतः अधृष्यता ।

दृष्ट्वा तस्य औदासीन्यं, मूर्तिपूजके देशे प्रथमत एव दृष्टं, परं विस्मिता बभूवुः चिरपरिचितास्तस्य सेनाधिकारिणोऽपि ।......किं पुनस्तस्य साधारणाः सैनिकाः ?

न हि ते साक्षाच्चक्रुः यत् मृगयुः मृगव्यं मृग्यतमं मृगयमाणः समुपेक्षते एव मार्गापतितमपि क्षुद्रं जन्तुजातम् ।

इत्थमनुत्पीडयन् कमपि, प्रसारयन् परंतु स्वबलातंकं सर्वत्र सः प्रोवास निरन्तरं मासद्वयपर्यन्तं......प्रतिदिनं सेवायां उपतिष्ठतां गूढचराणां माध्यमेन गतागतानि भारतीयानां नरेशानां जानन्......तदनुसारं स्वमभियानं संचालयन्......उपलभ्य तेभ्यः समाचारं पांचनदस्य राज्ञः (–राज्यविहीनस्य–! ) विनष्टप्रतिचिकीर्षस्य हताशस्यकिंचित्कारितायाः संतुष्टोऽपि निशम्य तं पांचनदस्य तस्य राजपुत्रस्य धर्मपालस्याग्रणीकृत्य कान्यकुब्जं नराधिपं इतरान् भारतीयान् नरेशान् स्वधर्मसंस्कृतिरक्षणार्थमेकीकर्तुं तत्सैन्यानि प्रेरयतः क्रुद्धः......दृढतरीभूतनिश्चयः......अतिचक्राम पांचनदस्य प्रदेशस्य दाक्षिणात्यां सीमां,......उपससार च तीरं नद्याः यमुनायाः...... अनेकदा श्रुतायाः वृत्तान्तेषु गूढपुरुषाणां आर्यावर्तात् राजधान्यां गजन्यां तत्सेवायामसकृत् उपतिष्ठताम् ।

विलोक्य च तां......विशालपात्रां निर्मलजलां विस्तीर्णधवलसिकतिलतीरद्वयाबद्धपार्श्वां देशविदेशप्रवासेषु अनवलोकिततुल्यां, क्षुद्राः मर्कटचेष्टाः मानवस्य तुच्छाहंभावमात्रप्रेरिताः समुपेक्ष्य निरुद्वेगं निरन्तरं वहन्तीः...... सोऽपि बभूवाभिभूतः कयाऽपि अननुभूतचरया भावनया क्षणमात्रं,...... बभूव समुद्यतः क्षणमात्रं विश्वस्तुमनेकदा श्रुतचरासु अनेकदा अल्बरुनिना साकं चर्चितासु अनेकदा अहिफेनप्रभावप्रादुर्भुताः' इति उपहसितासु विविधासु विलक्षणासु आधिदैविकचमत्कारहृद्यासु भारतीयासु कथासु अनादिनः कालात् प्रचलितासु,......बभूव च मग्नश्चिन्तायां क्षणमात्रं–'हितकरं स्यान्न वा कृते मम अस्याः उल्लंघनम् ?' इति ।

परतु—अहा प्रभाव: स्वसंस्कृते: दुरभिमानस्य !

अपरस्मिन्नेव क्षणे हि···स:···आकृष्ट इव केनापि तस्या: अवस्थाया:··· उपजहास सतिरस्कारमात्मनो दौर्बल्यं,······विसस्मार हठात् ता: सर्वा: कथा:,······सस्मार स्वं मुहामदीयधर्मप्रसारकर्तव्यं,······अवलोकयामास च तीक्ष्णदृष्ट्या तीरद्वयं नद्या:।······उपलभ्य च तन्निर्तनं अथ च ससंभ्रमं परित्यक्ताभिरसंख्याभि: नौकाभि: जलप्रवाहचंचलाभिराकुलाकुलं सकुत्सं स्मयमान: आदिदेश स्वबलं······कालेन तावतोपतीरमागतं···तमिव दृष्ट्वा तस्या: शोभां क्षणमात्रं प्रभावितं······तमिव क्षणमात्रानन्तरमेव प्रकृतिं स्वां पुनरापन्नं······तदादेशं अग्रिमं नि:शब्दं प्रतीक्षमाणं······समुत्ततुं तामविलंबं साहाय्येन तासामेव नौकानाम् ।

अनुसृत्य तदादेशमेकत्राऽऽनीताभि: नौकाभिस्ताभि: निर्विघ्नं समुत्तीर्य तां नदीं तीरे दाक्षिणात्ये अग्रे चलनार्थं प्रहरमात्रे एव संनद्धमवलोक्य स्वं बलं नि:शंक: सकुत्समस्मयत स:,···अपामन्यत तां निष्ठीवनेन,···समुत्ततार तां नौकया तन्नयनार्थं विशिष्य प्रत्यानीतां । अतृप्त इव तेन स्वयं कृतेनापमानेन च······आज्ञापयामास निकटस्थान् स्वांगरक्षकान् दूषयितुं तां निक्षिप्य गोमांसं प्रशान्ते निर्मले जले तस्या:······सायंप्रभाऽऽरक्तान् नीलनीले गगने स्वैरं विहरत: कार्पासपुञ्जानिव निर्जलान् जलदान् प्रतिबिंबछलेन स्वोरसि धारयन्त्या: ।

चत्वारि लक्ष्याणि साधयितुं समैहत स: धूर्त: तया एकया चेष्टया····· अपमन्तुं मूर्तिपूजकानां धर्मम् अन्धविश्वासानुप्राणितं, समूलमुन्मूलयितुं तेषां मनोबलं प्रतिपदं आधिदैविकं साहाय्यमपेक्षमाणानां, उत्तंभयितुं यत् स्वसैनिकानां यथेच्छाचारेण प्रवृद्धाऽऽचिक्रंसानां, ख्यापयितुं चात्मानं सर्वत्र परमेश्वरेण सद्धर्मप्रसारार्थं विशिष्य प्रेषितस्य पुरुषविशेषस्य रूपेण !

तर्पयित्वा चैवमात्मन: अभिनिवेशं······चचाल अग्रे दिनमेकमपि अविश्रान्त:······आविष्ट: प्रारंभत एवाभियानस्य अभियियासया क्षणमेकमपि अनुपरमन्त्या भारतीयस्य प्रमुखतमस्य तीर्थस्थानस्य मथुराख्यस्य···अतुलितवैभवमण्डितत्वेन बिख्यातस्य,······गजन्यां श्रुत्वा श्रुत्वा तत्ख्यातिं मुखेभ्य: सार्थवाहानां गुप्तचराणां चानेकदा स्वप्नेषु दृष्टस्य,······दिवास्वप्नेषु कल्पितस्य ।

इयती बलवती आसीत् तस्य अभियियासा सा······यत् तया आविष्टः सः न मनसि चकार क्षणमेकमपि तत्सेनाध्यक्षैः ससंकोचं तत्पुरस्तात् उपन्यस्तं प्रस्तावं समीपवर्तिनः प्राचीनतमस्य ऐश्वर्यसंपन्नस्य नगरस्य हस्तिनापुराख्यस्याऽऽक्रमणस्य ।

सा परंतु अन्वभवत् व्यत्ययं······निशम्य एकस्मिन् निशीथे······प्रसुप्ते तत्सेना सन्निवेशे निभृतं प्रविष्टस्य, रक्षकसैनिकैः तत्क्षणमेव तत्पुरत उपस्थापितस्य, रहसि स्वं यथार्थं परिचयं दत्तवतः गूढचरस्य मुखात् समाचारं एकस्याश्रुतचरनामधेयस्य अनतिदूरवर्तिनः नगरस्य वरुणाख्यस्य दुर्गाध्यक्षस्य हरदत्ताह्वस्य······मथुरामार्गेणाग्रे गतं तं पार्ष्णितः आगामिन्यां दर्शयामिन्यां प्रसह्याऽऽक्रमितुं संकल्पयतः ।

क्षणमात्रमपि अविचलिता परंतु तेन······प्रेरयामास तं, चिरात् खलु समुपलभ्यावसरं शस्त्रप्रहारस्य प्रसन्नः········स्वयमेवाऽऽक्रमितुं तं तथा प्रगल्भायमानं,······प्रदर्शयितुं च तदभियानं निरुद्धश्वासमवलोकयद्भ्यो भारतीयेभ्यः 'कियान् निर्दयः भवति शाहे गजनी विषये मूर्खाणां तादृशानाम्' इति ।

प्रेरितश्च तया निनाय सः प्रभात एव स्वं बलं, निशम्य कर्णोपकर्णिकया संभावनामागामिनः समरप्रसंगस्योत्तेजितं, दिशि वरुणनगरस्य, विहाय मथुरायायिनं मार्गम् ।

अनुबभूव परंतु विलोपं प्रसादस्य···अपराह्ण एव, सह बलेन, 'अल्लाहो अकबर !······अल्लाहो अकबर !' इति रणगर्जनाभिः दिक्चक्रवालं निनादयता, समुपसर्पन् दुष्प्रसहेन वेगेन रिपुनगरं, दृष्ट्वा दूरतः तिर्यक्निपतद्रविकरोद्भासितात् तस्यैव नगरस्य प्राकारमहाद्वारात् व्यात्तात् निर्गच्छन्तं समूहमेकं······न नगररक्षकसैनिकानां ह्रेषारवमुखरतुरगाधिरूढानां समुद्यतशस्त्राणां जयघोषेण रणावेशघर्घरेण प्रतिगर्जतां युयुत्साप्रस्फुरद्बाहुदण्डानां··· अपि तु—नागरिकाणां पदातिनां निःशस्त्राणां मूकमूकानां मंत्रेण केनचित् पाल्यमानानां प्रेतशरीराणामिव घृणास्पदानां उद्वेजकानां अगणितानाम् ।

अनुबभूव च उदयं विस्मयस्य । न हि सः क्षणमात्रमपि उत्प्रेक्षते स्म तादृशं दृश्यविपर्ययम् ।

तदधीन एव······निययाम कतिपयक्षणानन्तरं महता प्रयासेनाऽऽत्मनः

तुरंगमं······बलं च रयेन तत्तुल्येन तमनुसरत्,······ररक्ष च(–ग्रामं गच्छन् तृणं स्पृशति–इति न्यायानुसारं–अस्तु नाम–) तं समुदायं तुरगलक्षखुर-चूर्णनमरणात् दुःसहात् ।

स तस्य विस्मयः पर्यणमत तिरस्कारेऽवलोक्य तस्य समूहस्य नेतारं····वृद्धप्रायं, दुर्बलं, अनुष्णीषं, बद्धाञ्जलिपुटं, भयविस्फारिताभ्यां निर्निमेषा-भ्यां लोचनाभ्यां तं ध्यायन्तं, प्रस्फुरन्मूकौष्ठपुटं, सुवेषमपि संपन्नावस्थमपि दीनदीनमिव भिक्षुकमिव भासमानं पुरुषमेकम्········स्खलत्पदं तत्समीपे समुपसर्पन्तं,········विज्ञाय च तस्मात्········तत् समीपमुपसृतात्, भूमावेव धूलिबहुलायां निम्नोन्नतायां साष्टांगं प्रणिपतितात्, अवस्थाय तस्यामेवाव-स्थायां चिरमस्फुटास्फुटैः शब्दैः किमपि ब्रुवाणात्, किमपि भिक्षमाणात् प्राप्य प्राणदानमेव तस्मात् समुत्थितात्,·····तद्व्यथाकथाम् ।

नात्र च आश्चर्यं लेशमात्रमपि ।

कस्येव हि न परिणमेत श्रुत्वा तादृशीं कथां–'कथं खलु तेषां नगरदुर्ग-स्याधिपः हरदत्तः, शूरंमन्यः, आर्यंमन्यः, कर्तुं यवनस्य शासनं कृतप्रतिज्ञः, पूरयितुं नाम स्वां तां प्रतिज्ञां तान् तेषु तेषु अवसरेषु अनन्तं धनं दुहानः, निरन्तरस्वबलसंवर्द्धनव्यापृतः, आकर्ण्यैव तदागमनवार्त्तां व्यतीतेऽपराह्णे स्वगूढपुरुषमुखात् सहसा बभूव भयाक्रान्तः,·····कथं खलु जुगूह सर्वेभ्यः आत्मनस्तामवस्थां निषिद्धय् सर्वजनसंपर्कं रक्षोपायचिंतनव्यग्रतामिषेणाऽऽ-निशान्तं,·····कथं खलु उपायुंक्त तमेकान्तं संग्रहणे बहुमूल्यानां सुनेयानां रत्नाभरणादीनां निःसरणे च मार्जारपादं घोरान्धकारे निशीथे दुर्गात् बहिः अतिदूरावस्थिते तन्मात्रविदिते स्थाने कस्मिंश्चित् नयता मार्गेण गूढेन सह तेन संग्रहेण परिवारजनेन चाऽऽत्मीयेन,·····कथं खलु विदुस्तस्य तां कापुरुषोचितां चेष्टां ते प्रभाते तादृिनिके,·····कथं खलु हतबुद्धयस्ते आदौ निश्चक्युः अन्वेष्टुं तं दण्डयितुं च, अन्ते परंतु विचारयामासुः विरन्तुं तत्प्रयासात्, आयासमात्रफलात्, शरणीकर्तुं च तमेव पुरुषसिंहम्'–इति स्वां व्यथाकथां निवेदयन्तीम् ?

तिरस्कुर्वन् तं दुर्गपालं भूतपूर्वं········क्षणमेकं ववाञ्छ सः सोपहासं प्रष्टुं तं–'न किं विना तेन ते शक्नुः कर्तुं स्वं संरक्षणं···भोजनपानादिवत्'–इति ।

परंतु—नियम्यात्माऽऽत्मानं क्षणमात्रानन्तरं तथाकरणात्········चतुरः। अभिव्यज्य च स्वोपहासं सकुत्सेन स्मितेन दुर्लक्ष्यप्रायेण·····शृण्वतामेव स्वसेनादलाध्यक्षाणां, तत्पृष्ठतः समुपसृतानां, विकोशखड्गहस्तानां, सकौतूहलं घटनाक्रमं तं पश्यतां, अवस्कन्दनावसरं चिरात् खलु प्राप्तं तथा विलीयमानं दृष्ट्वा खिन्नानामपि वैमत्यं स्वं लेशतोऽपि प्रदर्शयितुमधृष्णुवतां·····प्रायच्छत् तस्मै (—तन्माध्यमेन च सर्वेभ्य एव तदनुयायिभ्यः—अर्थादिव शरणागति स्वां निरपवादां सशपथमंगीकृतवद्भ्यः—) दानं·····न केवलानां प्राणानां·····अपि तु तद्गृहदारादीनामपि।

विजित्यैवं तान् (—तन्माध्यमेन च सर्वानेव भारतीयान् आसमन्तिकप्रदेशवासिनः—) तदभियानं प्रतिदिनमार्यावर्तस्याऽऽन्तरतमे भागेऽधिकाधिकं प्रसरत् अवलोक्य भयमनुभवतः, साक्षात्कस्य स्वाधिपान् भयजडानकिंचित्करान् पुत्तलकनिर्विशेषान् परमेश्वरमेव साक्षात् तद्रक्षणायाऽऽह्वयतः, तद्बिधेनानुत्प्रेक्षितेन सर्वतः प्रसृतजनकिम्वदन्तीविपरीतेनोदारेणाचरणेन····· अविलंबमेव प्रारभत आक्रमितुं मार्गं मथुरानगरीयायिनं, सदातीर्थयात्रिभिः सनामसंकीर्तनं प्रवसद्भिः संकुलं, आकर्ण्य परंतु तदभियानसमाचारमादित एव प्रसृतं (—तेन प्रसारितं—इति तु युक्ततरम्—) तैः विशिष्य वर्जितं····· अविगणय्य सायंसंध्यासमयं प्राप्तप्रायं·····अर्थादेव स्थापयित्वा प्रबलबलं दलमेकं स्वसैन्यस्य तस्मिन् वरुणनगरदुर्गे··सामाजिककण्टकशासनापदेशेन।

आक्रमंश्च तं मार्गं·····पचेलिमसस्यसंपन्नैः परंतु क्षेत्रपालपरित्यक्तैः भूदारवानरादिप्राणिसंकुलैरनन्तैर्दिगन्तप्रसृतैः क्षेत्रैः आबद्धवामपार्श्वं,····· निरन्तरं पन्थरं प्रवहन्त्या, अहनि निपतद्रविकरोद्भासितया सौवर्णपद्ययेव निशि च प्रवर्षच्चंद्रांशुप्रभासितया राजतपद्ययेव दिवौकसां भासमानया यमुनया निबद्धदक्षिणपार्श्वं,·····सः·····विस्मित इवाननुभूय स्वल्पमपि प्रतिकारं·····कतिपयदिवसानन्तरमारभत शनैः शनैः चिन्तयितुं भारतीयान् सर्वानेव कापुरुषान्।

कियत् त्रुटिपूर्णमासीत् तस्य तत् चिन्तनम्—इत्येतत्·····परंतु····· शीघ्रमेव साक्षाच्चकार सः।

अपराह्णे हि एकस्य भौमस्य वासरस्य·····स ददर्श एकं तिर्यक्निपतत्-सूर्यकरोद्भासितैकपार्श्वं दुर्गं·····भूदुर्गं·····अनतिप्रचण्डं·····अनतिदृढं·····

पिनद्धमहाद्वारं·····निर्जनप्राकारशिखरम् । समुत्प्रेक्ष्य च परित्यक्तं निर्जनं, आदिश्यान्यतमं स्वं तुरगसादिदलप्रमुखं कर्तुं तं स्वं मुख्यालयमग्रिमाऽऽदेश-पर्यन्तं प्रावर्तत सावज्ञं सतुं अग्रे स्वेन मार्गेण यथापूर्वम् ।

महान् आसीत् तस्य·····प्रकृत्याऽसुलभविस्मयस्य·····विस्मयः······ यदा सः·····प्रवृत्तमात्र एव स्वे प्रवासे·····आकर्णयामासाकस्मात्····· 'जय !·····जय !'–इति रणगर्जनां, पालराजवंशपराजयात् प्रभृति अनाकर्णितां, रणावेशघर्घरां, युगपन्निपतत्तुरगखुरसहस्ररवोपबृंहितां, समुत्पद्य दिशि तस्य दुर्गस्य वेगेन दुःसहेन समापतन्तीम् !······'कुत इयं इह ?' इति कौतूहलेन हठात् समुत्पन्नेन व्यावर्त्य शिरः शिरस्त्राणत्रातं तद्दिशि अवलोकमानश्च ददर्श·····निःशब्दं समुद्घाटितात् तस्यैव दुर्गस्य महाद्वारात् वेगेन प्रभञ्जनवेगमपि अतिशयानेन निःसरन्तीं सेनां दुर्गपालस्याज्ञातनामधेयस्य सावज्ञं तेनैव क्षणमात्रपूर्वमधिक्षिप्तस्य,·····अनतिप्रचण्डामपि प्रचण्डामिव, तस्य कृते जय्यामपि अजय्यामिव युयुत्साऽऽवेशवशात् भासमानां,·····खुर-खन्यमानभूतलसमुत्पतत्रजःपटलावृततया दुर्लक्ष्यप्रायामापि तिर्यक्निपतद्रविकिरणसमुद्भास्यमानकुन्ताग्रकान्तारेणानुमेयविशेषाम् ।

प्रयतमान एव च समुद्धर्तुमात्मानं तस्मात् विस्मयगर्तात्·····अनुबभूवाननुभूतपूर्वसदृशमाघातं प्रथमं तस्याः·····द्वित्रेष्वेव क्षणेषु निर्गत्य महाद्वारात्, अतिक्रम्यान्तरालं, विजित्य लीलयैव विस्मयजडं तत्प्रेषितमश्वसादिदलं·······सेनां मुख्यां तस्य विस्मयमूढां विस्मृतरणघोषां आक्रमन्त्याः ।

इयान् खलु तीव्रः आसीत् सः प्रथमः आघातः, सामरिकदृष्ट्याऽतिमहत्त्वपूर्णः, यत् आ जन्मनः स्थिरप्रकृतिरपि, आ बाल्यात् युद्धकलायां प्रशिक्षितोऽपि, आ यौवनात् विजयपरंपराऽऽध्मातहंभावभरितोऽपि सः यवनसम्राट्, सहसा प्रकंपिताऽऽत्मविश्वासः, पलायियिषया समाक्रान्त इव बभूव कतिपयक्षणपर्यन्तम् ।

क नूनमासीत् स विचारः यस्तं प्रतिरुरोध तथाकरणात्·····अहंभावो वा, 'पलायिता अपि वयमितः नैव शक्ष्यामः निवर्तितुं स्वं गृहराज्यं समतिक्रम्ययोजनशतदीर्घदीर्घम्, आदित एव गोपितवैरभावदुर्मनस्कं, प्राप्य तु वैरप्रतिनिर्यातनावसरं दुःसह अस्य देशस्य प्रदेशं–' इति प्रत्ययो वा,

'निर्वतिता अपि नैव शक्ष्यामः……एतादृश्या पुनरावृत्तया मुखचपेटिकया साधारणजनदृष्टौ उपहसनीयतामापादिताः……इह जन्मनि स्वप्नं स्वं साम्राज्यप्रस्थापनस्य साकारयितुम्–' इति विवेको वा–इति तु न विद्मः।

विद्मः परंतु यत् स जिगाय तां प्रसह्य, प्रावर्तत चोच्छूननाडीकलंकित-भालपट्टः प्रस्फुरदोष्ठपुटः आकुंचिताऽऽरक्तलोचनः योद्धुं सह आक्रामकेन तेन परबलेन।

विद्मः एतदपि यत्–तथा युद्ध्यमान एव तीक्ष्णया सावधानया सर्व-ग्राहिण्या दृष्ट्याऽन्वेषयामास नेतारं तस्य, इच्छन् आक्रमितुं हन्तुं च तमेव विना विलंबं स्वयं,……'सति तस्मिन् नेतरि विनाशिते स्वयमेव विनंक्ष्यति एतत् तस्य बलं'–इति दृढं विश्वसन्।……अन्वेषयामास चिरं, न परंतु शशाक द्रष्टुं तम्।……नासीत् हि मध्ये तस्य बलस्य, 'जय ! जय !'–इत्युद्घोषघर्घरस्वरस्य, स्वनेतुः रणचातुर्यवशाल्लब्धं प्रारंभिकं विजयमन्तिमे परिवर्तयितुं पणीकृत्य प्राणान् प्रयतमानस्य, एकोऽपि सैनिकः स्वपदसंसूचक-विशिष्टचिह्नधरः।……अशक्तश्च एवं विनिश्चेतुं मध्यात् तेषां विभिन्न-वयसामपि समानसमानवेषाणां समानरक्ततिलकालंकृतभालपट्टानां समान-शस्त्रधराणां तन्नेतारं……निनिन्द सः तं चित्तैकदेशेनात्मानमेवं स्वसैनिकान्य-तममिव प्रदर्शयन्तं, (–दृढं हि स विशश्वास तस्योपस्थितौ मध्ये तेषाम्। विना तं तानिव आमरणं (–तद्धि आसीत् सुनिश्चितम्–) युद्ध्यमानं…… असंभवनीय एवासीत्, तन्मते, सतेषां रणावेशः अदृष्टपूर्वसदृशः–),…… प्रशशंस तं तदन्यतमेन चातुर्यं एवं दौर्बल्यस्थलस्य सैनिकस्य भारतीयस्य एकस्यान्वेषणे दूरीकरणे च प्रदर्शितवन्तं,……निश्चिकाय च तदन्यतमेन योद्धुं योधयितुं च स्वं बलं सह प्रत्येकेन संमुखीनेन परबलसैनिकेन…… मत्वा तमेव तस्य नेतारम्।

जगर्ज च सहसा……प्रकंपयन् सायंसंध्यारागरक्तं समुद्गतरजःपटल-मलिनमलिनं, अवलोकयितुमिव स्वचिह्नालंकृतध्वजधारिणः शौर्यं आगतया चंद्रकलया मंडितं गगनांगणं 'दीन !……दीन !' इति।

इयान् प्रचण्डः आसीत् प्रभावस्तस्य रणगर्जनायाः (–न विद्मः–तत्-स्वरवैशिष्ट्यसमुद्भूतः, आहोस्वित् तदर्थवैशिष्ट्यमूलकः यत् तत्क्षणपर्यन्तं आत्मरिरक्षिषया एव केवलया युद्ध्यमानं बलं तस्य……समाकर्ण्य ता मंत्रा-

विष्टमिवाकस्मात् प्रावर्तत योद्धुं दुःसह्याऽऽचिक्रंसया ।

प्रारभत च समाक्रष्टुं विजयश्रियं·····तत्क्षणपर्यन्तं दुर्गरक्षकबलं मदालसमुपसर्पन्तीं·····स्वसमीपे ।

आचिक्रंसा हि तस्यै अधिकतरं रोचते·····अपेक्षया रिरक्षिषायाः । सा चासीत् प्रबलतरा यवनबले अनेकविजाभिमानोपोद्बलितबले, 'सति रण-भंगे भङ्क्ष्यति अस्माकं सर्वमेव·····गृहदेशात् क्रोशशतैः विप्रकृष्टानां' इत्ये-तेन कटुसत्येन प्रतिक्षणं पीड्यमाने,·····अपेक्षया रिरक्षिषायाः श्रुतचरपर-पराक्रमहतमनोबले दुर्गरक्षकबले विद्यमानयाः ।

अलभत च पूर्णं साफल्यं तत्र·····अस्तंगतप्राये सहस्रकिरणे···साक्षात्-कृत्य वैयर्थ्यमात्माहुतेः दुर्गरक्षकसैनिकानां खिन्नखिन्ने ।

पराजित्य संख्यया तुच्छमपि प्रचण्डशक्तितया प्रबलमिव भासितं तद्बलं धन्यंधन्यं तद्यवनबलं·····अथप्राक्रमत स्वाधिपाऽऽदेशानुसारं निरीक्षितुं तद्रणक्षेत्रं रक्तमांसवसाकर्दमदुर्गमं शान्ताडंबरं समुपसर्पतश्वापदं···प्रज्ज्वाल्य अलातसहस्रं·····गवेषयाऽऽहतानामपि मूर्च्छितानामपि रिपुसैनिकानां····· प्रष्टुकामं तान् तन्नेतॄनाम् । नालभत् परन्तु साफल्यं स्तोकमपि ।···सर्वानेव तान् अविन्दत तत् युद्ध्वा । आ प्राणान्तं स्वर्गं (–तन्मते अर्थादेव नरकं–) गतान् ।

इयती प्रबलाऽऽसीत् तस्य सा कामया यत् लब्ध्वाऽपि असाफल्यम-विचलितः सः आदिदेश बलवत् दलं स्वबलस्यैकं प्रवेष्टुं तस्मिन् दुर्गे····· गतप्राणे इव व्यात्तमुखे,·····अन्वेष्टुं तदन्तर्भागं, बंदीकर्तुं तत्राऽऽनेतुं च तत्समक्षं यं कमपि तन्निवासिनं दृष्टमात्रमविचार्य वयोवस्थालिंगविशेषं,···· निश्चिकाय क्षणमात्रानन्तरं स्वयं कर्तुं तस्य दलस्य नेतृत्वं,···अन्वतिष्ठच्च स्वं निश्चयं–चकितचकितमवलोकयत एव तद्दलप्रमुखस्य ।

कृतप्रवेशश्च तस्मिन् प्रविशदलातशतोत्सार्यमाणान्धकारे, मृते इव निः-स्तब्धे, प्रेतोदवसिते इव भयावहे·····अन्वियेष तदन्तः आ निशीथं सूक्ष्मे-क्षिकया·····अनपवर्ण्य क्षुद्रतममपि गृहं, शून्यशून्यमपि आरामं, पिनद्धद्वार-मपि धान्यागारं, रिक्तरिक्तमपि कार्यालयं, निर्जनमपि मंदिराभ्यन्तरं,····· असमर्थश्च द्रष्टुं तत्र एकमपि बालकं वृद्धं वा, पुरुषं नारीं वा, जीवन्तं प्रविवेश दुर्गप्रवेशक्षणात् प्रभृत्येव स्वबलदलभागान्तरेण सर्वतः निरुद्धप्रसरं

दुर्गपालनिवासं महान्तं पद्भ्यामेव······उत्कोषखड्गहस्तः······उत्प्रेक्षमाणस्तीव्रं विरोधं तत्र,······बभ्राम तस्यासंख्येषु कक्षेषु, तदंगरक्षकालातनिःसार्यमाणान्धकारेषु, भूमौ रमणीयमहर्हास्तिरणावृतायां निपतितैः अमीलिताभ्यां लोचनाभ्यां स्वां सत्यामवस्थां ज्ञापयद्भिः कलेवरैः दासजनस्य संकुलेषु,······प्रविवेश अन्ते दुर्गपालनिवासाऽऽन्तरतमभागवर्तिनि महति कक्षे दुर्गपालपलयाः वैभवमण्डितेऽपि सर्वविधसुविधोपपन्नेऽपि कक्षान्तरवत् भयावह,······अवलोकयामास कलेवरमानीलवर्णं तस्याः स्तृतं पर्यंके सह कलेवरेणाल्पवयसस्तत्पुत्रस्य, उरसि लग्नस्य, भीतभीतस्येव यमसदनप्रवेशावसरे मातुः सान्निद्धियं कामयमानस्य, निरीक्षते स्म तत् चिरं स्वयं तत्समीपे गत्वा स्वहस्तधृतालातः किंचिदाकुंचितलोचनः,······ददर्श किमपि वस्तु प्रवृत्त एव ततः अपसर्तुं, प्रकाशमानं प्रकाशेऽलातस्य तद्दक्षिणमुष्टौ,······प्रसारयामास स्वं हस्तं तत्समीपं,······उद्घाटयामास तां मुष्टिं बलात्,······अपाकर्षत तद्वस्तु ततः,······अदधत च तत् अलातप्रकाशे प्रखरतरे ।

कु······ल······चं·········द्र'—महता प्रयासेन शशाम सः द्वित्रक्षणानन्तरं पठितुमक्षराणि तस्मिन् वस्तुनि, चंचलालातप्रकाशकिरणव्याजेन तमुपहसतीव,······अंगुलीयके······समुत्कीर्णानि ।

'एवं तर्हि······'कुलचंद्र' इत्यासीत् तस्य दुर्गपालस्य, इतरेतरस्वसैनिवकनिर्विशेषं युद्ध्वाऽन्तेऽत्ययं गतस्य'—सहसा उज्जगार सः कौतूहलेन विस्मृतस्थलकालविशेषः, क्षणमेकमवलोकयन् अंगुलीयकं तत्····क्षणान्तरं च पश्यन् मुखं तत् विकृतवर्णमपि सुखप्रसुप्तमिव शान्तशान्तम् ।

उह्यमानश्च क्षणमात्रानन्तरं······कदाचित् आत्मानं सर्वजनसमक्षं तथा दग्ध्वा पराजयपातकस्य प्रायश्चित्तं कुर्वाणं वृद्धं तं पांचनदराजं जयपालं,···कदाचित् कापुरुषवत् तत्सांमुख्यं रणक्षेत्रे परिहरन्तं तत्पुत्रं आनन्दपालं,······कदाचित् प्रबोधयित्वा स्वदेशस्य वास्तविकीं शक्तिं······संघशक्तिं·····तं निःशेषं विनाशयितुं प्रयतमानं तत्पौत्रं धर्मपालं,······कदाचिन्महताऽऽडंबरेण कृत्वा बलोपचयं परीक्षाक्षणे एव हृद्दौर्बल्यं भजमानं, परित्यज्य च स्वजनान् निशीथेऽदर्शनं यान्तं तं दुर्गपालं हरदत्तं,······कदाचित् अप्रख्यापयित्वा आत्मनः हौतात्म्यं तथा विलयं यान्त तं दुर्गपालान्तरं कुलचंद्रं······विषयीकुर्वतां विस्मयतिरस्कारादिविविधभावनाकुलाकुलानां

विचाराणां प्रवाहेण·····नावेदात्मानं (–स्यान्नाम आदरवशात्–) पुनः स्थापयन्तं तत् अंगुलीयकं मुष्टौ अर्द्धोद्घाटितायां तस्य कलेवरस्य,····· सनिःश्वासं व्यावर्त्य तस्मात् पर्यंकात्,·····तस्मात् कक्षात्, निःशब्द निःसरन्तं,·····अनुसरत्सैनिकाधिकारिपदरवनिनादिताभ्यन्तरात् तस्मात् निवासात्, तत्सैनिकपरिरक्षितसर्वद्वारात् दुर्गात् अधोमुखं निर्गच्छन्तं, ·····प्रविशन्तं च अन्ते स्वपटप्रासादे, अनतिदूर एव रणक्षेत्रात् क्लृप्तस्य स्वसेनासंनिवेशस्य मध्यभागमलंकुर्वाणे।

इयान् वेगवान् आसीत् स तस्य विचारप्रवाहः यत्–प्रसह्य नीयमानस्तेन दिनत्रयपर्यन्तं स नाजानात्–अनुतिष्ठन्नपि स्वानि दैनिकानि अन्यानि वा कार्याणि–अन्यत्र (–न विद्मः कुत्र–) व्यापृतचित्तः–कदा प्रादात् स्वबलाय अनुज्ञां लुण्ठितुं महावनाभिधं नगरमेकं तद्दुर्गपालपरिरक्षितं नातिदूरस्थं सान्द्रद्रुमसम्पत् सार्थकीकृतनामधेयं,·······कदा च पुनः प्राचलत् आक्रमितुं मथुरायायिनं तं मार्गं सह तेनातृप्तधनलिप्सेन उत्सुकोत्सुकेन मथुरालुण्ठनाय।

शनैः शनैः अथ आरभत सः लब्धुं मान्द्यं,·····अलभत च स्वाभाविकं वेगमेकस्मिन् दिवसावसाने दृष्ट्वा दूरात्········दाक्षिणात्योदीचीनदिगन्तप्रसृतं,·····सान्ध्येनान्धकारेण, मूर्तेन तद्दुर्दैवेनेव, प्रतिक्षणं घनतरीभवताऽऽव्रियमाणं,·····समुपेक्ष्य गजनिमीलिकया प्राणसंकटमभूतपूर्वसदृशं स्वदेहल्यामुपस्थितं, वशीभूय वृथाऽभिमानमात्रोद्भूतस्य निर्मूलकस्याकर्मण्यतामात्रप्रेरकस्यान्धविश्वासस्य, विश्वस्याऽऽत्मनः अनभिभवनीयतायां चिरंतनायां स्वे स्वे दैनिके कर्मणि यथापूर्वं व्यापृतं,·····स्व स्व दैनिककर्मव्यापृतानां नरनारीजननां कोलाहलमिषेण स्वं तं विश्वासं प्रकटीकुर्वाणं,·····सायंसंध्यारतिसमये शताधिकेषु श्रीनन्दनन्दनमंदिरेषु कृतसंमर्दानां स्तोत्राणि च विविधानि भक्तिभावमधुरस्वरं गायतां भक्तानां रवेण दिङ्मण्डलं व्याप्नुवत्, ·····प्रज्वलित पूजादीपसहस्रप्रकाशकिरणैः गगनमण्डलं,–पातुं नयनाभ्यां, अनादिकालात् पीत्वाऽपि तत् अतृप्ताभ्यां, तद्वैभवं (–अहह ! आसन्नविनाशं–) उपस्थितैरिव नक्षत्रैः, निशामुखे तस्मिन् संख्यया नूनमधिकतरैः, खचितं– आपूरयत्,·······अनवरतप्रसरद्धूपसौरभसुरभितदशदिशं,········ अननुभूतपराक्रमणदुःखं,········स्वदेशे स्वपावनप्रभावेण विदेशे च विभवेन

ख्यातिं गतं,......मथुराख्यं नगरम् ।

दृष्ट्वा हि तत् आ बाल्यात् श्रुतवैभवं महानगरं......प्रमुखतमं तीर्थ-स्थानं मूर्तिपूजकानां......तस्य यवनसम्राजः आरभत मानसं उग्रतरीभवितुं न केवलया आ जन्मनः प्रचण्डया सदाऽतृप्तया लुलुण्ठिषया, अपि तु लोकेषणयाऽपि तीव्रया......तं......विनाशय्य तत् प्रसिद्धं पूजास्थानमसद्धर्मानुयायिनां पथभ्रष्टानां स्वे देशे अर्जयितुं ख्यातिं 'सद्धर्मप्रचारक' इति प्रेरयन्त्या ।

ईषणाद्वयेनैवं आयास्यमानश्च......महताऽऽवेशेनाऽऽदिदेश स्वं प्रचण्डं बलं समानमनोवस्थं कल्पयितुं संनिवेशं वीक्ष्यानुकूलतमं स्थानं......विस्तृतं भूप्रदेशं......नातिदूरवर्तिनं स्वलक्ष्यात्,......हिंस्रः, श्वापद इव स्वलक्ष्यात् ।

अथ–अनतिजीर्णायामेव तस्यां कालनिशायां......तस्य तत् बलं क्लृप्त-संनिवेशं नैशरक्षकपरिरक्ष्यमाणं परिसमापितभोजनादिनित्यकर्म स्वस्वपट-वासप्रविष्टमारभत स्वप्तुं......लब्धुं विश्रांतिसुखं,......प्रायतत वा तदर्थं श्वोभाविसंघर्षातुरम् ।

कुतः परंतु अर्थातुराणां विश्रान्तिसुखम् ?

नेताऽपि तस्य तदिवाऽऽतुरः...ततोऽपि आतुरतर इत्येव वक्तुमुचितं,...सर्वतः सशस्त्रप्रहरिसंरक्ष्यमाणस्य स्वर्णशिखरभूषितस्य स्वपटवासप्रासादस्य बिश्रामकक्षं मन्ददीपप्रभोद्भासितं महार्हमृदुलास्तरणाऽऽवृतभूतलं निवृत्तः, तन्मध्यभागवर्तिनि विस्तृते हंसपक्षतिकोमले पर्यंके स्वर्णभृंगारभूषितवाम-पार्श्वे अनतिदूरवर्तिन्यां आसन्द्यां न्यस्तेन विकोषेण खड्गेन भीषणदर्शने निपतितः प्रायतत तथैव ।

न त्वलभत साफल्यं स्तोकमपि ।

'लेखयिष्यामः श्वः......नः अभिधानं रक्ताक्षरैः शूरोचितैः पृष्ठे मानवेतिहासस्य......अनेन'–असकृत् चुक्रोश हि मानसं...चिरजूर्णमिव आतुरा-तुरं...तस्य......अर्द्धमुद्रिताभ्यां श्रान्ताभ्यामपि विनिद्राभ्यामारक्ताभ्यां लोचनाभ्यां तमेव खड्गं प्रियतमं एकमात्रं विश्वसनीयं बालसखं निध्यायत-स्तस्य ।'

'लेखयिष्यामः......अभूतपूर्वसदृशस्यापारैश्वर्यमण्डितस्य तौरुष्किक-पारसीकसाम्राज्यस्य दूष्प्रतिरोद्ध्याः प्रस्थापयितार इति ।'

'लेखयिष्यामः......एकमात्रस्य सद्धर्मस्य दुर्दमनीया प्रसारका इति'–द्विगुणितेनाऽऽवेशेन चुक्रोश तत्।'

'लेखयिष्यामः......एतेषां भारतीयानां समुद्धर्तार इति।'

'कियद् हि दुःखं सहन्ते एते मूर्तिपूजकाः अन्धविश्वासमुद्रितलोचनाः! ......सहन्ते निःशब्दं......मन्यमानास्तत् स्वस्वप्राक्तनकर्मविपाकं......अतश्चाप्रतिकार्यम्!......न जानन्ति एते वास्तविकं कारणं तस्य।......अनेन एतेषां धर्मेण......वस्तुतः एतदुपजीविभिः परप्रवंचनानिष्णातैरात्मनं प्राक्तनसुकृतवशात् श्रेष्ठतमं प्रोद्घोषयद्भिः शठैः ब्राह्मणैः स्वयं कृत्वाऽपौरुषेयत्वेन प्रख्यापितेन......एतावन्तः संमोहिता एते......यत् नोत्सहन्ते एते ज्ञातुमपि तत्।'

'वस्तुतः अयं मूर्तिपूजकः धर्म एवैतेषां दुःखस्य कारणम्।'

'अयमेव हि'–शनैः शनैस्तंद्रायां निमज्जत् तत् अवशमिवाग्रेऽचिन्तयत्–'एतदन्यतमैः धूर्तैः ब्राह्मणैः स्वयं चिन्तयित्वा एतन्मध्येऽपौरुषेयत्वेन प्रसारितः तत्सहकारिभिः, तैरिव परोपजीविभिः, वस्तुतः निर्बलैरपि निर्बलतरान् एतानुपलभ्याऽऽत्मानं सबलत्वेन साडंबरं प्रख्यापयद्भिः, वस्तुतः (साधारणप्रजा–) जनशोषकैरपि आत्मानं निःसंकोचं नराधिपत्येन प्रख्यापयद्भिः, वितस्तिमात्रविशालभूभागशासकैरपि आत्मानं 'चतुःसमुद्रवलयांकितपृथ्वीपति'–त्वेन उद्घोषयद्भिः संरक्षितश्च......वितत्य प्राक्तनवादं...... करोति एतान् उपलब्धमात्रसंतुष्टान्, समृद्धतरं जीवनं यापयितुमनुत्सुकान् वंशपरंपरागतां समाजव्यवस्थां आधिदैबिकीं मत्वा बहुमन्यमानान्, भोगान् अश्लीलान् स्वपुरोहितानां स्वाधिपानां च तत्सुकृतप्रदत्तानिति निराक्षेपमंगीकुर्वाणान्, तद्दुश्चरितान्यपि 'लीलाः श्रेष्ठानाम्' इति सकौतुकं बहुमन्यमानान्,–किं बहुना,–ग्रामचतुष्पादनिर्विशेषान्।'

'प्रहत्य मूले एवास्य एतेषां धर्मस्य....सगुणेश्वरसिद्धान्ते......विनाशय्य सर्वजनसमक्षं एतदीश्वरविग्रहान्......प्रदर्शयिष्यामः एतेभ्यः कियतः अन्धविश्वासस्य दासीभूय एतैः स्वात्मा एतावत्कालपर्यन्तं प्रवञ्चित इति।.... अनादिकालात् महता आदरेण महता भक्तिभावेन संपूजितान् ईश्वरविग्रहान् निष्प्राणपदार्थनिर्विशेषं विनश्यमानान् साक्षात्कृत्य ध्रुवं दौर्बल्यं प्राप्स्यति एतेषां स्वे धर्मे विश्वासः।......एतेषां वर्णाश्रमव्यवस्थात्मकं तमेनं धर्माभासं

तदन्धविश्वासमात्रमूलकं प्रदर्शयन्तः, विनाशयन्तः, सद्धर्मपथं प्रदर्शयिष्यामः वयम् । अर्जयिष्यामः अजरामरां, कीर्ति सद्धर्मप्रसारकः······।'

'साहसिक !'–

अकस्मात् अच्छिनत् तस्य तां विचारशृंखलां एकः······गगनांगणादिव पतितः, दिगन्तादिव समागतः, विदीर्य भूमितलमिव समुद्गतः, श्रान्तश्रान्तोऽपि खेदजडोऽपि अनुपेक्षणीयप्रभावः धीरगंभीरः एकः संबोधनशब्दः ।

'मूढ !–'

अनुपदमेव आगतः अपरश्च प्रैरयत् तं······समाकर्ण्य तं निन्दाव्यंजकं शब्दं सहसा विलीनतन्द्रं, क्षणमात्रमविश्वसन्तः स्वकर्णयोः, क्षणमात्रान्तरं विस्मितं, क्षणमात्रानन्तरं क्रोधविह्वलं, उत्थितुं सहसा स्वशय्यायाः, धर्तुं हस्ते स्वं आजन्मसहचरं खड्गं ।

व्यापारयितुं च स्वे आकुञ्चिते तैक्ष्ण्यमस्वाभाविकमुपगते नयनेऽभितः ।

यदा तु ते······प्रज्वलत्कनीनिके······प्रदर्शयामासतुस्तस्मै मन्दनैशदीपप्रभया क्षीणक्षीणया सप्रयासं प्रकाश्यमाने दाक्षिणात्ये कोणे पटप्रासादस्य निश्चलमवस्थितं, (–इयतो पूर्णा आसीत् तस्यागन्तुकस्य निश्चलता यत् क्षणमात्रं सः सम्राट् अमन्यत तं मूर्तिमेव !–), निर्निमेषाभ्यामचलाभ्यां निर्विशेषाभ्यामपि अनिर्वचनीयप्रभावाभ्यां नयनाभ्यां तमेव एकलं ध्यायन्तं, केवलं ध्यायन्तमपि वदन्तमिव, न केवलं वदन्तं अपि तु अपवदन्तमिव भासमानं, स्वतः स्फुरन्त्या नेत्रदीपकप्रभावयाऽपि अनरुंतुदया प्रभया समुद्भास्यमानवपुषं, अनतिस्थूलमनतिकृशं साधारणप्रमाणं, गौरवर्णं, धवलमूर्धजं विशालवलितभालप्रदेशं, सुनासं, दृढाऽऽबद्धौष्ठपुटं, धवलश्मश्रुलमुखं, निशीथसमीरस्पृश्यमानाऽऽरक्तवाससं, दक्षिणेन करेण जयमालां वामेन च म्लानपुष्पपूर्णं कमण्डलुमेकं वहन्तं भारतीयमिव प्रौढवयसं कंचित् पुरुषं······तदा विस्मय एव एकछत्रमराजत तस्य मानसे कतिपयक्षणपर्यन्तं······हठादपहरन् तस्य सामर्थ्यं······कायिकं वाचिकं बौद्धिकञ्च ।

अन्वजानात् तमुपयोक्तुं तत् अन्ते······कथमपि ।

अनुज्ञातश्च तेन तथा·········स प्रायतत अभिव्यक्तुं तं समुच्चार्य कथं कथमपि······'कथं······आगतः त्वमत्र ?······कः······कः······त्वम् ?' इति ।

'साहसिक !'–यतमानस्यैव तस्य कर्णपथं प्राप स एव धीरगंभीरः

संबोधनशब्दः ।···समाचकर्ष च तस्मात्···निशम्य तत् यथार्थं (–साहसिक एवासीत् हि यवनसम्राट् सद्धर्मप्रसारकमन्योऽपि वस्तुतः–) अपि अधिक्षेपव्यञ्जभादुःसहं संबोधनं सहसा प्रज्वलितक्रोधात्···तामेव पृच्छां दुष्प्रसहेन वेगेन······'कस्त्वं रे ?' इति रूपेण ।

'अहमस्मि भारतीयः !' आकर्णयामास सः तत् क्षणमेव प्रतिवचनं······ साभिमानमिव प्रोच्चारितम् ।

'भारतीयः ?'–सकुत्सं पप्रच्छ यवनराजः········व्यञ्जयन् भारतीयत्वं तन्मतेनाऽऽसीत् लज्जाजनकं·····न तु अभिमानास्पदमिति ।

'आम् !······भारतीयः !······(सस्मितं) परंतु–न हरदत्तसमः, अपि तु–वास्तविकः भारतीयः·····जयपालसदृशः' ।

('अहो ! जानाति अयं फकीरः संन्यासी नवीनतरा अपि घटनाः !'– क्षणमात्रं व्यस्मयत स यवनाधिपः·····आकर्ण्य तां तस्याभिमानगरीयसीमिवोक्तिम् ।)

'आगतोऽस्मि·····इतः गमनात् प्राक्·····अत्र·····विलाययितुं तवातिक्रम्य सर्वा मर्यादा आध्मातं, परपीडकं अहंभावं राजसं'–मोहित इव तस्य मेघगंभीरेण स्वरेण, प्रभावित इव तस्यात्मविश्वासेन, अभिभूत इव तस्य व्यक्तिवैशिष्ट्येन·····स यवनसम्राट् साश्चर्यं परिलक्षयांचकार आत्मानमनिच्छुकमपि शृण्वन्तं तस्याऽऽगन्तुकस्य वचः अवशमिव ।

'किं मन्ये विशेक्ष्यसि स्वमभिधानमजरामरैरक्षरैः पृष्ठे मानवेतिहासस्य (–विनिर्दिश्य खड्गं–) अनेन (सोल्लुण्ठं) अभूतपूर्वसदृशस्यापारैश्वर्यमण्डितस्य तौरुष्किकपारसीकस्य साम्राज्यस्य प्रस्थापयिता–इति ?,···(सकुत्सं) एकमात्रस्य सद्धर्मस्य निष्प्रतिरोध्यः प्रसारक इति ?,········(सोपहासं) असंख्येयानां भारतीयानां समुद्धर्ता इति ?

('कथं खलु अयं भिक्षाकः एवं विदांचकार मम मनोगतं·····?' व्यस्मयत यवनसम्राट् मंत्रबद्ध इवावस्थाय निश्चलं आकर्णयन् तस्य वचः आगन्तुकस्य) ।

'शृणु रे मूढ·····उपहसनीयतां लंभयिष्यसि त्वं नूनमात्मानं भाविनां मानवेतिहासकाराणामितिहासेषु·······कथोपाख्यातॄणामुपन्यासेषु·····एकः रक्तपिपासुः साहसिक इति,·····एकः वस्तुतः क्षुद्र, उपलंभानुकूलासु परि-

स्थितिषु किंचित् साफल्यं संवर्द्धने राज्यस्य पैतृकस्याऽऽध्मातहंभावः, मूर्खः साहसिक इति,·····स्वमन्यथागृहीतं धर्मं अन्यान् बलाद्ग्राहयिता एकः साहसिक इति,········संख्यातीतान् निरपराधान् स्वस्वकर्मणि अभिरतान् संतुष्टान् भारतीयान् निष्कारणमेव पीडयित्वा कृत्वा च हताहतान् आत्मानं ईश्वरप्रेषितं तेषां समुद्धर्तारं मन्यमानः आत्मवञ्चितः, एकः साहसिक इति'–आरभत स्वरस्तस्याऽऽगन्तुकस्य लब्धुं तैक्ष्ण्यं शनैः शनैः·····हित्वा खेदमान्द्यं प्रारंभिकम् ।

'(सकाकु) महती खलु तवानुकम्पा एतेषां सनातनार्यधर्मानुयायिनां भारतीयानां उपरि,·····तव·····तद्धनदाराद्यपहर्तुः !······(सवितर्कं)····· अथवा ·····अथवा·····न जानासि कदाचित्·····न शक्नोषि कदाचित्····· त्वं·····ज्ञातुं–यत् तवेयं अनुकम्पा नातिरिच्यते क्षुद्रात् आवरणात् सुखदात् अहंभावतर्पकात् तव प्रचंडया दावानलसदृशया परधनपिपासयाऽऽत्मजुघुक्षया ऊढात् ।·····यदि नाम त्वं न शक्नोषि ज्ञातुं एतत् स्वतः स्पष्टं सत्यं····· का आशा तर्हि त्वं एतेषां दुःखानां वास्तविकं कारणं ज्ञातुं शक्ष्यसि इत्यस्य ?'

(बलात् प्रेर्यमाण इव केनचित्) 'त्वं मन्ये–एतेषां धर्मः एतेषां दुःखस्य कारणमिति ।·······श्रृणु रे मूर्ख !········एतेषां स्वधर्मात् भ्रंश एव एतेषां दुखस्य कारणम् ।······(सखेदं) एते सर्वे····वास्तविकात् सनातनार्यधर्मात् बहोः कालात् प्रभृति परिभ्रष्टाः (सोद्वेगं), समुल्लंघ्य स्वस्ववर्णाश्रममर्यादाः यथेच्छं जीवनं स्वं यापयन्तः,·····वैश्यवृत्तिं (सोद्वेगं) ततोऽपि निकृष्टतरां पाशवीं वृत्तिं अनुसरन्तः विस्मृत्य तस्याऽऽभ्यन्तरं'·····प्राणरूपं·····सत्यं रूपं·····बाह्यमेव·····निष्प्राणमेव·····रूपं शुष्क-यांत्रिक-कर्मकलापात्मकं भजमानाः, कृत्वा च तथा कृतार्थंमन्याः········धन्यंमन्याः·····यत् दुःखं सहन्तेऽनवरतं·····तत् (तटस्थमिव) स्वकृतानुसारमेव ।'

'स्वसुकृतानुसारमेव लप्स्यन्ते भाविनि काले·····(स्वगतमिव ममापि योगदृष्टेर्विषयतामेतावत्कालपर्यन्तमनागते)·····स्वं समुद्धर्तारम् ।'

'तन्मा वृथाऽऽयासय आत्मानं कल्पयित्वा एषां दुःखहर्तारं स्वाभिन्नम् । ·····वस्तुतः·····मूर्तिमान् रजोगुणः, परधनदाराद्यपहरणैकध्येयः, आध्मा-ताहंभावः, आत्मप्रवंचकस्त्वं·····एषां तमोगुणपंके निमग्नानां समुद्धर्ता–

इत्येषा कल्पनैव स्वव्याहृता ।'

'यत्तु अचिन्त्यः ईश्वरविग्रहान् निष्प्राणपदार्थनिर्विशेषान्......तदपि तेऽहंभावदुर्विदग्धस्यानुरूपमेव ।......(उपदिशन् इव) ईश्वरविग्रहाः हि–'

'–अथवा–नापव्ययिष्ये स्वं समयं अधिकतरम् ।......न त्वं शक्ष्यसि वेत्तुं तत्'–सहसा विरज्य इवोपदेशात् क्षणमेकं......अवदत् सः ।

'मया एतावत्कालपर्यन्तं यत् यदुक्तं तदपि......कदाचिदेव शक्ष्यसि वेत्तुं त्वम् ।......विदन्नपि न शक्ष्यसि हातुं पन्थानमेतावत्कालपर्यन्तं त्वयाऽनुसृतं......पन्थानं विनाशस्य ।......इच्छन्नपि न शक्ष्यसि......बलात् प्रेर्यमाणः प्रकृत्या संस्कृत्या चानुसर्तुं पन्थानमेतावत्कालपर्यन्तमनुसृतम् ।......विनाशयिष्यसि सर्वं निरपवादं......आत्मानं च......अन्ते......दावानल इव......दावानल इव ।'

–वदन्नेव एवमारभत यातुं विलयमवकाशे......क्रमशः विरलीभवन्मूर्तिः,......अयात् विलयमात्यंतिकं कतिपयक्षणानन्तरमेव......पश्यत एव दिङ्मूढस्येव मंत्रबद्धस्येवावस्थाय निश्चलं तमेवैकलं विस्फारितेक्षणं किंचित्विमुद्रितमुखं पश्यतो यवनराजस्य,......अहाच्च अन्ते तं तस्मिन् विश्रामकक्षे तटस्थनिशादीपमात्रद्वितीयम् ।

'खबरदार !'–विभेद्य नीरवं संनिवेशवातावरणं सहसा कर्णयोरापतितेन पटप्रासादरक्षकस्य कस्यचित् आह्वानेन......अथ......चिरात् प्रकृतिमापादितः स यवनाधिपः व्यापारयामास स्वे विस्फारिते आरक्ततरे लोचने विश्रामकक्षे,......नोपलेभे कमपि तत्र......ऋते तस्य प्रियसखात् खड्गात्...अवलोक्यैव तस्यावस्थां मंदीभूतात् प्रदीपात्,......प्रावर्तत उपगन्तुं द्वारं कक्षस्य प्रष्टुमिव रक्षाधिकृतं किमपि,......व्यरमत मध्येमार्गमिव दृष्ट्वा तस्मिन्नेव दक्षिणे कोणे विश्रामकक्षस्य निपतितं पुष्पदलमेकं,......जग्राह,......अवालोकत तत् सुचिरं प्रदीपप्रकाशे किंचिदाकुञ्चितलोचनः,......प्रत्यभिजानात् तत् तस्यैवाऽऽगन्तुकस्य कमण्डलोः निपतितमिति,......आरभत च विचारयितुं किमपि किमपि......मृद्नन् तत् खड्गमुष्टिसंघट्टनकठिने ।

'एवं तर्हि......आसीत् स फकीरः......वास्तविकः,...न प्रातिभासिकः,......न मम परिश्रान्तेन विश्रामातुरेणाथ च विश्रमितुमसमर्थेन, रुग्णेऽस्मिन् शरीरेऽवस्थाय भव्यं स्वप्नं पश्यता, चित्तेन कल्पितः,–आरभत विचारयितुं

सः······तिष्ठन् दीपसंनिधावेव ।

'परन्तु······परन्तु······यद्यासीत् स वास्तविकः तर्हि······कथंकारं अलभत सः प्रवेशमत्र······मम सैन्यनिवेशे··मम पटप्रासादे······मम विश्राम-कक्षे······विना मेऽनुज्ञाम् ?······तया विना तु ममात्युच्चः अधिकारी अपि ······अमात्यप्रमुखोऽपि न प्रभवति कर्तुं तथा !'

'एवमेतत् !······एवमेतत् !······सहसा उद्गिरति स्म सः······चिरात् लब्धप्रत्युत्तर इव तस्य यक्षप्रश्नस्य ।······'एवमेतत् !······स्वस्य पैशाचिकेन सामर्थ्येन एव कर्तुमेवं प्रभवति स्म सः !······(दशन् स्वमधरोष्ठं)······ आसीत् स कोऽपि भारतीयः भिक्षाटः पैशाचिकलीलानिष्णातः (–क्षणमेकं निक्षिप्य द्वेषमिव वमन्तीं दृष्टिं दिशि मथुरानगर्याः, तस्य पटप्रासादे सद्यो-घटितायाः घटनायाः नितान्तमनभिज्ञायाः, आवृत्यात्मानं नक्षत्रखचितेन तमीरल्लकेन रोधसि यमुनायाः सुखं······बालकनिर्विशेषं······प्रसुप्तायाः–) अस्याः केनापि धूर्तेन मूर्तिपूजकेन क्रीतः प्रेषितश्च मम संनिधौ खण्डयितुं मम मनोबलं व्यावर्तयितुञ्चैवं मां श्वोभाविनः आक्रमणात्········आत्मनः पैशाचिकलीलया ।

–एवं यत्–आधिदैविकेन सामर्थ्यविशेषेणोपपन्नं, सत्प्रयोजनमुररीकृत्यै-वोभयपक्षहितकरं तत् समक्षं प्रादुर्भूतं तपोनिष्ठं तं संन्यासिनं······द्रव्यक्रीतं परवंचनानिष्णातं पैशाचिकमंत्रतंत्रविदं क्षुद्रं भिक्षाटं स अमन्यत यवनाधिपः ······न तत् विस्मयकरम् ।

सुरूपमपि बिंबं······विरूपमेव प्रतिबिंबितं करोति विकृतः दर्पणः ।

अभिगृहीतश्च तया······तयैव केवलया······कल्पनया प्रतिक्षणं दृढतरी-भवन्त्या··आरभत शनैः शनैः ज्वलितुं क्रोधेन······(अनिच्छन्नपि केनचित् बलवत्तरेण बलात् प्रेर्यमाण इव)स्मृत्वाऽसकृत् तस्यागन्तुकस्य ताः ताः कटूक्तीः······श्रवणक्षणे विस्मयपारवश्यात् अश्रुतकल्पाः,······आरभत······ सापशब्दं प्रमृद्य तत् पुष्पदलं वामेन पादेनोपानदगूढेन······चालितुं तस्मि-न्नेव कक्षे,···असकृत् निक्षिपन् वमत इव क्रोधहलाहलं दाहकान् आरक्तान् कटाक्षान् दिशि नगर्याः अदृश्यप्रायायाः,······आरभत च–'लप्स्यते फलम-नुरूपं स्वकुचेष्टितस्य श्व एव–' एवमादि किमपि किमपि अस्फुटं जल्पितुम् ।

इयान् प्रचण्ड आसीत् तस्य सः क्रोधः·····यत् तस्य वैयक्तिकः परिचारकोऽपि·····अनुमाय स्वं दैनंदिनपरिचर्यासमयमासन्नकल्पं तत्कक्षद्वारमुपगतः·····विलोक्य तं तदवस्थं भीतभीतः·····अमन्यत स्वं क्षेमं ततः अपवर्तने एव निःशब्दे ।

अहो·····परंतु·····तस्यात्मभावनागूहनसामर्थ्यम् !

यदा हि सः प्रहरमात्रानन्तरमेव निर्जगाय स्वपटप्रासादात् व्यूढलौहकवचः,·····स्वीचकार प्रणामान् सेनादलप्रमुखानां, कवचधारिणां, शस्त्रभीषणानां, बहिरागमनं तस्यावस्थाय यथाधिकारं प्रासादद्वारसमीपे प्रतिपालयतां,·····आरुरोह स्वं प्रियं तुरंगमं व्यावर्त्य ग्रीवामागमनं स्वामिनः अवलोकयन्तं अवलोक्य च ह्रेषाभिः स्वोत्साहं व्यञ्जयन्तं,·····उपजगाम स्वं बलं संनद्धमाक्रमणाय,····स्वीचकार स्तोकमवनमय्य स्वं शिरः जयघोषणाः –'फखरे सलातीन जिंदःबाद'······'शहंशाह महमूद जिन्दःबाद !'–इत्याकारकः,·····जगर्ज रणावेशघर्घरस्वरं 'दीन·····दीन·····दीन' इति उन्नमय्य स्वं खड्गं उद्यत्भास्वरकरोद्भासितधारं,·····निनाय च तत् क्षणमात्रानन्तरं ······'दीन·····दीन·····दीन'–इत्यनुगर्जत् दिशि मथुरायाः·····तदा न खलु कोऽपि·····न खलु एकोऽपि·····शशाकानुमातुं तद्भावनाक्षोभं प्रचण्डं व्यतीतरात्रिघटनामूलकम् ।

व्यानञ्ज खलु तस्य तं एकला उच्छूनतरा नाडी एव नातिविशालं वलितं भालप्रदेशं तस्य कलंकयन्ती ।

सा च आसीत् तस्य लौहेन शिरस्त्राणेनाऽऽवृता·····दुर्लक्ष्या !

इयान् प्रचण्डः·····परंतु···आसीत् तस्य क्रोधः, तस्मात् भावनाक्षोभात् परिणतः·····यत् अभूतपूर्वसदृशेन प्रभंजनवेगेन नयन् स्वं बलं समुद्धृतकुन्तसांद्रविपिनदन्तुरं, असंख्यतुरगखुरखन्यमानात् धरातलात् अनवरतं समुत्पतद्भिः तिर्यक्प्रविशद्बालरविकराऽऽरक्तैः, धूलिपटलैरधिकाधिकमाव्रीयमाणं,·····सः कतिपयक्षणेष्वेव प्राप तस्याः नगर्याः प्राकारस्य अनेकद्वारस्य (–सुलभप्रवेशया हि भाव्यं देवनगर्या·····विशेषतः नंदनंदननगर्या।·····न किम् ?–) सदाऽपावृतं महाद्वारं·····आकर्ण्य नगर्याः समीपे एव क्लृप्तस्य महतः कस्यचित् राज्ञः (–अहो तेषां बालोचिता सरलता,·····यद्वशात् न ते विदुः वार्त्तामपि यवनाक्रमणस्याऽऽदित एव !–)सैन्यसंनिवेशस्य समाचारं

कर्णोपकर्णिकया निशायां प्रत्यूषे एव स्वस्वनिवासस्थानेभ्यः निर्गत्य महाद्वाराद्बहिरागतैः, महता कौतूहलेन तद्गतिविधीन् अवलोकयद्भिः, तत्रत्यैः नागरिकैः, भारतवर्षस्य विभिन्नेभ्यः भागेभ्यरागतैरपि विभिन्न-वयोवेषवृत्तान्तैरपि विभिन्नभाषाभाषिभिरपि भगवद्दर्शनाभिलाषया सर्व-साधारणया तस्यां नगर्यामागतैः, आसन्नं विपत्प्रहारं दुःस्वप्नेऽपि अनाशंक-मानैः (अर्थादेव निःशस्त्रैः निष्कवचैः) तीर्थिकैश्चाकुलाकुलपरिसरम् ।

प्रविवेश च तदन्तः···तेनैव वेगेन·····क्षणमपि अकुर्वन् मनसि अकस्माद उद्भूतानि करुणकरुणानि क्रंदनानि तेषां·····अवलोक्य दूरात् तं स्वबल-शिरसि समुपतिष्ठमानं सकौतुकानां,···तादृशेन वेगेन प्रस्थितं सादराणां,··· समीपतरमागच्छन्तं विस्मितानां,·····समीपतमं प्राप्तं भीतानां,···इतस्ततः पलायितुं प्रवृत्तानां,·····अतिनिबिडतया जनसंघट्टस्य कर्तुं तथाऽपारयतां ·····प्रवृद्धातंकानां,·····आकर्ण्याऽऽक्रामकरणगर्जनाः प्रतिक्षणं समीपतरमुप-सर्पतीः भीत्याऽऽवृत्य स्वं स्वं मस्तकं बाहुयुग्मेन निपत्य च भूमौ आत्मानं रक्षितुं प्रयतमानानां,·······स्वल्पावकाशतया तथाकर्तुमपि अपारयतां,····· निशम्य वेदनाविलापान् तुरगखुरैः प्रताडितानां खड्गप्रहारैः लूनबाहुदण्डानां भल्लैः उरसि आहतानां स्वमित्राणां स्वबान्धवानां आक्रोशमुखरे तस्मिन् जनसंमर्दे वियुक्तानां दिग्भ्रान्तानां मुमूर्षूणां,····सह स्वबलेन निबिडवनेनेव दुर्भेद्येन·····सान्द्रेण ।

अन्तःप्रविष्टश्च तेन महाद्वारेण द्वारान्तरदशकेन च कर्णजपनिवेदितेन ·····व्याप सर्वामपि योजनविस्तृतां नगरीं स्वबलसागरेण दर्पदुःसहेन ।

कृत्वा च तां पूर्णतया विवशां·····अबलामिव भयविह्वलामाबद्धकण्ठ-हस्तपादां अत्याचारप्रतिरोधाक्षमां····गगनमध्यमनारूढ एव सहस्रकिरणे आदिदेश विशिष्य प्रशिक्षितान् स्वसैनिकान्·····प्रवेष्टुं तेषु तेषु देवालयेषु प्रतिरथ्यं नगरीं तां दुर्दैविनीं भूषयत्सु, समुत्प्रेक्ष्येव भाविनं विपत्प्रहारं भयमूकेषु,·····दूषयितुं मूर्तीस्तत्रत्याः गोमांसरक्ताद्यपवित्रैः पदार्थैः····· भंक्तुं ताः घनाघातैः निर्ममैः·····लुण्ठितुं तत्रत्यं सर्वमपि वैभवं नेयं तद-विपरीतं वा·····स्थापयितुं नेयं तत् सर्वमपि तन्निर्दिष्टे स्थानविशेषे नगर-महाचत्वरमध्यस्थिते सर्वजनदृश्ये,·····कर्तुं च तान् देवालयान् अन्ते धरा-शायिनः निरपवादम् ।

इयान् कठोरः आसीत् तस्य क्रोधविकृतमानसस्य संकल्पः दण्डयितुं तत्रत्यान् नागरिकान्, आश्रित्य कापुरुषोचितं पैशाचिकं तंत्रमार्गं खण्डयितुं तन्मनोबलं कुत्सितं प्रयत्नं तथाविधं कृतवतः······यत् न स अनुबभूव संकोचं खेदं वाऽणीयांसमपि दृष्ट्वा·····विशालतमं, दुग्धधवलशिलाखण्डनिर्मितं, गगनचुम्बिस्वर्णिमशिखरकलशभूषितं,·····स्नात्वैव कालिन्दीजले सद्यः विनिर्गतं कृष्णकमलमिव विकचं मनोज्ञं·····मन्दिरं श्रीमथुराधीशस्य कालियामर्दनस्य च,·····पश्यतामेवासंख्येयानां भूनिगलितपादानामिव निश्चलानां शरीरेण धृतानां वस्तुतो मृतानां नागरिकाणां भक्तानां (!) विस्फारितेक्षणानां उच्छुष्कमुखविवराणां,·····सैनिकैः अंशावतारैरिव दानवानां भूमिसात्क्रियमाणम् ।

अवलोक्य वा स्वपुरतः शनैः शनैरुपचितान्, अन्ततः पुरुषाधिकोन्नतान् राशीन्···रत्नानां मरकतपद्मरागादीनां, अज्ञातनामधेयैः भारतस्य दूरदूरतरेभ्यः भागेभ्यः दर्शनाभिलाषयाऽऽगतैः भावुकैः जनैः स्वेष्टदेवतायै उपायनीकृतानां, नगर्यां तस्यां तत्र तत्रावस्थितेषु विशालेषु प्राचीनेषु तदितरेषु च मन्दिरेषु स्थिताः विविधाः श्रीनाथमूर्तीः भंक्त्वा लौहघनाघातैरानीतानां,··· भाण्डानां सौवर्णानां राजतानां च, विविधाकाराणां, विभिन्नप्रयोजनानां, केषांचित् दैनंदिनपूजासु उपयुज्यमानतया भास्वरतेजसां, केषांचित् नैमित्तिकसमारोहेष्वेव प्रयुज्यमानतया मन्दप्रभाणां, सर्वेषामेव महार्हाणां, सर्वेषामेव हस्तकलाप्रदर्शनमनोज्ञानां, सर्वेषामेव स्वस्वदातृभावनाः निःशब्दं कथयतां,··· अन्यान्यानां च हस्तिदन्तादिनिर्मितानां चमत्कुर्वतां दुर्लभानां वस्तूनां दिवास्वप्नेष्वपि अनुत्प्रेक्षितानाम् ।

प्रदाय वा अनुज्ञां स्वसैनिकेभ्यः उच्चावचेभ्यः·····सर्वं तत् धनं राजकोषार्थं संगृह्यमाणं विज्ञायाऽपि सोत्साहं आज्ञां स्वनेतुः पालयद्भ्यः, अन्ते तस्य चिरस्मरणीयस्य दिवसस्य परिसमापितस्वकर्तव्येभ्यः, अनवरतसत्प्रयास (!) परिश्रान्तेभ्योऽपि मुखं तस्यापेक्षयेव कयाचित् अवलोकयद्भ्यः ·····अनुज्ञा अत्याकांक्षितां····लुण्ठितुं तां नगरीं यथेच्छं दिवसत्रयपर्यन्तम् ।

आकर्ण्य वा···स्वसेनासंनिवेशेऽपि रक्षकसैनिकमात्रसनाथे अस्फुटास्फुटं दिवसत्रयपर्यन्तं अहोरात्रं श्रुतिपथमापततः, विजयोन्मादप्रमत्तैः अनवरतगर्जनबर्बरस्वरैः यथेच्छलुण्ठनतृप्तैः उन्मत्तैरिव विकृतस्वरं हसद्भिः स्वसैनिकैः

भल्लैः सुतीक्ष्णैः तर्ज्यमानानां पितृवियोगव्याकुलानामनाथानां बालकानां करुणकरुणान् आक्रोशान्,·····कासांचित् पतिवियोगेन विदीर्णान्तःकरणानां, कासांचित् दृष्ट्वा स्वान् प्राणप्रियान् सद्यःविवाहितान् पुत्रान् आक्रामकात्याचारप्रतिरोधप्रवृत्तमात्रान् यमसदनं प्रापितान् उद्भ्रान्तानां, सर्वासामपि अवलोक्य स्वं सर्वस्वं तथा लुण्ठितं व्याकुलानां, नगरवासिनीनां नारीणां विलापान्·····आत्मरिरक्षिषामात्रातुराणां, कान्दिशीकं प्रधावतां, भ्रान्तचक्षुषां, भाग्यं स्वं निन्दतां, तीर्थयात्रिणां हठान्निगृह्यमाणानां प्राणभिक्षां याचमानानां, अनुरोधशब्दांश्च ।

निरीक्ष्य वा स्वपटप्रासादवातायनेभ्यः दिवापि (–स्यान्नामास्पष्टं–) दृश्यमानं गगनांगणप्रसृतमालोकं स्वसैनिकैर्दह्यमानानां नगरश्रेष्ठिजनप्रासादानां विशालानां, देवतायतनानां प्राचीनार्वाचीनानां, प्रतिरोधप्रवृत्तमात्राणां नागरिकाणां गृहाणां च······ सर्वेषां एव लुण्ठितपूर्वाणाम् ।

क्रोधविकृतमानसस्य हि कुतः संकोचः ?·····कुतः खेदः ?

तदवस्थ एव च निश्चिकाय····चतुर्थेऽहनि·····समुल्लंघ्य स्वां परिणामहितकारिणीं प्रवृत्तिं·····अतिवर्तितुं लक्ष्यं स्वाभियानस्य निर्द्धारितपूर्वं, सतुं चाग्रे हृत्प्रदेशे आर्यावर्तस्य·····साक्षात्कृत्य तस्य सामर्थ्यं, मथुरातुल्यायाः देवनगर्याः अनभिभवनीयत्वेन विख्यातायाः आक्रमणे लुण्ठने च प्रकटीभूतं, हतबलस्य । समादिदेश च स्वं बलं यथानिदेशं स्वं संनिवेशं प्रत्यागतं, अपरिमितधनलाभतृप्ततृप्तं चलितुमग्रे विना विलंबम् ।

तत्तु·····आदित एव स्वप्रियजनेभ्यः बहोः कालाद्वियुक्तं, तत्रापि अनवरतविदेशप्रवासविरक्तं, प्राप्याभूतपूर्वसदृशं साफल्यमंगीकृतेऽभियाने कृतकृत्यंमन्यं, सद्यः लुण्ठितं स्वं स्वं धनराशिमाप्तजनेभ्यः प्रदर्शयितुमुत्सुकोत्सुकं·····लब्ध्वा तस्यानपेक्षितं,–किं बहुना–अपेक्षितविपरीतं–'आदेशं'·····विस्मयमलभतानल्पम् ।

मण्डलमपि उच्चतराधिकारसंपन्नानां सैनिकानामधिकारिणाम् ।

इयेष च स्मारयितुं तं·····प्रतिदिनं विप्रकर्षं अधिकाधिकं अधिगच्छतः, तावत्कालपर्यन्तं तूष्णींभावमास्थितैरपि मूलतः अनतिस्नेहशीलैः, क्षुद्रतममपि निमित्तं नात्यसंभननीयं समुपलभ्याकस्मात् अपकारं सर्वविनाशकरं कर्तुमुत्सुकोत्सुकैः तैस्तैः भारतीयैः नृपैः परिवृतस्य·····स्वगृहराज्यसंपर्कमार्गस्य ।

इयेष,......परंतु न दधर्ष तथा कर्तुं दृष्ट्वा तस्य, स्वभावत एव दुष्प्राप्यस्य, तत्रापि मथुरालुण्ठनपूर्वरात्रेरारभ्य दुष्प्राप्यतरीभूतस्य, अत्युदग्रां मुखमुद्राम् ।

अमन्यत च स्वं क्षेमं तदादेशपरिपालने एव निःशब्दम् ।

तदादेशपरिपालनप्रवृत्तमात्रमेव (–अहो समुत्तेजकः प्रभावः पराक्रमणस्य–! –) अविन्दत यथापूर्वं उत्साहं नवनवीनानां भारतीयराज्यानामाक्रमणे ।

तथोत्साहानुप्राणितं तत् ।

आदौ......आचक्राम संपन्नं राज्यं कान्यकुब्जाधिपस्य, स्वकुलगौरवेण स्वसामर्थ्येन स्वधर्मानुरागेण दिगन्तविख्यातस्य,....जहर्ष परमुपलभ्य उदन्तं तदधिपस्य, कृतमहद्बलसंग्रहस्यापि सहसा भयाऽऽक्रान्तस्य, विस्मृत्य स्वं प्रख्यातगुर्जरप्रतिहारवंशोद्भवं (–तद्राजकविभिस्तत्समक्षं सातिशयोक्ति वर्णितं, तच्चारणैश्च तत्पुरतः असकृद्गीतं–), परित्यज्य स्वं नगरं कृतानेकसुरक्षोपायं कान्तारमेव समीपस्थं शरणीकृतवतः,......जहास सकुत्सं अवलोक्य तं कान्तारात् तस्मात् स्वयमेव निःसृतं, असकृत् प्रणम्य तस्य नेतारमवनितललोलशिरसा, समर्प्य तस्मै अपारं धनकोषं मदोद्धतद्विरदसंपदं च तस्मात् प्राणभिक्षां भिक्षमाणं, लब्ध्वा च तां धन्यंमन्यमानं ।

ततः प्रचलितं अपेक्षत महता औत्सुक्येन प्रतिरोधं तीव्रं दीर्घञ्चाध्यक्षात् दुर्गस्य मैनाकास्यस्य मार्गपतितस्य, अनहंवादिनोऽपि स्वधर्माभिमानित्वेन समस्ते आर्यावर्ते विख्याताद् भीमपराक्रमात्, (–मल्लो हि चिरात् अलब्ध्वा तुल्यबलं प्रतिमल्लं अन्ततो विमनायते एव–),......बह्वमन्यत स्वं भागधेयम् अनुभूय कतिपयदिवसानन्तरमेव एकस्मिन् धूलिधूसरितगगनेऽपराह्णे तेनाऽऽक्रमितात् प्रचंडात् दुर्भेद्यतया लोहकोष्ठं (–तत्कृतेऽविस्मरणीयम् ! –) अपि अतिशयानात् तस्मात् सान्द्रनिरन्तरमाराच वर्षारूपेण अनुरूपं प्रत्युत्तरं,......कल्पयामासावसाने तस्य दिवसस्य, आवृते चराचरे सूचिभेद्येनान्धकारेण, स्वं संनिवेशमभितस्तस्य दुर्गस्य, उत्प्रेक्षमाणं दीर्घकालिकमवरोधमवश्यंभाविनं तत्र,......आरभत श्रान्तमाहतबहुलं कथमपि विलीय अंके निद्रायाः द्रष्टुं स्वप्नं स्वदारादिकस्य तदभियानप्रत्यागमनहर्षमुखरस्य तल्लुण्ठितं धनं विस्मयविस्फारिताक्षं बहुमन्यमानस्य,......

जजागार सहसा घोरे निशीथेऽनुभूय नितान्तमनपेक्षितं तीव्रतरमाक्रमणं दुर्गसैनिकानां, समुद्घाट्य निभृतं दुर्गमहाद्वारं बहिरागत्य निःशब्दं जयजयकारेण भावनाक्षोभघर्घरेण दिङ्मण्डलं सहसा निनादयितुं प्रवृत्तानां, अश्वारूढानां समुद्यतखड्गानां आपीतवेषधारिणां रक्ततिलकभीषणभालपट्टानां कठोरमुखमुद्राणां दृढाबद्धौष्ठपुटानां,......अलभत पुनः स्वं मनोबलं कतिपयक्षणपर्यन्तं विनष्टप्रायं अवलोक्य सद्यः प्रज्ज्वालितलातशतप्रकाशे तेषां प्रचण्डपराक्रमाणामपि संख्यादारिद्रयं,......प्रत्याचक्राम सवेगं......'अल्लाहो अकबर! अल्लाहो अकबर! ......' इति रणगर्जनया स्वनायकगर्जनानुगर्जन्त्या दिङ्मण्डलं कंपयितुं प्रवृत्तं,...जघान तान् सर्वानेव प्राक् सूर्योदयात् अनिच्छयेव तस्मिन् अहर्मुखे चिरायमाणात्,......प्रविवेश स्वनायकादेशानुसारं मृतमिव स्तब्धस्तब्धं तं दुर्गं......रक्ताक्षं रक्तस्नातं रक्तस्नातखड्गभीषणदर्शनं ......साशंकं......समुत्प्रेक्षमाणमिवापरं आक्रमणं आकस्मिकं दुर्गान्तःस्थानां रिपुसैनिकानाम्,......अनुबभूव परमाश्चर्यं साक्षात्कृत्य तत् स्वोत्तेजितकल्पनामात्र निर्मितमिति,......बभ्राम सर्वस्मिन्नपि दुर्गे,......नालभत कमपि तदन्तः—ऋते बह्वीनां दुर्गमहाचत्वरमध्यभागे कल्पितानां धूधूकृत्य ज्वलन्तीनां चितानां समुच्चयात् पंक्तिबद्धात्,......अनुबभूव स्वमाश्चर्यं परिवर्तमानं विस्मये ज्ञात्वा ताश्चिताः पतिं स्वं स्वं रणक्षेत्रे पतितं स्वर्गेऽभिनन्दितुं तत्पूर्वमेव इहलोकात् प्रस्थितानां सर्वासामपि दुर्गान्तःस्थितानां नारीणां,...... लुलुण्ठ, क्षणमात्र एव विधूय विस्मयजाड्यं, तं दुर्गं यथेच्छं,......निर्जगामापराह्णे दुर्गात् सकुत्समुपहसत् रीतीः मूर्तिपूजके देशे प्रचलिताः (—कुतो हि लुण्ठकानां परभावनासमादरः ?—),......आरभत स्वं प्रवासं लुण्ठितनवधनभारमन्थरं......यथापूर्वम् ।

लुण्ठितधनभारमन्थरमपि अतृप्तं (—न जातु लोभः लब्धानां लुण्ठनेनोपशाम्यति-इत्येतदेव सत्यम् !—) च तत् निरपवादं विनायासं लब्धानां विजयानां मदेनमत्तं, अत्यकृत् स्मृत्वा तं नैशं वृत्तान्तं कालिन्द्यास्तीरे घटितं अहर्निशं निर्धूमं ज्वलता तदाधिमेनान्यमनस्कप्रायेणाभ्यनुज्ञातं......तत आचक्राम अष्णीदुर्गं मैनाकसमीपवर्तिनं सान्द्रबेतसवनमध्यावस्थितं दीर्घावधिकप्रतिरोधक्षममपि (—अहो दैवगतिश्चित्रा !—) अक्षमनरेशाधिकृतं,......जिगायतं विनैव खडगप्रहारं,......प्राक्रमत च उपसर्तं राज्यं

शर्वाधिपस्य जयचंद्रस्य······निःशंकं ।

इयान् प्रचण्डः कर्तव्याकर्तव्यविवेकविलोपकश्चासीत् आतंकः तस्य बलस्य तावता समयेनार्यावर्ते (—अत्यल्पमिदमुक्तं-वस्तुतः उदीचीने भारत-वर्षे—) विषसागरजलस्तोम इव सर्वत्र प्रसृतः यद्विहाय द्वित्रानपवाद-स्वरूपान् सर्वे एव औत्तराः भारतीयाः नरेशाः मुमूर्च्छुः तत्प्रभाविताः,······विसस्मरुः स्वं चंद्रसूर्यकुलोद्भवं (—राजाश्रयोपजीविभिः !—) महाकविभिः असकृद्गीतचरं,······भेजुः वैतसीं वृत्तिं,······अनसस्सुर्वा पला-यननीतिम् ।

शर्वाधिपः जयचंद्रोऽपि,······तस्मिन् परीक्षाक्षणनिकषे परीक्षितः कालेन निष्पक्षपरीक्षकेण,······प्रकटयामास आत्मानं तदन्यतममेव ।

तदपि अविलंबमेव ।

स हि निशम्यैव तदुपसर्पणसमाचारं स्खलितलुप्तमनोबलः कान्यकुब्जा-धिपस्य स्वसमाननामधेयस्य कुलपरंपरागतवैरभावस्यापि बिपत्समये तस्मिन् (—स्यान्नाम सद्बुध्मा !—) मैत्रीभावमुपगतस्य पलायनपरामर्शस्यानुसरणे एव कुशलं स्वं अमन्यत ।······अपमन्तुं कृत्वा एवं कीर्तिधनं प्रवृत्तोऽपि बहुमन्यमानः स्वं नश्वरं व्यावहारिकं धनं······सः, परंतु, निनाय तत् सहात्मना,······जुगूह चात्मानं सहतेन एकस्मिन् गहने कान्तारे······मूषक इव बिले रोटिकांशेन······न त्वलभत साफल्यं स्वे कृपणे प्रयासे ।······तन्नागरिकेषु तेन तेनापदेशेन भ्रमद्भिः चारचक्षुभिः स्वलक्ष्यस्य गतागतानि सततं सुनिपुणं निरीक्षमाणः तत्तदनुरूपान् पदक्षेपान् निक्षिपंश्च तन्नायको हि निर्दिदेश स्वं बलं शर्वनगरलुण्ठनप्रवृत्तं प्रवेष्टुं तस्मिन् कान्तारे सर्वाभिरपि दिग्भिः, अन्वेष्टुं तं तत्र सूक्ष्मेक्षिकया, बन्दीकर्तुं तं येन केनाप्युपायेन, निग्रहीतुं तस्य सैन्यं निरपवादं, राजसात्कर्तुं तस्य धनं, उपस्थापयितुं च सर्वमपि तत्समक्षम् ।

इयत् साफल्यमलभत तत्······अनभ्यस्तमपि कान्तारमार्गणे······पालने तस्यादेशस्य शर्वनगराद्बहिरेव स्वे कटके विश्राम्यतः यत् शशाक तत् कतिपयेष्वेव दिवसेषु बंदीकर्तुं तं शर्वनरेशं, शाययितुं तत्सैन्यं कान्तारक्षेत्रे एवाप्रबोधाय, अधिग्रहीतुं तदैश्वर्यं, अर्पयितुं च तत् सेवायां स्वनायकस्य ।

अपैक्षत च तस्यादेशं अग्रतः प्रचलनार्थम् ।

लुलुण्ठिषया प्रतिसाफल्यं वर्द्धमानयाऽऽक्रम्यमाणं, जिगीषया अविरतं तीव्रतरीभवंत्या प्रेर्यमाणं तत् नूनं ददावेव तिलाञ्जलिं स्थलकालादि-विचाराय ।

न तु तन्नायकः ।

स तु······अन्ततो गत्वा न्यूनीभूतक्रोधावेशः, अवलोक्य सहसा आत्मानं तावद्दूरं स्वगृहराज्यात्······स्वशक्तिमूलस्थानात्····आगतं सहसा सावधानः, मनसि कृत्वा समाचारान्·····कर्णेजपैरधिकाधिकमानीयमानान्·····भारतीय-राजानां, उपलभ्य सविस्तरं मथुरामहानगरीनिष्पीडनवृत्तान्तं शनैः शनैः जागरितस्वकर्तव्यबोधानां, गूढस्य पारस्परिकविचारविनिमयस्य सावधान-तरः,(–स्यान्नाम–प्रत्यहं प्रबलतरीभवंत्या, आत्मानं दावानलमिव विनाशक-मिव पयोदमिव उपकारकमपि प्रदर्शयितुं तं प्रेरयन्त्या, मनःप्रवृत्या अननुभूतचरया, नुद्यमानः–), निश्चिकाय समापयितुं तदभियानं तत्रैव, निर्वातितुं स्वं देशं विना कालातिपातं, आदिदेश च तत् तथा कर्तुम् ।

यत् तु–आदेशं तं तस्याकस्मिकं परिपालयत्, क्रोशशतदीर्घदीर्घं निम्नो-न्नतस्थलयायिनं मार्गं स्वमाक्रमत्, तत्, न कोऽपि भारतीयः नरेशः, न कोऽपि तत्समवायो वा, दधर्ष पीडयितुं आक्रमणैः प्रकटाप्रकटैः–तत् नूनं प्रमाणीचकार तस्य मार्गस्य 'मानव'–पदव्यपदेशार्हेण द्विपदेन एकेनापि रिक्तत्वं,······किं पुनः '–क्षत्रिय'–पदव्यपदेशयोग्येन भारतीयेन ।

यच्च······स्वं पैतृकं राज्यं निर्विघ्नं प्रत्यागतः, हर्षोन्मत्तैः प्रजाजनैः अभिनंदितः, धर्मगुरुप्रतिनिधिभिः सभाजितः तस्य नायकः सद्य एव बभूव व्यापृतः राजधान्यां अन्यासु च नगरीषु नानविधानां गगनचुम्बिनां प्रार्थना-मन्दिराणां भव्यानां च पथिकविश्रामशालानां निर्माणे, बहुविधानां राजस-भारत्नानां संग्रहे, असंख्यानां पाठशालानां च निर्माणे······तत् आपाततः संतुष्टस्यापि प्रसन्नस्यापि स्वनवसाम्राज्यप्रशासनव्यग्रमनस्कस्यापि वैषयिक-सुखसागरनिमग्नस्यापि तस्य······वस्तुतः······मथुराऽऽक्रमणपूर्वसंध्यायां आकर्णितैः, अरुन्तुदैः तस्य गूढसंन्यासिनः वचनैः तन्मात्रश्रुतैः प्रतिक्षणं 'पुटपाकप्रतीकाशं' पीड्यमानत्वम् ।

●

## दशमः परिच्छेदः

'या खुदा ! ······या खुदा !'–सहसा जगाद गद्गदस्वरं हताशः हतबलः भीतभीतः यवनसम्राट्······क्षणमेकमवलोक्याऽऽत्मानं······एकाकिनं अनपनीतरणवेषमेव उह्यमानं एकया उद्दामतुरंगदुष्प्रतिरोध्यता कदुष्णया रक्तया प्रवहच्छवभीषणदर्शनया रुधिरतरंगिण्या, कयाचित् खड्गात् (–अहो आश्चर्यम् !–) तस्यैवाजधस्रारं निःसरन्त्या,······क्षणमपरं एकाकिनमेव निरुच्छ्वासमाव्रियमाणं एकेन लूनानां व्यादाय, विदन्तं मुखं विकृतविकृतं तमेव उपहसतां, विस्फार्य शून्यमक्षिगोलकरन्ध्रं तमेव पश्यतां मुण्डकानां,······प्रसार्य करतलं अस्थिमात्रावशिष्टं बीभत्सशीतलकठोरस्पर्शं तमेव ग्रहीतुमनवरतं प्रयततां कंकालहस्तानां,······प्रताड्य तमेव अवमन्यमानानां विच्छिन्नानां निर्मांसानां पीतपीतानां शिशिरस्पर्शानां च पादानां,··· क्षणमपरं एकाकिनमेव उच्छुष्कमुखमवलोकयन्तमेव भूमिसात्क्रियमाणं एकेन गगनचुम्बिशिखरकलशानां केषांचित् कृष्णपाषाणखण्डनिर्मितानां केषांचित् हिमधवलशिलाखण्डरचितानां सर्वेषामेव भव्यदर्शनानां देवयायतनानां अभ्रंकषाणां च प्रासादानां तेनैव (–अहो आश्चर्यम् !–) असंख्यबाहुना सद्यःभूमिसात्कृतानां सकड्कडात्कारं तस्यैवोपरि शनैः शनैः निपततां समुच्चयेन प्रचण्डेन,·········क्षणमपरं········· एकाकिनमेव प्रयतमानमेव गोप्तुमात्मानं परिगृह्य गर्भासनं ताड्यमानं कैश्चित् कनीनिकापरिमाणैः कैश्चित् अक्षिगोलकपरिमाणैः कैश्चित् मुष्टितुल्यैः सर्वैरपि अरुंतुदै, कैश्चित् गगननीलैः, कैश्चित् रक्तारक्तैः, कैश्चित् पीतपीतैः, कैश्चित् कज्जलकृष्णैः, सर्वैरपि तेन (–अहो आश्चर्यम् !–) सहस्रांगुलिना विग्रहेभ्यः मूर्तीनां बलादपकृष्टैः, परिवृत्य तं सर्वतः अवरुद्धय तस्य पलायनमार्गं नीरंध्रं तिष्ठद्भिः कैश्चिद्विकृतस्वरं हसद्भिः कैश्चित् सापशब्दं निन्दद्भिः कैश्चित् सोरस्ताडं आक्रोशद्भिः सर्वैरपि क्रोधोन्मत्तैः सर्वैरपि मूर्तिपूजकैः सवेगं प्रक्षिप्यमाणैः रत्नैः प्रखरतापस्य माध्यन्दिनस्य

तपनस्य तापेन उष्णैः चकासमानैः,······क्षणमपरं च······एकाकिनमेव पणीकृत्य प्राणान् यतमानमेव मुद्रयितुं स्वं ओष्ठपुटं पाययमानं अत्युष्णं पीतारक्तं (–अहो आश्चर्यम् !–) तेनाकथितेनापि सौवर्णतया प्रत्यभिज्ञायमानं द्रवं निर्गन्धं चषकैरसंख्यै हस्तैः–हस्तैरेव केवलैः–अस्थिमात्रावशिष्टैः धृतैः ।

उन्मीलयामास स्वं नेत्रयुगलं भयातिरेकेण रोमाञ्चितशरीरः ।

अवलोकयामास च विस्फारिताक्षः आत्मानं प्रस्वेदक्लिन्नांगं उच्छुष्कतालुं निःसंवेदनहस्तपादं उत्तानशायिनं शय्यायां हंसपक्षतिकोमलायां स्वप्रियपर्यंकास्तृतायां उपरितनमशकहरीचित्रकल्पनायां निगडितनयनम् ।

अवलोकयामास ।······परंतु–न विशश्वास स्वेऽवलोकने······कतिपयक्षणपर्यन्तं······तथैव निपतितः······प्रयतमानः विनिश्चेतुं याथार्थ्यं स्वावलोकस्य अन्यतरस्य ।

विशश्वास······अन्ते······आकर्ण्य दूरात् निशान्तवातलहरीभिः प्रासादारामविकसत्सुमसौरभभारमन्थरगतिभिः प्रधूय वातायनजवनिकाः पारदर्शकाः शयनकक्षे तस्य निःशब्दं (सादरमिव)प्रविशन्तीभिः आनीयमानं··· अस्पष्टं ध्वनिं कस्यचिद्गायकस्य श्रुतिमधुरं नृत्यत्सुंदरीनूपुरझणत्कारसहक्नं वादित्रनादानुयातम् ।

अस्मयत च सहसा······नष्टोपलब्धावलंब इव ।

अस्मारयत् हि सः ध्वनिः······तं······तदीयैः (–आम् ! तदीयैः–) प्रजाजनैः, तस्य मथुराविजयस्य तृतीयं वर्षग्रंथिं बहुमन्यमानैः, अतीत एवाह्नि कृतस्य राज्यव्यापिनः महोत्सवस्य ।

स्मरन्नेव च तमभूतपूर्वसदृशं······प्रायतत······तिर्यक्वलितवदनः, निरीक्षमाणः निस्तंद्राभ्यां लोचनाभ्यां चंद्रकलां क्षीणक्षीणां चकासमानां सन्निधावेव शिखरस्य भव्यस्य राजकीयस्य प्रार्थनामन्दिरस्य······आगत्य मथुराभियानात् महता उत्साहेन तेन (–आम् !–तेन–) निर्मापितस्य······ श्रोतुं तं गीतध्वनिं विस्पष्टतरम् ।

प्रयतमान एवाथ आरभतावलोकयितुं सर्वाणि विधायकानि कार्याणि तेन स्वे बृहत्तरे राज्ये तावत्कालपर्यन्तं तत्र तत्र कारितानि, सान्त्वयितुं चाऽऽत्मानं 'न हि स दावानलवत् सर्वविनाशक एव,······अपि तु–पयोद इव उपकारकोऽपि,······अर्थात्–सद्धर्मानुयानिनां तस्य प्रजाजनानाम्' इति ।

अलभत च साफल्यं स्वे प्रय त्ने ।

(यत्तु—गूढसंन्यासिनस्तस्य उक्तिभिः (—अरुन्तुदाभिरपि सत्याभिः—) कोमलतमे भागेऽन्तःकरणस्य तथा दष्टोऽपि (—अत एव तु सः ददर्श स्वप्नानि तादृशानि असकृत् आ मथुराभियाननिवृत्तेः—)......सः......न शशाक एकवारमपि आकलयितुं तासां वास्तविकमर्थं गूढगूढं (किं पुनः परिवर्तयितुं स्वां जीवनयापनपद्धतिं वंशपरंपरागतां ?—),......तत् स्यान्नाम वैपरीत्यात् तन्मनसः रजोगुणप्रधानस्य, वैशिष्ट्याद्वा तत्संस्कृतेः (—यदि नाम सा संस्कृतिपदव्यपदेशार्हा !—) आक्रामकस्वभावायाः, विरोधाद्वा नियतेः (—भारतवर्षस्य !—), प्रभावाद्वा सर्वेषामेव एतेषां संमीलितानाम् ।)

सफलीभूतश्च इत्येव अलसालसः यापयितुं तं सुप्रभाते......न तद्दिनचर्यानुसारं श्रवणे समाचाराणां सर्वत्र व्यपदेशेन तेन तेनानलसं चरद्भिः आनीतानाम्,......अपि तु—निमज्जने एव सुखतंद्रायां......शनैः शनैः उपरि तस्य स्वमाधिपत्यं प्रस्थापयन्त्यां अवस्थाय तस्यां शय्यायाम् ।

इयेष ।......परंतु—न शशाक ।

मुहूर्तमात्रानन्तरमेव हि सः आकर्णयामास पदरवं कस्यचित् शयनकक्षे तस्य भीतभीतं प्रविशतः,......उद्घाटयामास किंचित् स्वे तंद्रिले नयने, ......अवलोकत दिशि पदरवस्य,......ददर्श आत्मनः वैयक्तिकं दासं द्वार एवावस्थाय तमवलोकयन्तं,......व्यानञ्ज स्वामनिच्छां दर्शनस्य कस्यचिदपि भृकुटिभंगेन,......अवरुरोध तं ततोऽपसरिष्णुं......अन्यस्मिन्नेव क्षणे उत्थाप्य किंचित् स्वं हस्तं,......पप्रच्छ च तं दिदृक्षुविशेषं दृष्टिक्षेपमात्रेण ।

निशम्य तु तस्मात् समुपसृतात् अधोवचनात् तस्य नाम निस्तंद्रः...... अन्वजानात् तं उपस्थापयितुमागन्तुकं तत्सेवायाम् ।

स हि आसीत् गुलाम मुहम्मदः......तस्य विश्वस्ततमो गूढचरः...... कतिपयमासपूर्वमेव तेन विशिष्य प्रेषितस्तस्मिन् मूर्तिपूजके देशेऽध्येतुं प्रतिक्रियाः, तावत्या कालकलयाऽवश्यंभाविनीः......उदीचीनानां भारतीयानां... तस्य मथुराभियानस्य तथा सफलमवसितस्य ।

चिरात् खलु स प्रतीक्षते स्व तस्यागमनं......दैनंदिनप्रशासनव्यग्रोऽपि ......विविधोत्सवव्यापृतोऽपि ।

अत्यधिकं महत्त्वं हि स ददौ (—अर्थादनुच्चारितं—) स्थित्यै तस्मिन्

देशे……एकमात्रे तन्नूतनसाम्राज्यवैभवमूलस्रोतसि……अहरहः परिणमन्त्यै ।

विज्ञाय तु तस्मात् जानुभ्यां भूमितलं गतात् अधोवदनात् तत्रत्यां स्थितिं सहसा सावधानः, उत्थाय शय्यायाः, सहजमिव कक्षवलभीमुपसर्पन्, आह निगूहितमनोभावः–'एवं तर्हि……कलिजयस्य सः नरेशः अश्रुतपूर्व-नामधेयः……किं नाम तस्याब्रवीः ?……आम्……नंद इति,……(सकुत्सं) अननुभूतास्मद्बलाघातः……अत एवाध्माताहंभावः……स्वदेशरक्षणक्षमंमन्यः ……उज्जुघोष तं कान्यकुब्जनरेशं……जयचंदं……एव……कृते तादृशस्य पराभवस्योत्तरदायिनम् ?……न केवलमुज्जुघोष,……अपि तु–अन्यान्यानां तन्मतानुसारिणां नरेशानां सहकार्येण तमाचक्राम,……जघान च समरे ?

'हं……परंतु……एतत् तु अस्माकं हितावहमेव ।……तत् किमिति अवदस्त्वं……महत् संकटमासन्नप्रायमिव लक्ष्यते भारतीये क्षितिजेऽस्मत्कृते इति ?'

'गरीबपरवर !'–अवदत् स गूढचरः,……हत्वा तं जयचंदं न किंचिदपि शशाम तेषां क्रोधः ।……प्रत्युत अवर्द्धत एवाधिकम् ।……स्वीचकार च नवीनमेव……अनपेक्षितमेव……स्वव्यक्तिमाध्यमम् ।'

'कथमिव ?'–अपृच्छत् तत्–स्वामी किंचिदाकुंचितलोचनः ।

'प्रेर्य तान् आक्रमितुं विनाशयितुं विनाशयितुं च एकैकशः सैनिकशक्ति-केंद्राणि स्वामिना दूरदर्शिनाऽनागतविधात्रा पादाक्रांते तद्देशभागे तत तत्र प्रस्थापितानि……प्राक्ततः प्रतिनिवर्तनात्–' प्रत्यवोचत् स गूढः पुरुषः ।

'एतावान् विमृश्यकारी सः नंदः ?'–अपृच्छदिव हस्तेन वामेन मृशन् स्वं श्मश्रुकलापं शुभ्रप्रायं यवनसम्राट् ।

'न नन्दः ।……अपि तु–अन्य एव कश्चित्……विधायकतरप्रवृत्तिः…… मर्मज्ञः……अनतिख्यातोऽपि जनप्रियः–……'पाल'……'पाल' इति नामधेयः कश्चित् ।'

'धर्मपाल'–इति–नामधेयः ?'–अपृच्छत् तत्स्वामी सहसा तैक्ष्ण्यं उपगतेन स्वरेण क्षणमात्रानन्तरम् ।

'न ।……न 'धर्मपाल' इति ।……'देव……'देवपाल' इति ।'

'तेनैव पालवंशेन संबद्धः ?

'व्यनक्ति तथा नामसादृश्यं तत्'–प्रत्यवदत् स गूणचरः, आरभत च

सविस्तरं वर्णयितुं तानि तानि आक्रमणानि तेन प्रेरितानि प्रकटानि गूढानि, क्षुद्राणि महान्ति······सर्वाण्येव परन्तु न केवलया यवनबलप्रतिष्ठाननिनाशयिषया निःसंदिग्धया······अपि तु—तद्भारतवर्षपुनःप्रवेशनिरुरुत्सया प्रबल याऽऽविष्टानि ।

'लभते च तेषु सहकार्यं नृपान्तराणाम् ?'—मध्य एवावरुध्य तद्वाक्प्रवाहं अपृच्छत् यवनेश्वरः······अधीर इव ।

'अभूतपूर्वसदृशं'—प्रत्यवदत् सः सेवकः ।

आकर्ण्य तत् इयती विकृताऽभवत् तत्स्वामिनः (आदित एव नातिप्रियदर्शना) प्रणांकिता मुखमुद्रा······स्मयमानाऽपि अनिर्वर्णनीयभावनाक्षोभमविलक्षणा······यत् अवलोक्य तां सहसा स्मारितः श्वापदस्य हिंस्रस्य क्षुधातुरस्य भक्ष्यं स्वं स्वसमक्षं अपह्रियमाणमवलोकयतः······सः वराकः स्पशः, विस्मृत्य भयवशात् स्वामिच्छां सविस्तरस्य वर्णनस्य नृपान्तरैः क्रियमाणस्य सहकार्यस्य,······सपदि अपगमने एव ततः स्वं कुशलममन्यत ······अर्थादेव प्राप्यानुज्ञां सविनयं प्रार्थितां तस्यान्यमनस्कस्य ।

वस्तुतः······कदा सः स्पशः प्राप तस्यानुज्ञां, अपजगाम च तस्मात् कक्षात्—नैव स यवनेश्वरः अजानात् ।······स हि······अवस्थाय वलभीद्वारे, निद्रायां मग्नायाः स्वराजधान्याः नैशदीपमालिकाभिः आलोकितासु शून्यशून्यासु रथ्यासु संचरतां नैशनगरीरक्षकाणां 'होशियार !'—शब्दान् अस्फुट प्रायान् आकर्णयन्नाम······मग्न आसीत् पर्यालोचने महत्त्वस्य समाचारस्य सद्यःश्रुतस्य ।

'सः नंदः सहकार्येण नृपान्तराणां आक्रामत जघान च समरे तं जयचंद्रं ······तद्वशंवदं'—इत्येतत् नासीत् महत्वपूर्णं स्तोकमपि दृष्टौ तस्य ।······ सः प्रत्युत । ऐच्छदेव पारस्परिकं तीव्रं कलहं प्रज्वलितुं मध्ये भारतीयानां नृपाणां (—सर्वेषामेव चतुःसमुद्रवलयांकितपृथ्वीपतिमन्यानां !—)······दग्धुं तत्सामर्थ्यं······कर्तुं च मार्गं तस्य भारतविजयाभियानस्य सुगमतरम् !

महत्त्वपूर्णमासीत् तस्य दृष्टौ······नंदस्य तस्य (—धर्मपालेन न न,······ देवपालेन—प्रेर्यमाणस्य) पदक्षेपान्तरं······यवनबलप्रतिष्ठाननिनाशयिषयाऽऽविष्टम् ।······तानि हि प्रतिष्ठानानि (संस्थापितानि तेन कर्तुं साकारं स्वप्नं स्वं योग्यतरेऽवसरे) महत्त्वपूर्णानि आसन्,······आसन् परंतु सबलान्यपि

निर्बलप्रायाणि तस्मिन् खण्डप्राये देशे······द्वीपानीव महासागरे उद्दामोर्मिशतव्याकुलाकुले ।······सुष्ठु स अजानात्–'विनाशितेषु तेषु भारतीयानां नरेशानामाक्रमणैः······आधार एव तस्य सद्यः प्रस्फुटितस्य तस्य हिमालयोभयपार्श्वव्यापकस्य तौरुष्किकपारसीकसाम्राज्यस्याभूतपूर्वसदृशस्य विनाशितः स्यात्······कुर्याच्च तं······तं······पारदेशिकं लुण्ठकमात्रं दृष्टौ भाविनां मानवेतिहासलेखकानां,······लुण्ठकमात्रं वात्याचक्रमिव······कुतोप्यागतं······कुत्रापि विगतम् !

सुष्ठ स अजानात् एतद्द्वयमपि······अर्थात् स्वमनस्येव ।

बिभाय च तस्मात् ।

नवीनैव दुराशंका······परंतु······उपरोक्तद्वितयादपि भीषणतरा······सहसासमुत्पद्यत मानसे तस्यानगतचिंतके,······जग्रास च तत्······कतिपयक्षणपूर्वमेव समाश्वस्तं······साफल्येन ।

आरभत तं व्याकुलीकर्तुं······आक्रुश्य तन्मानसे–'परिस्थितौ तस्यां परिणतायां ततोऽपि शोचनीयतराऽवस्था तस्य भवित्री ।······स्वभावत एवाक्रमणशीला, प्रकृत्यैव समुच्छलच्छारीरिकसामर्थ्यमत्ता, तेन स्वयं संवर्द्धिता, तेन स्वयं प्रशिक्षिता······तेन स्वयं स्वसद्धर्मप्रसारोन्मादमभूतपूर्वसदृशं लंभिता, नेतृत्वे तस्य तत्कालपर्यन्तमनुभूयाविच्छिन्नविजयमालां हृष्टा, सामर्थ्ये स्वे समुपजातविश्वासा, आत्मानमीश्वरप्रेषितं मन्यमाना, अनुभूतपरधनस्वादा, आस्वादितदाससुखा······तस्य सेना······साक्षात्कृत्य तं······स्वं नेतारं······स्वं स्वामिनं······स्वमादर्शं······तथाविधां शोचनीयामवस्थां लम्भितं,–तदपि भारतीयैः नरेशैः, तथा तया स्वयं असकृत् पराजितैः, अपमानितैः लुण्ठितैः······भवेत् खिन्ना······भवेत् किंकर्तव्यताविमूढा ।······परंतु क्षणमात्रमेव ।······क्षणान्तरे एव······आत्मानं वंचितं लुण्ठितं मत्वा क्रुद्धा, संहतिरिव पशूनां क्रुद्धानां यथेच्छाचरणा, विधूतानुशासना, परस्परकलहप्रवृत्ता······न केवलं विनाशयेत् तत् तस्य पैतृकं राज्यं,······यायाद्वा विलयं स्वयं,······अपि तु हन्यात् तमपि !'

'बलं हि बलिनः······अप्रयुक्तं विषयान्तरे······प्रयुनक्ति (अप्रेरितमपि) आत्मानं न केवले आत्मनि, विनाशयति च तमत्यन्तम्,······अपि तु तत्स्वामिनमपि ।'

प्राक्रमत च प्रोत्साहयितुं तं कर्तुं कठोरं कुठाराघातं मूल एव तस्या अनर्थपरंपरायाः ।……तदपि……विना कालातिपातम् ।

'तत्……अहं……अविलंबमेव प्रचलिष्यामि इतः सह सेनया नवीन-भारतीयप्रदेशविजिगीषामिषेण,……विनाशयिष्यामि चात्यन्तं (सतिरस्कारं) तेषां मूर्तिपूजकानां प्रयासं एकीभवनस्य तद्गर्भावस्थायामेव,'—अस्फुटमवदत् सः, वलभ्यां प्रविष्टः, प्रतिक्षणमारक्ततरीभवति पौर्वात्ये क्षितिजे सद्य उदितां तारकामेकां ध्यायमानः अन्यमनस्कतया ।

'यदि नाम……अहं साफल्यमधिगमिष्यामि अभियानेऽस्मिन् तस्य धर्म……देवपालस्य बंदीकरणे येन केनाप्युपायेन……' विचारयन् चैवं किमपि किमपि चिरमास्त तत्रैव……अनुभवन्नपि शैत्यं निशान्तसमीरस्यानुत्सुकः प्रवेष्टुं पुनः शय्यायाम् ।

दृढनिश्चयकठोरतरमुखमुद्रश्च……कथमपि निवृत्तः कक्षाभ्यन्तरे……आजुहाव स्वं सेवकं प्रताड्य एक वारं घंटां कक्षैकदेशे लम्बमानाम् ।

अवर्णयिष्याम वयं……अतः परं……कथं स तन्मुखेनादिदेश स्वां परिषदं मंत्रिणां समस्त्यां च उच्चतमसैन्याधिकारिणामुपस्थातुं तस्य सेवा-यामविलंबं,…कथं ते नैशमहोत्सवेभ्यः सद्यः प्रत्यागत्य शयिता अपि निशम्य आज्ञां स्वसम्राजः सहसा सावधानाः कृतरात्रिजागरा अपि निस्तंद्रा आरक्त-लोचना अनुपदमेवोपतस्थुः तत्सेवायां,……कथं सः, निगूढमनोभावः, अकथयित्वैव तेभ्यः निशान्तचरसमाचारं, सहजमिव, 'पर्याप्ता नूनं त्रैवार्षिकी विश्रांतिः कृते योद्धॄणां' इति सूचयन्निव, समुद्घोषयामास तत्समक्षं स्व-संकल्पं (—'स्वनिश्चयं' इति तु युक्ततरं वक्तुं—) नवीनस्य भारतीयस्याभि-यानस्य,……कथं ते, प्राप्याऽऽह्वानं स्वसम्राजः तादृशं किंचित् उत्प्रेक्षमाणा अपि, आकर्ण्य तस्य संकल्पं आदेशसमं चकितचकिता, अभवन् स्तब्धाः कतिपयक्षणपर्यन्तं,……कथं ते क्षणमात्रं मंत्रयित्वा परस्परेण साकं दृष्टि-क्षेपैः गूढगूढैरपि तत्स्वामिना सर्वदर्शिना परिलक्षितैः, दृष्ट्वा च मुखमुद्रां स्वामिनः निर्विकारामपि दुष्प्रधर्ष्यां, क्षणान्तरे एवाभिनंदयामासुः—तदपि अहमहमिकया—संकल्पं तस्य,……कथं ते तद्विसृष्टाः ततः स्वं स्वं मुख्या-लयमेव गताः, बभूवुः व्यस्ताः संकल्पितस्याभियानस्य कृते स्वस्वसेनादल-संनाहादि कर्तुं……कृते कृतसंकल्पस्य सम्राजः क्षणिकोऽपि विलंबः अना-

वश्यकः तत्पूर्तौ······युगकल्पः'–इत्येतत् सुष्ठु जानन्तः,······कथं प्राप्य तेषामाज्ञाः उचितेन तेन तेन माध्यमेन क्षणमात्रं विस्मिताः, ततश्च किंचिदनिच्छुकाः परित्यक्तुं गृहदारादिसुखं कृतेऽसिलतासुखस्य, ततश्च भीतभीताः संस्मृत्य रणपराङ्मुखानां योद्धॄणां कृते सम्राजा निर्धारितां कठोरतमां मृत्मुदण्डयातनां, ततश्च समुत्सुकाः समुत्प्रेक्ष्यावश्यंभाविनं धनलाभं आगामिन्यपि अभियाने······तस्य सैनिकाः,······निखिलेऽपि यावने प्रदेशे स्वं स्वं गृहं गताः,······समाश्वस्याश्रुपूरितलोचनान् दारादिकान् विविधैराश्वासनैः स्वस्वगृहेभ्यः विनिर्गताः, सप्ताहाभ्यन्तरे एवारभन्त समराभ्यासं स्वे स्वे संनिवेशे उत्साहापूरिताः,······कथं वार्त्तां तां स्वाभियानस्य प्रसारयामास यवनाधिपः माध्यमेन कृतकानां वणिजां देशाद्देशान्तरं प्रवसतां······सुलभभावनाक्षोभेण भारतीयेन मनःपिण्डेन सुपरिचितः······'हृतमनोबलः हृतकल्प एव द्वेषणः' इत्येतं सामरिकं सिद्धान्तं परीक्षितपूर्वमपि पुनः परीक्षितुमातुरः, ······कथं प्रातिष्ठत शीघ्रमेव गजनीनगर्वाः प्रसरत्प्रार्थनास्वरंनिनादिताया अपारजनसागरप्रोच्छन्नरथ्यायाः विनाशयितुं स्वसाम्राज्यप्राणसंकटं अंकुरावस्थायामेव,······कथं च प्राप प्रभञ्जनगतिः सप्ताहान्ते एव सीमाप्रदेशं शून्यशून्यं अनुर्वरं द्वेषणस्य······यदि नाभविष्याम भाजनं पुनरुक्तिदोषस्यारुंतुदस्य ।

भविष्यामस्तु तत् ।

अतः न वर्णयिष्यामस्ताः ।

वर्णयिष्यामस्तु······ततः परं घटिताः······नावीन्यपूर्णाः ।

यदा खलु सः······सावधानः······प्रविश्य तं सीमाप्रदेशं प्रारभत सर्तुमग्रे किंचिन्मन्दीभूतया गत्या दिशि दाक्षिणात्यायां······प्रहर्तुं······हृत्प्रदेशमार्यावर्तस्य यावच्छक्यं शीघ्रमातुरोऽपि परिहर्तुं कूटमाक्रमणं परस्य परं दक्षः······तदा व्यस्मयतावलोक्य तं प्रदेशं सर्वथाऽरक्षितं पांचनदेन नवीनेन नृपेण भीमपालेन,······अस्मयतानुमाय तं परित्यक्तं तेनावरोद्धुमाक्रामकबलं सीमाप्रदेशे एवोदीच्ये भारतीयेन नृपसमवायेन विज्ञप्तेनापि श्रुत्वैव तं समीपतममागतं सहसा भयातुरेण,······प्राक्रमत चाभियन्तुं अग्रे द्विगुणितेन रंहसा,······अलुण्ठन् पचेलिमगोधूमसस्यस्वर्णिमाभान् दिगन्तप्रसृतान् क्षेत्रीयप्रदेशान्, अस्पृशंश्च शून्यशून्यान् संवसथान् निर्जनान् देवालयान्

मूकमूकान् मार्गपतितान् ।

'असंख्यान् दीनारान् जेतुं बद्धपरिकरो द्युतकृत् हि समुपेक्षते एवावसरान् जेतुं शतं तेषां······अनायासाऽऽगतानपि ।

स उत्साहस्तस्य······प्रकृत्या संतुलितमानसस्यापि······इयाय क्षयं······साक्षात्कृत्याऽऽत्मनः अभियानमार्गं, तावत्कालपर्यन्तं अनुत्क्षिप्य खड्गं सकृदपि आक्रमितं अवरुद्धं महानद्या कालिन्द्या······पौर्वात्यपश्चिमात्यदिगन्तचुम्बिन्याऽतिविस्तीर्णपात्रया, क्रुद्धयेव संस्मृत्य स्वं दूषणं तेन मथुराभियाने तथा कृतं कलुषितोदकया, कृतनिश्चययेवावरोद्धुं तंउत्तालतरंगदुरुत्तार्यया, ······अवलोक्य परतीरे तस्याः कृतसंनिवेशं, दिगन्तप्रसृतं, माध्यन्दिनभास्करकरोद्भास्यमानकुन्तखड्गसहस्रदन्तुरं, सेनासागरं द्वेषणस्य पांचनदस्य······नेत्रसहस्रैः अवलोकयन्तमिव साभिमानं मार्गाक्रमणावरतिं तस्य, ईषत्श्राव्यैर्द्विरदबृंहितैराह्वयन्तमिव तं समरप्रसंगाय,······प्रेरयामास च तं शरणीकर्तुं तितिक्षां, तत् स्वभावाननुकूलामपि, विरन्तुं मार्गाक्रमणदुःसाहस्मात्, कल्पयितुं स्वं सविवेशमपि तत्रैव, प्रतीक्षितुं च योग्यमवसरं अवरोधातिक्रमणस्य ।

न केवलं प्रेरयामास तं,······अपि तु कारयामास तथा–······'सर्वनाशात् कालनाशः श्रेयान्'–तथ्यमेतत् सुनिपुणं विदुषा,······स्वामगतिकामवस्थां परंतु स्वसुतादपि (–किं पुनः स्वसैन्यात् ?–) रक्षता ।

'कः खलु मध्ये तयोरभविष्यत् विजयी तस्मिन् निःशस्त्रे निःशब्दे युद्धप्रसंगे तितिक्षयैव केवलयाऽहर्निशं अरक्तपातं युध्यमाने ?'–इमां जिज्ञासां तु वेधाः स्फुटमियेष रक्षितुमनुत्तरितामेव आकल्पान्तम् ।

स हि······अवलम्ब्य माध्यमं तद्गूढचराणां परबलपार्ष्णिभागचराणां ······सूचयामास तं, प्रतीक्षाकालेऽपि तस्मिन् स्वेन सैन्येन युद्धाभ्यासं कारयन्तं, आक्रमणसाफल्यार्थं परमेश्वराशीर्वादं याचमानमिवात्मानं प्रकटतः दर्शयन्तं,······अन्ते प्रथमस्यैव तस्य प्रतीक्षापक्षस्य······विषये भारतीयसैन्यदलानां, नवनवानां, तैस्तैः भारतीयैः नृपैः तन्मार्गावरोधकस्य पांचनदस्य द्वेषणस्य शक्तिसंवर्द्धनार्थं प्रत्यहं प्रेष्यमाणानां, नितान्तं सुरक्षितेभ्यः पार्ष्णिभागेभ्यः अहर्निशमागच्छतां, आगत्य च शक्तिं तस्य अनवरतं सवर्द्धयताम् ।

चकार च तं······'आक्रमणं युद्धस्य श्रेष्ठतरं अंगम्'–इत्येतं शस्त्रविद्या-

सिद्धान्तं सुनिपुणं जानन्तं······उत्सुकं परित्यक्तुं प्रतीक्षानीतिम् ।

स हि······प्रकृत्यैवाक्रामकः, आ जन्मन एव विलंबासहः, श्रुत्वा तं गूढचरसमाचारं बभूवाऽऽतुरः आक्रमितुं परतीरर्वातिनं परसेनासागरं याव-च्छक्यं शीघ्रमेव ।

तत्क्षणमेव हि स विवेद यत्—तथाऽनवरतं परिवर्द्धमानबलः सः पर-सेनासागरः शीघ्रमेव भवेत् दुष्प्रधर्ष्यः······अथ च तत्कृतेऽजय्यः······कुर्याच्च तं अन्ते स्खलितमनोबलं···अनन्यगतिकं······ततः प्रतिनिवर्तनमात्रशरणम् । ······का गतिर्भवेत् तद्बलस्य,······तावत्कालपर्यन्तं अपराजेयतया विख्या-तस्य, त्यक्त्वाऽभियानसंकल्पं मार्गमध्यादेव तथा स्वं गृहराज्यं निवर्तमानस्य ······अध्वनि क्रोशसहस्रादपि दीर्घतरे—एतदपि ।

न कदापि विसस्मार सः लोककथां, मूर्तिपूजकदेशे एव तस्मिन् प्रचलितां मुखेन अल्बरुनीसदृशस्य कस्यापि सभारत्नस्य तेन श्रुतचरां······त्यक्त्वाऽऽ-क्रमणमुद्रां स्वां गुहां शरणीकर्तुं धावतः मृगेन्द्रस्य शृगालसदृशैः······क्षुद्रैः श्वापदैः······तदुच्छिष्टभोजिभिः······कृतां दयनीयामवस्थां सविस्तरमुपवर्ण-यन्तीम् ।

आतुरश्च आक्रमितुं······आरभत अन्वेष्टुमनुकूलमवसरं······अनुकूलं मार्गं······चारनेत्रैः······चारकर्णैः······पारेशतैः ।

आरभत अन्वेष्टुं,······अन्वियेष चिरं,······न त्वलभत तदन्यतरं ।······ न केवलं नालभत अनुकूलमवसरं····अनुकूलं मार्गं,······अपि तु साक्षाच्चकार तं प्रत्यहं प्रतिकूलतरीभवन्तं·····मुसलधारं वर्षति जलमुचि·····प्रतिक्षणं दुरुत्तार्यतरीभवति च सरित्प्रवाहे ।

अथ व्यतीतेषु एवं दिवसेषु कतिपयेषु·····चिन्ताभारभुग्नेषु युगदीर्घेषु, ······निशीथे एकस्मिन्······स्वपटप्रासादविश्रामकक्षोपविष्टः, आपाततः परमेश्वरप्रार्थनामग्नः, वस्तुतस्तु किंकर्तव्यताविचार व्यापृतः, अन्यमनस्कतया शृण्वन् सद्यःप्रहृत-मध्यरात्रसंसूचक-सैनिकघण्टारवान् घोरेऽपि तस्मिन् वर्षाघोषे विस्पष्टतया श्राव्यान्·····स यवनाधीशः······आकर्णयामास अकस्मात् कोलाहलं तुमुलतुमुलम् ।

न मनश्चकार परंतु तस्मिन् आदौ·····विभावयन् तं निपतज्जलधारा-सहस्रमात्रनिर्मितं·····अथवा·····आदित एव प्रबलया, तत्रापि आरभ्य

विगतात् तस्मात् रोगाक्रमणात् प्रवृद्धसंवेदनशक्त्या, तत्रापि विगतेषु कतिपयेषु प्रतीक्षा दिवसेषु निरंतरजागरणश्रान्तया स्वबुद्ध्या कल्पितं···भ्रमम्।

कतिपयक्षणानन्तरं·····परिभाव्य तदविच्छिन्नत्वं समुपजातसंदेहश्च ·····तर्कवितर्काकुलितचित्तः·····अनिच्छन्निव·····परित्यज्य सुखासनं असुखदं·····शनैः शनैः प्राप स्वपटप्रासादमुख्यद्वारं,·····प्रविशज्जलार्द्रप्रवातक्लिन्नवेषश्व आरभत द्रष्टुं·····प्रयतितुं वा द्रष्टुं·····दिशि तस्य कोलाहलस्य, प्रतिक्षणं विजित्य वर्षाघोषं प्रवर्द्धमानस्य,·····दिशि परसेनासंनिवेशस्य·····सुखमवस्थाय पारेयमुनं तं तथापहसतः ।

आरभत·····परंतु न शशाक·····आदौ सान्द्रजलधाराजवनिकानिरुद्दृष्टिप्रसरः ।·····अथ शशाक महता प्रयत्नेन·····परंतु किंचिदेव ।····· शशाक द्रष्टुं तं सेनासंनिवेशं आकुलाकुलं·····प्रमथ्यमानमिव महत्या कयाऽपि अदृश्यया प्रमथिन्या ।

'किमिव स्यात् समापतितं तत्र?'-इति वितर्कयत एवाऽऽकुञ्चितलोचनस्य तस्य कर्णयोरापतत् अकस्मात्···'अल्लाहो अकबर !···अल्लाहो अकबर !' इति रणगर्जना,·····व्यलोपयच्च तस्य तर्कवितर्कजालं क्षणार्द्धे एव ।

प्रयतमानस्यैव च तस्य समुद्धर्तुमात्मानं विस्मयसागरात् पुरत अकस्मात् समुपातिष्ठत् जलस्नातः प्रहरी एकः,·····अभ्यनन्दच्च तं प्रणतोत्तमांगः वार्त्तया तद्बलविजयस्य ।

'शुक्रिया !·····मालिक !·····शुक्रिया !'—सहसा उदगदत् सः 'उपकृतोऽस्मि' भो उपकृतोऽस्मि·····तत्क्षणमेव निगृहीतस्वान्तः गूहिताकारः,··· प्रदर्शयन् आत्मानं···सफलकूटाऽऽक्रमणयोजनं···जगन्नियामकाय धन्यवादान् ददन्तम् ।

तथैव गूहिताकारश्च·····आगत्य बहिः·····क्षणमात्रानन्तरं समादिशत् स्वसेनाध्यक्षान्·····चकितचकितानपि प्रफुल्लितमुखमुद्रान्·····अवस्थाय बहिः पटप्रासादात् तस्मिन् आसारे तदादेशं सौत्सुक्यमपेक्षमाणान्·····उत्तरितुं उत्तुंगजललहरीशतदुस्तार्यमपि सरित्प्रवाहं·····कर्तुं च साहाय्यं अवशिष्टेन स्वबलेन स्वबलस्य, पारेतीरं पणीकृत्य प्राणान् तथा द्वेषणेन सह युद्धमानस्य ।

न केवलमादिशत्,·····अपि तु·····क्षणमात्रानन्तरं अनयत् तान् स्वयमेव·····सद्यःपरिगृहीतयोद्धृवेषः·····मुखधृतखड्गलतः·····दिशि रणक्षेत्र-

स्य······प्रतिक्षणं प्रबलतरीभवता प्राभातिकेन प्रकाशेन विस्पष्टं प्रकाश्य-मानस्य ।

नयंश्च······आरभत अनुमातुं तस्य, तेनानादिष्टस्यापि निशीथे केनापि संकल्पितस्य, स्वयमेव नीतस्य, साफल्येऽनपेक्षिते पर्यवसितप्रायस्य, कूटा-क्रमणस्य नेतृत्वं कुर्वाणस्य योद्धृविशेषस्य विषये······परतीरनिबद्धदृष्टिः······तं हि सः······(–अनिच्छन्नपि······अवश इव–) स्वीचकार(अर्थात्–स्वमन-स्येव) तस्मादपि साहसिकतरम् ।

प्रवृत्तमात्र एवान्वमिमीत तं (–अर्द्धचेतनेन मनसा-अनुमितपूर्वमिव आदित एव–) स्वज्येष्ठात् सुतात् मसूदात् अभिन्नम् ।

दृढं हि स विशश्वास–न कोऽपि······वरिष्ठतमः साहसिकतमः तत्-सेनाध्यक्षोऽपि······तत्प्रियतमः सेनादलाध्यक्षोऽपि······(–वस्तुतः नासीदेव तस्य दुष्प्रधर्ष्यस्य एकोऽपि प्रियः (–किं पुनः प्रियतमः ? –)सेनादलाध्यक्षः–) ······धृष्यात्······संकल्पयितुं (–किं पुनः प्रात्यक्षिके स्तरेऽवतारयितुं ?–) ······तथाविधमाक्रमणं······विना तत्पूर्वानुमतिम् ।

तथाऽनुमाय च······प्रावर्तन सः निर्द्धारयितुं स्वं कर्तव्यं तद्विषये ।······प्रावर्तत विनिश्चेतुं–प्रशंसनीयः सः······दण्डनीयो वा इति ।

यत्तु अन्यतरमपि तयोः पर्याययोः आक्रमणस्य सफलतया पर्यवसितस्या-नन्तरमेव संभवि–तत् न मनागपि अपीडयत् तम् ।······न क्षणमात्रमपि हि सः समदिग्ध तत्······चित्तैकदेशेनानवरतं निरीक्षमाणः प्रगतिं आयोधनस्य परतीरे, प्रतिक्षणं तत्समीपतरं समुपसर्पति, साडम्बरं युद्ध्यमानस्य ।

प्राववंत विनिश्चेतुं,······न तु शशाक तथा कर्तुं चिरं······उभययोरपि पर्याययोः इष्टानिष्टप्रतिक्रियाभिः अवश्यंभाविनीभिः सम्यक् परिचितः ।

विनिश्चिकाय अन्ते······तावता कालेन परतीरं प्राप्तप्रायः······कर्तुं यथायोग्यं समुपस्थिते तदवसरे ।

प्राप्तश्च परतीरं······तथा बभूवाऽऽविष्टः रणमदेन······सर्वानपि मदान् अन्यान् अतिशयानेन······यथा क्लिन्नवेष एव, एकाकी एव, पदातिरेव, समुद्धृतखड्गः, विस्फारिताक्षः आचक्राम······जिघांसामात्रव्याप्तचित्तः,······पणीकृत्य प्राणान् युद्ध्यमानं परबलं······गर्जन्–'दीन !······दीन !' इति घर्घरस्वरम् ।

न किमपि अन्यत् नूनं तथा प्रोत्साहयति नेयान्······यथा दृश्यं तन्नेतुः स्वयमनुतिष्ठतः आदेशं स्वम् ।

अवलोक्य हि तं तथाविधं 'सद्धर्मप्रसारेच्छयैव केवलया (—तथा हि सः धूर्तः आत्मानमहर्निशमनपवादं प्रादर्शयत् अन्येभ्यः—) विधर्मीयान् तथाऽऽक्रामन्तं······तस्य सैनिकाः (—आदित एव युद्धयमानाः, तमनु उपतीरं प्राप्ताश्च—) सर्वेऽपि बभूवुः आविष्टाः सहसा रणावेशेनापूर्वेण,······प्रकम्पयामासुः दिङ्मण्डलं रणगर्जनाभिः कर्णभेदिनीभिः,···आचक्रमुः भारतीयान् सैनिकान्,······चक्रुश्च तान्······आदित एवावलोक्यात्मानं घोरे निशीथे मुसलधारं वर्षति पर्जन्ये तथा समाक्रान्तं स्खलितमनोबलान्, तत्रापि प्रत्यक्षीकृत्य साक्षात् यवनेश्वरं, आसुर्या कयाचित् शक्त्या संरक्षितमिव तैः मध्यसरित्प्रवाहमभिवृष्टैः पृषत्कैः स्तोकमप्यक्षतं, तथाऽऽक्रामन्तं भीतभीतान्, तत्रापि विज्ञाय कर्णोपकर्णिकया दावानलवेगेन प्रसृतां वार्त्तां पलायनस्य स्वराज्ञः भीमबलस्य निर्भयंमन्यस्य हतबलान्······अवशान् अनुसर्तुं······'यः पलायते सजीवति—'नीतिं······चिरपरिचिताम् !

इयता मनोयोगेनानुसस्रुस्ते तां नीतिं······क्षतविक्षतशरीराः परित्यक्तायुधाः मृगा इव कान्दिशीकाः······यत् तान् अनुधावन्तस्ते आक्रामकाः······समुद्यतायुधाः, मार्गपतितान् पलायितुमधिकतरमसमर्थान् सदैन्यं प्राणभिक्षां याचमानान् तदवशिष्टान् साट्टहासं सापशब्दं हसन्तः,······चक्रुः अनायासेनैव पादाक्रान्तं महान्तं भूप्रदेशं······अनवलोकितपूर्वं असंकल्पितपूर्वं द्वित्रेण्वेव प्रहरेषु ।

एक एव निवारयामास तान् अनुधावनात् ततोऽप्यग्रे ।

आदेश एव तन्नेतुः ।

तन्नेता हि······स्वसेनासागर इवादौ विजयोन्मत्तोऽपि······स इव आदौ अनुधावनरसलुब्धोऽपि······शीघ्रमेव प्रकृतिं स्वां सावधानामहिताऽऽशंकिनीमापन्नः······अवलोक्य एकं मार्गपतितं भूप्रदेशं विस्तृतं, विरराम स्वयमनुधावनात्, निश्चिकाय कल्पयितुं स्वसेनासंनिवेशं तत्र, प्रेषयामास च स्वसहानुधाविनः सेनाधिकारिणः चतुर्दिक्······आदेष्टुमग्रे गतान् सर्वत्र प्रसृतान् स्वसैनिकान् विरन्तुं तत्क्षणमेवानुधावनात् प्रतिनिर्वर्तितुं च नवीनतया क्लृप्तं स्वसंनिवेशस्थलं अनपवादम् ।

शिरसि कृत्वा तदादेशं प्रत्यागच्छन्······रक्तस्नाता अपि, परिश्रान्ता अपि, क्षतविक्षतशरीरा अपि, हतवियुक्तबान्धवा अपि, आहोपुरुषिकया स्वं स्वं पराक्रममुच्चैर्वर्णयन्तः,······अभववंश्च व्यग्राः शीघ्रमेव स्वस्वपटकुटिर-संकल्पनायां आहृत स्वमित्रशुश्रूषायां ततश्च दैनंदिनचर्यायाम्·····उच्चावचाः तस्य सर्वेऽपि सैनिकाः ।

अथवा—बहुसंख्यकाः ।

न हि प्रत्यागच्छन्······कतिचन सैनिकाः······युवराजस्य मसूदस्यांग-रक्षकाः······तस्मै प्राणाधिकं स्निह्यन्तः,······छायापुरुषा इव तमहर्निश-मनुसरन्तः, तस्य परमविश्वासभाजः ।

न हि तावत् तान्, अनुसृत्य स्वं नेतारं अतिदूरं अग्रे गतान्, ते सेना-धिकारिणः पारयामासुः कथयितुमादेशं यवनसम्राजः ।

प्रकटतः अनुद्विग्नमिव तेषां तन्नेतुश्चाप्रत्यागमनेन आत्मानं प्रकट-यन्,······सर्वजनसमक्षं समुपेक्षमाणमिव तेषां तन्नेतुश्च मर्यादाननुपालने-नात्मानं प्रकाशयन्,······परंतु निभृतं अवलोक्य तेषामपराधं, विशाले तस्य सैन्यसागरे केनापि······अत्युच्चेनापि······सैनिकेनाननुष्ठितपूर्वं परं क्रुद्धः,······'किमिव शासनं तेषां तन्नेतुश्च उचितं स्यात्'—इति निर्धारणव्यग्रः······स यवनेश्वरः······आपाततः व्यापृतः स्वसेनासंनिवेशकल्पने आसमन्तिकप्रदेश-निरीक्षणे समुत्पन्ननवीनतमराजकीयपरिस्थितिपर्यालोचने च······यापयामास द्वित्रान् दिवसान्······कृते तत् सैनिकानां श्रान्तानां परमविश्रामसुखदान्······परंतु कृते तस्याऽऽगामिदुर्दिनप्राक्कल्पनाखिन्नस्य युगकल्पान् ।

प्रथमे एव हि दिवसे तस्य प्रतीक्षाकालस्य शशाक सः (—पर्यंकगतः—)······आत्मानं सर्वविदमनुत्सुकमिव प्रकटयन्······अपराह्णे तेन तेन निमित्तेन तत्पटप्रासादे समागतेभ्यः, अनुल्लंघ्य स्वां मर्यादां क्षणमात्रमपि अतीतघटनाः कणशः वर्णयद्भ्यः, स्वसेनाधिकारिभ्यः······वेत्तुं सर्वं घटनाक्रमं (—अनापृ-च्छ्यैव तं संकल्पितस्य प्रारब्धस्य) सफलतया सद्यः समाप्तिं नीतस्य कूटा-क्रमणस्य ।

शशाक वेत्तुं······कथं यवनराजकुमार एव, स्वभावतो विलंबासहनः, अतीते एव सप्ताहे कल्पयामास विधां तथाविधां कूटाक्रमणस्य एकल एव, ······कथं स्पष्टी चकार तां स्वसमानशीलेभ्यः अत्यंतं विश्वसनीयेभ्यः

यवनपदातिबलस्य कूटाक्रमणनिपुणतमस्य रहसि,······कथमाश्वासयामास तान् विषये स्वपितुः पूर्वानुमतिविषये,······कथमंगीचकार स्वयं नेतृत्वं तेषां कल्पनाशतगुणितोत्साहानां सर्वेषां,······कथं मंत्रभेदभिया सुगोपितरहस्यः यापयामास द्वित्राणि दिनानि प्रतीक्षमाणः योग्यमवसरं,······कथमवलोक्य तमकस्मात् समुपस्थितं विगतायां घोरपर्जन्यायां तमस्विन्यां निष्चक्राम संनिवेशात् सह दलैः तैश्चतुर्भिः कृष्णवस्त्रैः खड्गमात्रहस्तैः व्याजेन पार्ष्णि-रक्षायाः,······कथं उपतीरं गतः बभाज तत् समस्तं बलं द्वयोर्भागयोस्तुल्य-बलयोः······कथमादिदेश तौ भागौ समुत्तर्तुं पृथक् पृथक् प्रवृद्धसरित्प्रवाहं, आक्रमितुं प्रत्यर्थिबलं पारेतीरं विश्रब्धसुप्तं एकसमयावच्छेदेन, आक्रमितुं तत् वामतः दक्षिणतश्च, अवस्कन्दितुं तत् दुष्प्रसहेनाऽऽवेशेन, कर्तुं च तत् हताहतावशिष्टं अवशं पलायितुं एकमात्रायां उपलभ्यायां दिशि······उदीचीन्यां······, कथं चालभत साफल्यं स्वयं कल्पिते, स्वयं निर्द्धारिते, स्वयं नीते कूटाक्रमणे······निरपवादम् ।

शशाक वेत्तुं सर्वं घटनाप्रवाहं,······न तु निर्द्धारयितुं स्वं कर्तव्यं विषये तदायोजकस्य ।

न शशाक······एकैकशः व्यपगतेषु तेषु सैनिकाधिकारिषु, दृष्ट्वाऽपि तं मूकमूकमचकितेषु (–सुनिपुणं हि विदुस्तेऽत्यन्तं मितभाषिणं–), लब्धैका-न्तोऽपि, चिरं विचार्याऽपि······विनिश्चेतुं स्वं कर्तव्यं विषये स्वाग्रजस्य ।

चित्तैकदेशेन प्रशंसमानोऽपि तस्य कल्पकतां······तस्य निर्भीकतां······ तस्य रणनेतृत्वक्षमतां······दृढं हि स निश्चिकाय तम् एव······तमेकलमेव ······ मर्यादातिक्रामापराद्धम् ।······अन्यांस्तु सर्वान्······तान् दलाध्यक्षान् ······तत्सैनिकांश्च······तेन वञ्चितान् मिथ्याऽऽश्वासनदानेन ।

'मसूद एव एकलः प्रकरणेऽस्मिन् दण्डार्हः,'–उज्जुघोष एकस्वरं तदीयं चित्तं,······सामान्यजनवत्······ततोऽपि अधिकतरमेव वा······रागद्वेषादिदोष-दूषितमपि आजन्मनः प्रशासनकर्मणि दीक्षितं,······योग्यायोग्यविवेकक्षमं, ······पुनः पुनः

'परंतु······यदि दण्डनीयः······कथं······कियच्च ?–पप्रच्छ सकुत्समिव तदेकदेशः ।······'अपि च······यदि सः······दण्डितः नाममात्रमपि,······ स्वभावत एवाहंमन्यस्तत्रापि प्राप्य तादृशं साफल्यं (–सम्राजः कृतेऽपि

दुष्प्राप्यम् !—) तादृशे कूटाक्रमणे आध्मातशिराः,……भवेत् सहसा उद्वर्त्तनः ?……उद्यतः भंक्तुं तव मनोरथम् ?……तव स्वप्नम् ?……महत् खलु अस्ति तव स्वप्नं विकासयितुं सद्यःस्थाप्यमानं साम्राज्यं,……दृढीकर्तुं तत्,…प्रदातुं च तत् तथाभूतं हस्तेषु स्वोत्तराधिकारिणोः मसूदमुहम्मदयोः उभयोरपि ।……अपि सः……प्रकृत्यैवाविमृश्यकारी……साहसिकः……भवेत् उद्यतः भंक्तुं तत् ?……नूनं—'

'परंतु……यदि न दण्डनीयः……तर्हि—आक्षिपत् साशंकं तत्……,सत्यं, ……न कोऽपि उत्सहेताऽऽक्षेप्तुं तव तितिक्षापरं व्यवहारम् ।……(सासूयमिव)……सर्वेषां एव प्रियोऽयं मसूदः ।……न उत्सहेत स्वयं महमूदोऽपि । ……स हि प्रकृत्यैव रणभीरुः……प्रथमं तावत् न प्रवर्तेत ज्ञातुं कस्मादपि ……अन्यान्यस्यैव……अस्यापि अभियानस्येतिवृत्तम् ।……प्रवृत्तोऽपि…… अथ च ज्ञातसमग्रघटनाक्रमोऽपि……न उत्सहेताऽऽक्षेप्तुं तव व्यवहारं ।…… स हि……निभृतं मसूदं स्वं एकमात्रं प्रतिस्पर्द्धिनं मन्यमानोऽपि……तस्मात् ……बिभ्यत्येव स्वापेक्षया बलवत्तरात् ।……परंतु……सतितिक्षं व्यवहरन्तं त्वां एकेव संकटाशंका बाधते ।……सा च……मर्यादातिक्रमणं एतादृशं तस्य गजनिमीलिकया समुपेक्षमाणस्य तव व्यवहारं…स मसूदः……स्वभावादेव धृष्टः……तत् स्वीकारव्यञ्जकत्वेन ग्रहिष्यति ।…न केवलं ग्रहिष्यति ……अपि तु……मत्वा तमाद्यं चिह्नं तव जीवनोत्तरार्द्धप्रवेशस्वीकारस्य,… आद्यं चिह्नं तव तदुत्तराधिकारस्वीकारस्य……धर्षिष्यति अधिकाधिकं भंक्तुं त्वदनुशासनं,……उल्लंघयितुं त्वन्मानमर्यादाः तेषु तेषु अवसरेषु,… क्षाययितुं चाधिकाधिकं तव प्रभावं……तवैव साम्राज्ये ।'

'तच्च'—सहसाऽऽरक्तलोचनः आकुञ्चितभ्रूकुटि……असकृत्…… स उज्जगाद,……'नाहं मर्षिष्यामि……प्राणेषु कण्ठगतेष्वपि ।'

पक्षविपक्षाभ्यामेताभ्यां……उभाभ्यामपि तुल्यबलाभ्यां…आकृष्यमाणं चित्तं तस्य (—अन्यथा स्वभावतः क्षिप्रनिर्णायकं—) न शशाक निर्णेतुं किमपि तस्मिन् प्रतीक्षावधौ ।

अवशमिव चान्ते निर्णिनाय……प्रतिपालयितुं स्वसुतप्रत्यागमनं…… निर्णेतुं च ततःपरमवलोक्य तस्य व्यवहारम् ।

न परंतु शशाक निर्णेतुं ततः परमपि……विस्मितमवलोक्य तस्य

चतुर्थेऽह्नि प्रतिनिवृत्तस्य, श्रान्तश्रान्तस्यापि विजयोल्लसितस्य, अनत्युद्धत-मनतिनम्रं यथापूर्वं व्यवहारं······अनवबुद्धमर्यादातिक्रमणापराधस्येव नितान्ताश्वस्तस्य ।

अलभत च मिषं प्रबलं काकतालीयन्यायेन, अनवसित एव तस्मिन् अहनि, विलम्बयितुं निर्णयग्रहणं अनवधिकाय कालाय ।

अलभत हि तत् समाचारं उत्तरार्द्धे तस्याह्नः एकस्मात् गुप्तचरात्······ परचक्रभयेन विहाय स्वक्षेत्रादि पलायमानानां तद्देशिकानां ग्रामीणाना-मन्यतमस्य पांसुलपादस्य प्रभ्रष्टपरिजनस्य वेषं परिगृह्याग्रे तद्बलस्य गतात् ······विज्ञाय तत्र विज्ञातव्यं प्रत्यर्थिभारतीयनृपसमवायस्य संकल्पं······ निभृत्यं प्रत्यागतात्······प्रत्यागमनक्षणे एव च तत्समक्षं उपस्थितात्······ एकस्यातिमहतः सैन्यसमुदायस्य, समवायप्रमुखेन नंदेन उपयमुनातीरमनुभू-तेनाभूतपूर्वसदृशेनापि पराभवेण स्तोकमपि अनपहृतमनोबलेन स्वयं नीयमा-नस्य, षट्त्रिंशत्सहस्राश्ववारप्रबलस्य, लक्षाधिकवर्मितपादातप्रचण्डस्य, शशशृंगपुरुषार्थ-कार्तिकेयानन (६४०)–मितमदोत्कटद्विरददुःसहस्य,······ अनतिदूर एव तदुपयुक्ततमे स्थाने आगमनं तस्य प्रतिपालयतः ।

लब्ध्वा च तं बभूव चिन्तामग्नं कतिपयक्षणपर्यन्तम्।

'कियान् खलु विशालः एषः देशः !'–व्यस्मयत तत्, असकृन्निशम्य वैदेहकेभ्यः वर्णनानि विशालतायाः भारतवर्षस्य तदर्थं संन्नद्धमपि ।······ 'खण्डप्रायः······महाद्वीपप्रायोऽयं !······पादाक्रान्तेष्वपि क्रोशसहस्रेषु······ नास्योपलभ्यतेऽन्तः······पौरस्त्यः पाश्चात्यो वा दाक्षिणात्यो वा !······ कियच्च एतस्य मानुषं बलम् !······प्रत्यभियानं प्रतिवर्षं प्रतियुद्धं व्यापा-द्यमानमपि मया दुर्दान्तप्रखरपराक्रमेण······लक्ष्यतेऽक्षुण्णमेव,······(सोपहासं) अस्मिन्नेव विचित्रे देशे श्रुतचरायाम् लोककथायां वर्णितस्य तस्य दैत्यस्य वपुरिव······निरंतरं प्रवर्द्धमानमेव !'

'तत्······कदाचित्······अपारमेनं सेनासागरं······अगाधं सिकतिलं जल-सागरमिव······विलोडयितुं प्रयतमानः,······आत्मसात् कर्तुं प्रयतमानः,······ प्रत्यभियानं आभ्यन्तरिकतरेषु भागेषु अस्याधिकाधिकमेव प्रवेष्टुं प्रयतमानः, ······प्रतिसंवत्सरं स्वप्रदेशात् अधिकाधिकमेव विप्रकृष्यमाणः······अहं······ अभियाने कस्मिंश्चित्······विनष्ट एव भवेयं सदलबलः ।······भवेयं चोप-

हसनीयः पृष्ठेषु इतिहासस्य·····अविमृश्यभोजी ब्राह्मण इव विलुप्तविवेक इति ।'

'तत्·····किं·····भवेयं··संतुष्टः भागेनैव बलादपहृतेनास्य देशस्य ?···त्य·····त्यजेयं चाबाल्याद्दृष्टं·····क्षणमात्रमत्यकां·····मनोरथं स्थापनस्य अभूतपूर्वसदृशस्यापारैश्वर्यमण्डितस्य चिरस्थायिनस्तौरुष्किकपारसीक-साम्राज्यस्य संस्थापनस्य ?·····त्य–'

'हाः·····हाः·····हाः·····हाः'–अच्छिनत् सहसा तस्य विचारतंद्रां खेद-जडां·····(–प्रभावेण वा शारीरिकस्य दौर्बल्यस्य, अतीतरोगाक्रमणसमया-देव समुद्भूतस्य, सेवितेष्वपि देशविदेशागतवैद्यवर्यप्रदत्तेषु नानाविधेषु औष-धेषु निःशेषतयाऽनपयातस्य, प्रत्युत वयोवस्थानुसारं शनैः शनैः वृद्धिमेव गतस्य, आकलनेन वाऽऽत्मनः अगतिकतायाः, जीवने प्रथमतः (–तस्या अपि साक्षात् स्वपुत्रस्य (–शारीरिकेण सामर्थ्येन तमतिशयानस्य ! –) विषये···) अनुभूतायाः, समुत्पन्नां·····एकस्याट्टहासस्य ध्वनिः·····दूरे·····स्यान्नाम संनिवेशैकदेशवर्तिनि रणाभ्यासस्थले·····समुत्पन्नोऽपि·····विस्पष्टं श्राव्यः ।

अक्षिपच्च तं सहसा मनःस्थितौ·····'कः खलु जाल्मः अस्माकं सैन्य-संनिवेशे·····संनिधावेवास्माकं पटप्रासादस्य·····धृष्णोति एवं कर्तुमट्टहा-सम् ?' इति संचिन्त्याधिकाधिकं क्षुभ्यमाणायां·····ततश्चापरस्यां अनि-र्वर्णनीयायां·····'अहो !·····अयं खलु मसूदस्य, रणाभ्यासस्थले उपस्थितौ स्वप्रशंसकानां भल्लप्रक्षेपणसामर्थ्यमतुलनीयं स्वं प्रदर्शयित्वा संतुष्टस्य, अहम्भावदुःसहः अट्टहासध्वनिः' इति प्रत्यभिज्ञाय अगदिकतया उत्तरोत्तरे शममुपयान्त्याम् ।

स हि·····निशम्य प्रत्यभिज्ञाय च तं·····आरभत अवश इव चिन्तयितु-मात्मानं, हृदयदौर्बल्यवशाज्जीवनरणक्षेत्रात् पलायितुं प्रवृत्तं, उपहस्यमान-मिव भाविना कालेन·····अवलंब्य नितान्तमनभिज्ञस्य तस्य पुत्रस्याट्टहा-सस्य ।·····निश्चिकाय च कतिपयक्षणानन्तरमेव·····संजातहृदयपरिवर्तन इव·····विगतमोहक्षण इव·····समुचितं प्रदातुं प्रत्युत्तरं तस्य कुत्सितस्योप-हासस्य·····त्यक्त्वाऽत्यन्तं स्वं निवृत्तिसंकल्पं·····यतित्वा आ अन्तिमश्वासं अभिवर्द्धनार्थं स्वसाम्राज्यस्य,·····प्रदर्शयित्वा च तस्मै उपहासकाय सामर्थ्यं हृदयस्य तस्य दुर्बलशरीरावस्थितस्यापि ।

आविष्टश्च निश्चयेन तेन (–सर्वथाऽनुरुपेण तस्य स्वाभाविक्याः मनस्थितेः वंशपरंपरागतायाश्च संस्कृतेः–) आदिदेश स्वं बलं······अवलोक्य स्वं प्रियं भाविनं नेतारमक्षतं सफलञ्च प्रत्यागतं प्रसन्नं, भंक्तुं स्वं संनिवेशं ······अभियातुं च प्रहरमात्राभ्यन्तरे दिशि नवीनतमस्य प्रत्यर्थिबलस्य······ पुनः परीचिक्षिषया तत्सामर्थ्यस्य······अनतिदूर एव तदागमनं प्रतिपालयतः।

प्राप्त्वा तमादेशं निशीथे नितान्तं चकितचकितमपि, तंद्रिलमपि, स्वगृहसौख्याय दुर्मनाधमानमपि······तत्······(–अहो, तन्नेतुरातंकः। !–) न दधर्ष चिंतयितुमपि,······किं पुनः कर्तु ?······अवमाननां तदादेशस्य,······ बभञ्ज स्वं संनिवेशं,······चचाल दिशि तद्गूढचरसंसूचियायां,······प्रहरमात्राभ्यन्तरे एव च (–अहो, प्रभावः अभ्यासस्य !–) युयुत्सोन्मादाविष्टं आरभत स्वमभियानं वेगेन प्रचण्डेन,······प्राप संनिवेशस्थलं प्रत्यर्थिबलस्य प्रचण्डस्य प्रागेवावसानात् श्वस्तनस्य दिवसस्य,······प्रावर्तत चाक्रमितुं तत् ······युयुत्सोन्मादवशात् अविगणय्य परिश्रमं प्रवासस्य, तिरस्कृत्य व्यूहकालस्थलविचारं समुपेक्ष्य तस्यावस्थां,······रुधिरास्वादप्रमत्तं यूथमिव सूकराणां वन्यानां······प्रकंपयत् सांध्यं दिङ्मण्डलं 'अल्लाहो अकबर !······अल्लाहो अकबर'–इति रणगर्जनाभिः घर्घराभिः।

यदि हि तत्······प्राप्य प्रत्यर्थिबलसंनिवेशस्थलं, विरम्य च तादृशादाक्रमणात्······द्वित्रक्षणपर्यन्तमपि पर्यैक्षिष्यत तस्यावस्थां,······नूनं तर्हि तत् अचमास्यत तस्य दयनीयां दशां,······व्यरंस्यच्च आक्रमणपरिश्रमात्।

दयनीयामेव······प्रत्याक्रमणप्रतिरक्षान्यतरदनुपयुक्तामेव······किंकर्तव्यतामौढ्यजडामेव······नितान्तं दशामापन्नं आसीत् तत् भारतीयं बलम्।

कथं दयनीयाम् ?

अनेतृकां······अतः दयनीयाम्।

कथमनेतृकाम् ?

नेता हि तस्य······।–अथवा-श्रृण्वन्तु तं वृत्तान्तमादित एव।

नेता ननु तस्य बलस्य······इन्द्रराजः······प्राचीनतरभारतीयराजवंशसमुद्भूतोऽपि, सनातनार्यधर्मरक्षकंमन्योऽपि, 'भारतीयार्यसंस्कृतेरहमेव सर्वप्रमुखः संरक्षकः' इति गर्वेणाध्मातशिरा अपि, स्वभावावेशप्रभाववशादेकी-

कृतभारतीयनृपसंदोहोऽपि,—सत्यं ब्रूम:,—मनसि आसीत् आक्रान्त एव भयेन, ······निभृतमभ्यलषदेव तं आक्रामकं······आकर्ण्यैव समाचारं तस्य सैन्य-संगठनस्य पराङ्मुखीभूय समरप्रसंगात् नवीनतरात्······प्रतिनिवृत्तं जवेन स्वं देशम्,······अन्यमेव वा भारतीयं नरेशं एकीकृत—भारतीय—सैन्यसंचालकीभूतम् ।

किमिव हि······तर्हि······आश्चर्यं······यदा स:······सर्वै: भारतीयै: नृपै: (तद्भावावेशेन प्राक्तनेन प्रभावितै: !) ऐकमत्येन संयुक्तभारतीयसेनासागर-संचालनेऽधिकृत:, प्रतिदिनं शृण्वन् वृत्तान्तान् रोमहर्षकान् विजयमालिकाया आक्रामकस्य, प्रतिप्रहरमाकर्णयन् समाचारान् अप्रतिहतवेगस्याऽऽक्रमणस्य तस्य······अन्ते······बभूवाऽऽतंकित:,······विज्ञाय तं समीपतरमागतं ततश्च प्रस्थितं स्खलितधैर्यविशेष: तत्याज भगवत्प्रार्थनामिषेण स्वं सैन्यसागरं भाविसमरसंनहनव्यापृतमेव, !······शरणीचकार विहाय स्वान् कक्षान्, स्वप्रासादान्तर्गतभागावस्थितं स्वेष्टदेवतायतनं,······आदिदेश स्वपितृतुल्य-मपि राजकुलपुरोहितं कुशलाकांक्षया स्वाश्रयदातु: तत्र जपव्यापृतं गन्तुं बहिस्तस्मात्,······आरभत प्रार्थयितुं स्वामिष्टां कुलदेवीं दानाय कस्यापि चिह्नस्य तद्भाविकालसंसूचकस्य व्यग्रेण मनसा,······ददर्श घोरे निशीथे, निवातस्थिस्य एकमात्रस्य पूजाघृतदीपस्य प्रकाशे पोतपीते एकं दृश्यं······ क्षणिकमपि नितान्तं स्पष्टं दृश्यं······आत्मन:······एकाकिन:, विच्छिन्न-दक्षिणहस्तस्य, नि:शस्त्रस्य, शृंखलाविनिगडितपादयुगलस्य, शीर्णराजवेषस्य, प्रवृद्धश्मश्रुजालस्य, याचकस्येव दीनदीनस्य, क्षुत्तृष्णाव्याकुलस्य, अदृष्ट-पूर्वेऽपि महानगरीये इव परिदृश्यमानेऽतिविस्तीर्णे अट्टालिकापरंपरानिबद्ध-पार्श्वचतुष्के चत्वरेऽतितीव्रतपनतापोत्तप्ते कस्मिंश्चिदवस्थाय, परिवृत्य तं सर्वत: अवस्थितस्यातिसान्द्रस्य उपहासमुखरस्य यवनसमुदायस्य प्रस्वेदगंध-दु:सहस्य (—वस्तुत अनवबोध्यानपि—अहो आश्चर्यम्—तेन तदा स्फुटमवबु-द्धमानान् !—) अपशब्दान् शृण्वत:, निशब्दं भिक्षां स्वप्राणानां याचमानस्य, ······अमन्यत तद्हृदयविदारकं दृश्यं, वस्तुत: मूलत एव दुर्बलेन तत्रापि अनवरतचिन्तनश्रान्तश्रान्तेन तत्रापि भयव्याकुलेन तत्रापि रुग्णेन तन्मनसा तस्मै प्रदर्शितात् दु:स्वप्नात् एकस्मात् अनधिकमपि, 'आकर्ण्य ममानन्यभ-क्तस्य करुणां प्रार्थनां समुपजातदयया ममेष्टदेवतया मह्यं 'भवत्वस्य वराकस्य

पूर्वसूचना' इति बुद्धाय प्रदर्शितं मत्संभाव्यभाविकालसंसूचकं चिह्नमेव एतत्' इति,·····निश्चिकाय तत्क्षणमेव कर्तुमधिकतममुपयोगं तस्य देवीप्रसादस्य सत्येव समये,·····संकल्पयामास रक्षितुमात्मानं आत्मपरिजनञ्च येन केनापि सूक्तासूक्तेनोपायेन, निर्गन्तुं दुर्गसमात् स्वप्रासादात् (–स्वसेनासंनिवेशस्थल-समीपमेव विद्यमानात्–) गूढेन मार्गेण, गूहितुं आत्मानं यत्र कुत्रापि वेषान्तर-साहाय्येन परचक्रसंकटसमाप्तिं यावत्,·····न मनसि चकार क्षणमेकमपि उभयलोकविरुद्धत्वमात्मनः संकल्पस्य,·····न चिन्तयामास क्षणमेकमपि दयनीयां दशां भारतीयस्य सैन्यस्याऽऽकर्ण्य तत्प्रपलायनवार्त्तां सर्वथाऽनपेक्षि-तामवश्यंभाविनीं,·····चकार च यथासंकल्पं·····हृताशः ?

किमिव चाश्चर्यं·····यदि तस्य तद्विशालं सैन्यं, आकर्ण्य प्रभाते एवापरेद्युः दावानलवेगेन सर्वत्र प्रसृतां तस्य प्रपलायनस्य वार्त्तां,·····स्वयं बभूव भयविह्वलं,·····निश्चिकाय चानुसतुं तस्योदाहरणं स्वीकृत्य पराभवं विना खड्गोत्क्षेपं···उपस्थिते एव, प्रतिक्षणं समीपतरमुपसर्पति, आक्रामके ?

न किं उज्जुघोष वास्तविकं सत्यं–'यथा राजा तथा प्रजा' इत्यस्माकं विद्वदुक्तिः ?

निश्चित्याऽपि तथा नालभत परंतु एकमपि नेतारं मध्यादात्मनः अभि-गन्तुमाक्रामकं·····निवेदयितुं च तस्मै शस्त्रसंन्यसिषां सर्वस्यैव सैन्यस्य ।

सर्वे एव तस्य घटकाः·····सर्वे एव सैनिकाः साधारणाः उच्चाधिकार-भाजश्च आसन् अनिच्छुकाः महत् (!) तत् कार्यमनुष्ठातुम् ।·····हं·····। आसन् अनिच्छुकाः,·····न खलु अपत्रपावशात्,·····अपि तु–दौर्बल्यवशात् स्वहृदयस्य ।

दयनीयां अतः खलु अवर्णयाम तस्य दशां·····विस्मृतयुयुत्सां····· शरणजिगमिषातुरां·····तत्रापि अनेतृकां·····किंकर्तव्यताविमूढां···प्रतिक्षणं प्रहारं आक्रामकस्य सैन्यस्य प्राणान्तकरं उत्प्रेक्षमाणाम् ।

प्रहारं आक्रामकस्य सैन्यस्य प्राणान्तकरं अलभत तत् सशस्त्रमपि निः-शस्त्रमिवासहायं·····भयावसन्नहस्तपादं,·····अधिजगाम च विशीर्णतां कतिपयेष्वेव क्षणेषु ।

अधिगमय्यापि तत् तादृशीं विशीर्णतां, लुण्ठित्वाऽपि तद्राज्यस्य सर्वां सम्पदं, दासीकृत्याऽपि तस्य संख्यातीतान् तरुणवयस्कान् पुष्टगात्रान् सुदर्शनान्

नागरिकान् किंचिदेव तृप्तः तस्य सः निश्चयः नूनं अनेष्यत् तं ततोऽपि आभ्यन्तरतरे भागे आर्यावर्तस्य तेनैव वेगेन····यदि नाम एकः प्रजवी दूतः, विशिष्य प्रेषितः तद्राजधान्याः तत्प्रधानामात्येन, ख्वाजा अहमद् बिन् हुसैन पैमंदिनः, न तस्मै न्यवेदयिष्यत् वार्तां आभ्यन्तरायाः दशायास्तद्गृह-राज्यस्य सेल्जूकाख्यैः बर्बरैः प्रजाननैः प्रत्यहं अधिकाधिकं संकटापन्नीक्रियमाणायाः। निशम्य तु तां, हठात् प्रबोधित इव केनापि, अन्वजानात् तं······ नियन्तुं स्वमाक्रमणवेगं,······प्रत्यावर्तयितुं च स्वं सैन्यं दिशि स्वगृहराज्यस्य विना विलंबम्।

प्रत्यावर्तयतश्च तत् एवं······तस्य······आपाततः संतुष्टस्यापि, यशः-शिखरमध्यारूढस्यापि, वस्तुतः खिन्नस्य,······मानसाभ्रं आच्छादयामास एवाहर्निशं चिन्ता एका-इत्येतत् जानीमः।

काऽऽसीत् नूनं सा ?······किमासीत् सा प्रत्यहमधिकाधिकं महत्त्वमात्मनस्तत्सेनायां सहजमिव प्रस्थापयन्तं स्वमग्रजमधिकृत्य समुत्पन्ना,······ आहोस्वित् आसीत् सा स्वे गृहराज्ये तेन दैनंदिनप्रशासनार्थं स्वयं प्रस्थापितं, स्वामक्षमतांच तत्रापि प्रदर्शयन्तं स्वमपरं तनयं विषयीकृत्य समुद्भूता ?— इति तु न।

तथा चिन्ताच्छन्नमपि तत् प्रावर्तत एव शनैः शनैः क्रीडितुं कल्पनयाऽऽत्यन्तिकस्य विलयनस्य प्रतिनिवर्तनमार्गे आपततः अनेकदा पादाक्रान्तस्य धनधान्यसम्पन्नस्य सर्वर्तुसुखदस्य पांचनदस्य प्रदेशस्य स्वे साम्राज्ये तदेकदेशतया।

दुर्दमनीया हि लोकेषणा !



## एकादशः परिच्छेदः

'हुजूर !' 'स्वामिन् !'

निशम्य तं मन्द्रस्वरं·····चिरपरिचितमपि (–स्यान्नाम ईषत् प्रकम्पमानतया–) अपरिचितमिव भासमानं संबोधनशब्दं प्रसह्य जागरित इव सान्द्राया विचारतंद्रायाः···उन्मीलयामास स्वेऽर्द्धमुद्रिते लोचने यवनेश्वरः··· सुखमुपविष्टः पर्यंके स्वविश्रामकक्षस्य मंदनैशदीपालोकितस्य·····आस्वादयन् असकृत् माधुर्यं मादकं आसवस्य पारसीकस्य·····पर्यालोचयन् सिंहवत् प्रगतिं स्वस्य नवीनतमस्याभियानस्य·····अनुभवंश्चापारं संतोषं तत्साफल्येन तावत्कालिकेन ।

व्यावर्तयामास ते दिशि तस्य संबोधनशब्दस्य····तद्वामपार्श्वत इव भीतभीतमागतस्य ।

अवलोकयामास तत्र प्रणतोत्तमांगं आबद्धकरयुगलं भूमितलनिगडितलोचनं वरिष्ठतमं स्वसेनादलाध्यक्षं·····साशंकमिव तत्पुरत उपस्थितम् ।··· तर्कयामास तत्क्षणमेव वैपरीत्यमिव कस्यचित् समाचारस्य तेन कस्माच्चित् गूढचरात् सद्यः विदितस्य, तस्मै च तत्क्षणमेव निवेदयितुमीहितस्य ।······ सूचयामास च स्वामनुज्ञां भृकुटिभंगेन प्रश्नवाचकेन·····तथैव समुपविष्टः··· दार्क्ष्यं परंतु आभ्यन्तरीणं तत्क्षणमेवोपेतः ।

'हुजूर !'·····उवाच सः सेनादलाध्यक्षः, बलात् प्रेर्यमाण इव, 'सः कापुरुषः·····दुर्गात् प्रपलायितः ।'

श्रुत्वैव तं समाचारं·····क्रोधावेशेन·····विनाश्य संतोषं पौर्वकालिकं, विजित्य विस्मयमग्रजं सहसा समुद्भूतेन·····इयती विकृता·····इयती दुर्दर्शना·····बभूव मुखमुद्रा·····आदित एव नातिसुदर्शना, तत्रापि गृहकलहसंतापदूषिता, तत्रापि निगूढरोगक्षामक्षामा, नयनप्रान्तयोः श्यामयोर्वलिता··· यवनेश्वरस्य·····यत् अवलोक्य तां नयनकोणेन भयातुरः विलिलीषामिवानुबभूव क्षणमात्रं स वराकः अधिचारी ।·····ववाम् इव च क्षणमात्रानन्तरं···

हृताशः······दुष्प्रतिरोध्येनाऽऽवेगेन समग्रमेव वृत्तान्तं,······विरराम अन्ते निष्प्राण इव,······अमन्यत चाऽऽत्मनः अहोभाग्यमपगमने ततः लब्ध्वा अस्पष्टतमं अनुज्ञाचिह्नं तस्मात्······सहसा तस्मात् पराङ्मुखीभूतात्······विनष्टपुनर्लब्धजीविताश इव ।

'एवं तर्हि······प्रपलायित एवान्ते······दुर्गात् अस्मात्······स भीमपालः ······नाम्नैव निर्भयः······जात्यैव जयपालपौत्रः !'–विनिबध्य स्वां विनष्ट-प्रसादां आकुञ्चितां ज्वलत्कनीनिकां दृष्टिं पटप्रासादकक्षवातायनात् किंचिल्लक्ष्ये विदूरस्थिते······पौर्वात्यक्षितिजोद्भूतसान्द्रतरतमस्तोमे इवादृश्य-विशेषे····पांचनददुर्गे······स्वगतमिवोवाच यवनेश्वरः दृढाबद्धदक्षिणकरतल-मुष्टिः ।

'प्रपलायितो······विफलीकृत्य व्यूहमस्माकं,······विजित्य तं विनैव भल्लप्रक्षेपं विनैव खड्गोत्क्षेपं विनैव शरसंधानं, निक्षिप्य तमाजीवनं कारा-गृहे······तेन······तेन सुखपालेनालंकृते, प्रविलीय तस्य पैतृकं पांचनदं राज्य-मास्माकीने साम्राज्ये,······देशेऽस्मिन् कर्तुं स्थिरं पदं बद्धपरिकराणाम् !'

'वयं खलु···अतीत एव संवत्सरे तथा सफलीभूतात् अत्रत्यादभियानात् स्वं गृहराज्यं प्रतिनिवृत्ताः······उपशमयित्वाऽऽभ्यन्तरिकमुत्पातं तेषां सेल्जूकानां स्वसाम्राज्यस्य दैनंदिनप्रशासनकर्मणि रुचिं स्वामुत्पादयितुमसकृत् प्रयत्यापि तत्रासफलीभूताः······अहर्निशं स्वप्नं मनोहरं प्रविलयस्यास्य निसर्गतः समृद्धस्य सर्वर्तुसुखदस्य प्रदेशस्य स्वे साम्राज्ये, उभयपार्श्वयोः हिमालयस्य प्रसृते, अवलोकमानाः······अन्ते विन्यस्य प्रशासनभारं मुहम्मदे, प्रधानामात्यपरामर्शानुसारं व्यवहर्तुमाज्ञप्ते,······कर्तुं तत् स्वप्नं साकारं,–अनतिक्रान्तेष्वपि बहुषु मासेषु गृहं स्वं प्रतिनिवृत्तस्य स्वसैन्यस्य,–गजनीतः सह तेन नात्युत्सुकेन प्रस्थिताः,······आदौ पार्ष्णिकण्टकायमानं तं काश्मीर-नरेशं विजेतुं तद्राज्येऽविशाम ।'

'अनुभूय तद्दौष्कर्यं,······पूर्वं······एकदा······अनुभूतचरं,······ततः रिक्त-हस्तमेव परावृत्ताः,······कृतपार्ष्णिरक्षोपायाः······एतं पांचनदं प्रदेशमेव प्रविष्टाः······आकर्ण्य गूढचरेभ्यस्तन्नरेशं (पुनरवलोक्य दिशि तस्य दुर्गस्य, तावत्या कालकलया उदितायाः क्षीणक्षीणायाः चंद्रकलायाः प्रकाशे किंचिद्-दृश्यमानस्य) अस्मिन् दुर्गे निलीनं······विदूरत एवावारुन्ध्म ।'

'वयं खलु तदाऽचिन्तयाम–'एवं सर्वतः निरुद्धबाह्यजगत्संपर्कः......
क्षुत्क्षामः......मूषक इवापूरितसर्वमार्गः......निर्गमिष्यति सः स्वनिलयात्...
पतिष्यति च हस्तयोरस्माकं......विनैव प्रयासं......अद्य वा......श्वो वा ।'

'सुखं चात्र तस्थिम......प्रतीक्षमाणाः साफल्यं स्वप्रयत्नस्य...अहरहः,...
किंचिदपि अकुर्वाणाः,......अत्रत्येभ्यः ग्रामीणेभ्यः, अवलोक्यास्मान् आदौ
तावत् प्रपलायितेभ्यः, ततः शनैः शनै स्वं स्वं क्षेत्रादिकं प्रतिनिवृत्तेभ्यः, स्व-
स्वकर्मणि प्रवृत्तेभ्यः अनुभूयास्मान् अनपकुर्वाणान् समुपजाताश्वासेभ्यः, उप-
कर्तुमस्मान् अनिच्छुकेभ्योऽपि प्रत्याख्यातुमस्माकं आदेशमसमर्थेभ्यः......
दैनिकं भोजनादिकं यथेच्छं लभमानाः ।'

'अभवाम च......अन्ते...(सखेदं) उपहसनीयाः इतिहासकाराणाम् !'

'(सकुण्ठमिव) न पारयामः निर्णेतुं......कथं तावत् प्रपलायितः सः
इति ।......अपि सः–?'

'अथवा–किमनया चिन्तया ?'

'प्राप्तस्यैव गतिश्चिंतनीया !'

दृढं विनिश्चित्य एवं......चिरं मूर्तिवदवतस्थौ सः......सकृत् स्पृशन्
स्वं श्मश्रुपाशं धवलविरलं......पर्यालोचमानः भाविकार्यदिशं......अन्यमन-
स्कतयाऽवलोकमानः प्रतिक्षणं स्पष्टतरीभवन्तं दुर्गं तं परस्य......देहमिव
उत्क्लुतजीवं द्वेषणस्य कस्यचित्......दृष्टौ तस्य सपदि निरर्थकीभूतम् ।

तथा पर्यालोचमानस्य तस्य मुखमुद्राऽथ जहौ शनैः शनैः कालुष्यं......
श्रुत्वा तमप्रत्याशितं समाचारमकस्मात् अकालजलदस्तोमतिमिरमिव
समुत्पन्नम् ।

दधौ च निर्विकारतां अन्तर्निलीनभावां....ज्ञात्वाऽपि प्रमुखेभ्यः प्रजवि-
तुरगसादिदलानामनुधावितुं प्रपलायितं पांचनदं (भूतपूर्वम् !) नरेशं,
प्रेषितभ्यः प्रत्यर्थिनं सुदूरावस्थितं अजामीलनरेशं शरणं गतं,......अन्तर्भाव-
यित्वाऽपि समस्तं पांचनदं प्रदेशमात्मनः सततं वर्द्धमाने साम्राज्ये,......
निशम्याऽपि असकृत् 'सुलतानानुऽसलातीन जिन्दबाद !' इत्यादिजयघोषान्
दिक्चक्रवालप्रकम्पकान् हर्षोत्फुल्लनेत्राणां स्वप्रजाजनानां स्वदेशनगरपथोभय
पार्श्वनिबद्धपंक्तीनां,–उपस्थायापि नमाजे–शुक्रानासु असंख्यासु, तेन गृह-
राज्ये तेषु तेषु प्रार्थनामन्दिरेषु (–तेन स्वयं प्रस्थापितेषु–इति विशेषः! –),

······प्रदायाऽपि विविधानि पारितोषिकाणि स्वसैनिकेभ्यः, सद्यःसमाप्ते भारतीयाभियाने पराक्रमं नेत्रदीपकं प्रदर्शितवद्भ्यः भव्यायां राजसभायां, तेन स्वयं निर्मापिते फिराजाख्ये नवीनतमे राजप्रासादे आहूतायां अहोभाव-मूकमूकैः विविधराजदूतैः उच्चावचैः स्वाधिकारिपुरुषैः शुभ्रवेषधारिभिः धवलश्मश्रुपाशैः जपमालाव्यापृतहस्तैः आपाततः ध्यानतंद्रालुभिरपि परमार्थतः वस्तुस्थितिं तत्रत्यां सूक्ष्मेक्षिकयाऽवलोकयद्भिः प्रधानतमयवनधर्मगुरु-प्रतिनिधिभिः अल्बरुनी–फरबी–अल् उतबी–अन् सूरी–अस्जदी–फरक्की–फिरदौसी प्रमुखैः नररत्नैरलंकृतायां,······अविचलिताम् ।



## द्वादशः परिच्छेदः

विचचाल परंतु किंचित्·····अष्टमासानन्तरं·····एकस्यां प्रभातवेलायां, ·····तस्य···अवरुद्धय निखिलभारतवर्षविख्यातं कलिंजयदुर्गं नंदस्य भारतीयनृपसंघटनाप्रमुखस्य अवस्थितस्य,·····स्वसैन्यस्य तदाज्ञानुसारं कतिपयमासानन्तरमेव नवीनतमे भारतीयाभियाने प्रस्थितस्याक्षुण्णोत्साहस्य आयोधनाभ्यासं निरीक्षमाणस्य,·····अश्वारुढस्य'·····चित्तैकदेशेनावरुद्धपरदुर्गविजयोपायानामेव विविधानां सौकर्यासौकर्ये विचारयतः,·····सेवायां सादरं समुपसर्पिततुरगस्य प्रहृष्टस्यापि आतुरस्यापि कथमपि नियमितस्वान्तस्य प्रमुखतमस्य सेनादलाध्यक्षस्य मुखात् निशम्य वार्त्तां·····सर्वथाऽनपेक्षितां··· शरणाऽऽजिगमिषायाः द्वेषणस्य ।

विचचाल·····आभया हर्षस्य ।

महती हि आसीत् तस्येच्छा कर्तुं कुठाराघातं मूल एव तस्य भारतीय नृपसंघटनाविषवृक्षस्य पराभूय तत्प्रमुखं कलिंजयनरेशमेव ।·····ध्रुवं हि स अमन्यत यत् पराभूते तस्मिन् अन्ये सर्वेऽपि भारतीयाः नरेशाः स्वयमेव····· अनायासमेव·····स्वीकुर्युः पराभवं,·····अंगीकुर्युः वा ताटस्थ्यं,·····कुर्युश्च मार्गं तस्य·····समृद्धतरदेवस्थानलुण्ठने एव केवले अभिनिविष्टस्य······ सरलतरम् ।

सा तस्येच्छा तथा·····सर्वथाऽनपेक्षितया रीत्या·······आपूरिता व्यचालयदेव तस्य मुखमुद्रां आभया हर्षस्य स्फुटस्य ।

परंतु·····क्षणमात्रमेव ।

अन्यस्मिन्नेव क्षणे हि आच्छाद्येव तां गांभीर्येण·····स्वीचकार तं समाचारं हुंकारेणार्द्धस्फुटेन,·····प्रदर्शयामासाऽऽत्मानं निरीक्षणव्यापृतं यथापूर्वं·····परमार्थतः व्यापृतः 'अपि नाम देयः परः अभयदानम् ?····· सोऽपि नंदसदृशः ?' इति पर्यालोचने ।·····इयेष सः क्षणमात्रं प्रत्याख्यातुं तमनुरोधं,·····दण्डयितुं च तं परं प्राणदण्डेन ।·····परंतु·····क्षणमात्रान-

न्तरमेव……विवेकशक्तिस्तस्य,……बोधयन्ती तं, भारतवर्षं स्वसाम्राज्येऽन्तर्भावयितुं बद्धपरिकरं,वर्तितुं भारतीयराजनीत्यनुसारं,……कथयन्ती च तं साग्रहं 'न खलु भारतीयाः शरणागतं वैरिणं……सहजमपि……दण्डयन्ति प्राणदण्डेन' इति,……उन्मीलयामास तस्य तामीषणां,……प्रेरयामास च तं दातुं शरणागतायाभयभिक्षां……तामपि अनाकृष्यैव तस्मात् प्रभूतं धनराशिं, 'एवमुपकृतः वैरी न केवलं आ प्राणात्ययं भवेत् तव मित्रं……अपि तु प्रेरयेत् अन्यानपि नृपबंधून् कर्तुं तथा'—इति सूचयन्ती।

अभयं तस्य……त्रीणि शतानि मदोद्धतानां द्विरदानां सेवायां समर्पय्य माण्डलिकनृपत्वमस्माकं स्वीकुर्वाणस्य'—अन्यमनस्क इव च जगाद सः…… बहुमानयन् तस्यास्तां प्रेरणां……तत्स्वभावाननुकूलामपि तद्हितावहाम्।

श्रुत्वाऽपि तस्य तमादेशं……न न्यवर्तत ततः सः सेनादलाध्यक्षः,……अपि तु तथैव तस्थौ……आदरप्रह्वः,……उत्प्रेक्षमाण इव तस्याऽऽज्ञावशेषम्।

विफलोत्प्रेक्षश्च……कतिपयक्षणानन्तरं अवलोकयामास मुखं स्वामिनः उन्नमय्य प्रश्नमुखरां स्वां दृष्टिं भीतभीताम्।

अवलोक्य च तत् सस्मितमिव तमेवोत्तरमुखरया स्थिरया दृष्ट्याऽवलोकयत् विदिततदभिप्रायः……अपससार तत्क्षणमेव तत्सामीप्यात् सादरः चकितचकितः साक्षत्कृत्य मार्दवं दण्डस्य।

न केवलः स एव,……अपि तु—समस्तोऽपि सः सैन्यसागरः……मुहूर्ताभ्यन्तरे एव विदितसर्ववृत्तान्तः……हृष्टः……बभूव चकितचकितः।

स इव च न शशाक लेशतोऽपि साक्षात्कर्तुं वास्तविकं उद्देशं तस्य नाममात्रस्य दण्डस्य।

कुतो हि तस्य तावती दूरदर्शिनी बुद्धिः ?

न तु दधर्ष संकल्पयितुमपि स्वमनसि लुण्ठनं (यथाभ्यासं) धनराशेः पराजितस्य द्वेषणस्य,……जानत् परिणामं घोरं तदाज्ञाननुसारं वर्तनस्य।

आरभत च नितान्तमननुभूतपूर्वसदृशेन कौतूहलेन प्रतिपालयितुं साक्षात् समर्पणं गजदलस्य……'तस्मिन् अवसरे कदाचित् स्पष्टीभवेत् उद्देशः स्वामिन आज्ञायाः' इति आशासानः।

तत् कौतूहलं तस्य……दैनंदिनं स्वं स्वं कार्यकलापं यंत्रवत् अनुतिष्ठतोऽपि प्रश्नं तमेव वारंवारं पर्यालोचयतः,……कथमपि परिसमाप्य स्वं स्वं

कार्यजातं विहाय स्वं स्वं पटवासं त्रिषु भागेषु अतिविस्तीर्णस्य चत्वरस्य दुर्गमहाद्वारसंमुखीनस्य कृतसंघट्टस्य,......पिहितप्रचण्डदुर्गमहाद्वारनिरवात-नयनस्य,......प्रतिक्षणं कर्णोपकर्णिकया सर्वतः प्रभंजनवेगेन प्रसरतीः नव-नवीनाः किंवदन्तीः शृण्वतः ......अस्फुटास्फुटं च ताश्चर्चतः......अवर्द्धत एव प्रतिक्षणं सह तापेन तपनस्य प्रत्यहं निर्विण्णेन भावेन इव पश्चिमदिगंगणे पदं निक्षिपतः,......ततश्च मिमंक्षयेव पश्चिमसागरं शनैः शनैरुपसरतः।

बभूव तीव्रतरं दृष्ट्वा साक्षात् स्वं सम्राजं......भल्लहस्तं......निष्कवचं ......मंदस्मितं......तुरगाधिरूढं......आगच्छन्तं,......आगत्य च साधारण-सैनिकमिव स्थानमेकतमं महाद्वारसंमुखीनं गृह्णन्तम्, अन्ते तृतीयस्य दिवसस्य ।

अधिजगाम......पश्यत एव समुत्तप्तायोगोलकलोहितस्य......विष्णुपद-व्रणस्येवार्द्रस्य रक्तरक्तस्य तपनस्य......परांकाष्ठां......अवलोक्य......तावत्-कालपर्यन्तं मुद्रितमिव दृढं पिहितं, तिर्यक्निपतत्तपनकिरणोद्भाषितविशेषं, असंख्यैः प्रत्यर्थिभिः विफलाक्रमणप्रयासैः सनिर्वेदं निरीक्षितं, नन्दराजकुल-चिह्नचिह्नितं......महाद्वारं संमुखीनस्य परदुर्गस्य......मुखमिव चिरमृतस्य ......शनैः शनैः उद्घाट्यमानमिवावेगेन तदौत्सुक्यप्रवाहस्य प्रचण्डस्य...... तदेव एकलं लक्ष्यीकृत्य उत्कूलं प्रवहमानस्य ।

बभूव सहसाऽपेक्षाभंगकलुषितं दृष्ट्वा प्रचण्डं आरक्तनयनं दर्पदुःसहं गजमेकं प्रौढवयसमारक्तनयनं दर्पदुःसहं गजमेकं......स्यान्नाम स्वनेतारमनु क्रमशस्तस्मात् निर्गच्छन्तीं मालिकां गजानां......प्रचण्डानां कज्जलकृष्णा-नामनलंकृतानां अनास्तृतानां शून्यशून्यासनानां, अंधकारपुञ्जानामिव महतां आ दिनात्ययं शून्यशून्ये तस्मिन् महादुर्गे निलीनानां, अवलोक्य गवाक्षेभ्यो दिनपतिं मुमूर्षुं प्रत्यागतसाहसानां मर्दितुं यथेच्छं दिनश्रियं मदमन्थरं निर्गच्छतां,......नैराश्यराशीनामिव दुर्गान्तर्निलीनानां अवलोक्य गवाक्षेभ्यः नेतारं मूर्तिभंजकानां स्वयमुपस्थितं बहिः महाचत्वरे तन्मिमर्दिषयाऽपारया सहसाऽऽपूरितानां नष्टोपलब्ध स्वजीविताशानां नंदराजसैनिकानां हृदयेभ्यः परिभ्रष्टानां आक्रमितुं यवनसैनिकहृदयानि बहिरागच्छताम् ।

प्रणश्यच्च क्षणमात्रानन्तरं निःशेषं......विभाव्य तस्याः......बहिरागत्य महाद्वारात् क्षणमेकं मूर्तिवदवस्थितायाः, क्षणमात्रानन्तरं सर्वत आरक्ता-

रक्तया आकुञ्चितया दृष्ट्वा अवलोकमानायाः, ततः घ्रातुमिव तद्गंधं बलभारात् दुरुत्क्षेप्यामिव स्वां शुण्डां शनैः शनैः सविलासमिव सर्वदिक् चालयन्त्याः, ततः सहसा कर्णविदारकं चीत्कुर्वन्त्याः ततश्च मदमन्थरयाऽधिक्षेपदुःसह्या गत्याऽग्रे सरन्त्याः······दुराशयतां,······प्रेरयामास च तान् सर्वान् अवलोकयितुमपेक्षया भयत्राणस्य दिशि स्वसम्राजः ।

'तल्यारखान !'—सहसा जुगुञ्ज भयस्तब्धे निःशब्दे वातावरणे स्वरः तीक्ष्णस्तत्सम्राजः, 'गृहाण स्वाधिकारे इमान् गजान्, समर्पितान् (—दृष्टिमुन्नमय्य दिशि दुर्गस्य तावता कालेनासंख्यमानवाकारचिह्नितप्राकारशिखरभागस्य—) एतेन······कलिंजयाधीश्वरेण शरणागतेन !'

स तस्य मूर्तिवन्निश्चलं स्वतुरंगमेऽवस्थितस्य, प्राकारशिरसि ध्वजदण्डस्याधोभागे निरवातनयनस्य तत्रत्यं पुरुषविशेषं (स्यान्नाम) कंचित् ध्यायमानस्यापारात्मविश्वासाऽऽपूरितः स्वरः अपूरयत् तान् सहसा धैर्येण,······ अनुदत् च तान् अवस्थाय स्वे स्वे स्थाने यथापूर्वं प्रेक्षितुं तमपूर्वं गजदलसमर्पणसमारोहम् !

प्रेक्षमाणानां एव तेषां सर्वेषां······तल्यारखानः स्वकरिणीसमारूढः, भयविस्मयनिश्चलया दृष्ट्या तद्गजदलपतिमेव तावत्कालपर्यन्तमवलोकमानः······श्रुत्वा तमादेशं सहसा समुपजातचेतन इव······चिक्षेप एकामनुरोधपूर्णामिव दृष्टिं दिशि स्वस्वामिनः,······साक्षाच्चकार स्वानुरोधवैयर्थ्यमवलोक्य क्षणमेकं युगदीर्घं स्वस्वामिनः आननं तमेव निष्पलकयाऽग्निकणानिव वमन्त्या दृष्ट्या ध्यायमान,······नुनोद च स्वां करिणीं सर्तुमग्रे दिशि गजपत्युः असकृदाघातैः अंकुशस्य सुतीक्ष्णस्य ।

तुनोद ।······परंतु नालभत साफल्यमणुमात्रमपि ।

सा हि······अवलोक्य तं, वनात् निबिडात् आनीतमिव सद्यः, सर्वथाऽनुपशान्तदर्पं, असंस्कृतं,······यूथमादित एव भयमूढा······नोदसहत पदमेकमपि चलितुमग्रे······तदपि दिशि तस्य······अवस्थाय मूर्तिवन्निश्चलं तामेव एकाग्रयाऽऽकुंचितया दृष्ट्या साकूतं सशुण्डादण्डोत्क्षेपं ध्यायमानस्य यूथपस्य ।

अक्षमा चान्ते सोढुं अंकुशस्य सुतीक्ष्णस्य प्रहारान् अरुन्तुदान् निरन्तरान् ······सहसाऽपावर्तत सचीत्कारं, चारभत च प्रपलायितुं पदक्षेपैः क्षिप्रैः स्वसैनिकसंदोहमेव, तामभितः कृतसंमर्दं समुद्दिश्य ।

आरभत सा प्रपलायितुम् ।

तामनु सः यूथपः······जयमिव स्वमुद्घोषयन् प्रचण्डेन बृंहितेन ।

तमनु सः यूथः······हर्षमिव प्रकटयन्, जयजयकारमिव कुर्वन् स्वाधिपस्य कर्णभेदकैः बृंहितैः ।

अवलोक्य तां गजतां तथोन्मत्तां विगलितधैर्यावष्टम्भः······सहसाऽऽरभत सः यवनसेनासागतः······अपयातुं ततः सर्वदिक्······परित्यज्य स्वं स्वं वाहनं, उत्सृज्य स्वं स्वमायुधं, समुपेक्ष्य स्वं स्वं कर्तव्यं, विस्मृत्यानुशासनं, विहाय स्वं स्वं मित्रं मार्गस्खलितं अधःपतितं पददल्यमानं तथैव······आक्रोशमुखरं······कम्पयन् दिङ्मण्डलं हाहाकारेण ।

स तस्य हाहाकार एव बभूव तस्य सैन्यस्यापायोपायः !

स एव हि आचकर्ष ध्यानं तस्या गजतायाः अनुधावनात् तस्याः करिण्याः,······समुत्तेजयामास च तामनुधावितुं तमेव सबृंहितम् ।

महान् अथ उज्जगाम कोलाहलः······तेनातंकितेन हाहा······क्रुद्धेन बृंहितेन······भीतेन चीत्कारेण······व्याकुलेन ह्रेषारवेण······प्रपलायमानपदशब्देन······करुणेन पददल्यमानाक्रोशेन संमिश्रितः ।

आन्दोलयामास च चराचरम् ।

न तु यवनेश्वरम् ।

स तु क्षणमेकमेव अवलोक्य तद्दृश्यं समस्तं······प्रधावद्भिः तत्सैनिकैस्तदनुधावद्भिः मुहुः मुहुः दन्तयुगलमुत्क्षिपद्भिः असकृत् स्वं मस्तकं चालयद्भिः वारं वारं स्वं शुण्डादण्डं पुच्छदण्डं च प्रक्षिपद्भिः गजैः, भयकान्दिशीकैः तुरंगमैः, आलानबद्धैः प्रपलायितुमसमर्थैः भयातिरेकवशात् परस्परमेव शृंगाशृंगि कलहायमानैः भारवाहिकैः बलिवर्दैः आकुलाकुलं······पदसहस्राहतरजःपटलधूसरं······दृढमाबबन्ध स्वमोष्ठपुटः,······अन्तःक्षोभवशात् क्षामतरवदनः······अस्मयत······सकुत्समिव ।

व्यापारयामास च स्वं तुरगं, आरोहात्मविश्वासापूरितमिव क्षोभे तस्मिन् अक्षुब्धं, क्षणमात्रानन्तरमेव दिशि तस्य यूथपस्य······संमर्देऽपि तस्मिन् सुलभप्रत्यभिज्ञेयस्य ।

'हे !'—आजुहाव तं सदर्पेण एतेनाह्वानेन······उपेत्य तं वामपार्श्वतः क्रोधघर्घरस्वरम् ।······तेनापि असंतुष्टः······पस्पर्श तं पार्श्वे तीक्ष्णेनारुन्तु-

देनाग्रेण स्वभल्लस्य ।······तेनापि असंतुष्टश्च······बभाज तत्सांमुख्यं······ अपशब्दमुखर: क्रोधज्वलत्कनीनिक: प्रस्फुरन्नासापुट: ।

कुर्वंस्तथा न क्षणमपि मनसि चकार स: क्षेमं स्वशरीरस्य दुश्चिकित्स्येन जीर्णज्वरेण क्षामक्षामस्य, भवितव्यं वा स्वसाम्राज्यस्य सद्य:प्रस्थापित-स्यान्त:–स्फुटत्–उत्तराधिकारकलहभंगुरस्य ।

कुतो हि साहसिकानां समुत्तेजितानामेतावती विवेकशक्ति: ?

अधिपस्तु गजताया:, अनुधावनावेशवशात् अश्रुतप्रायाह्वानोऽपि, भल्ल-स्पर्शं सुदु:सहं क्षुद्रकीटकदंशबुध्या समुपेक्षमाणोऽपि, अवलोक्य एकं क्षुद्रं द्विचरणमकस्मात् स्वपुरत:······अवरुन्धानं तस्यानुधावनमार्गं······न केवल-मवरुन्धानं अपि तं–तावत्या गजताया अधिपं–सदर्पमाह्वयन्तं द्वंद्वयुद्धाय······ तर्जयन्तं च एकेन वैतसेन क्षुद्रेण दण्डेन वितस्तिमात्रदीर्घेणाकस्मात् प्रज्वलित-क्रोध:,······तमेव एकाकिनं सर्वक्षोभकारणं मन्यमानं······तत्याजानुधावन-संकल्पं तावत्या कालकलया दृष्टिपथं समतिक्रान्तायास्तस्या: करिण्या:, तत्याज नेतृत्वविचारं स्वगजतायास्तावत्या कालकलया सगर्जितं पददलने पदातीनां विचूर्णने च वाहनानां प्रवृत्ताया:,······लक्ष्यीचकार स्वसंमुखीनमेव प्रत्यवायमेकलं स्वकोपस्य, उच्चिक्षेप स्वं शुण्डादण्डं,······अपाववार स्वं मुखाग्रं रक्तारक्तं प्रस्रवल्लालारसं सिस्वादयिषयेव मानवरक्तस्य,······ अवलोकयामास स्वसंमुखीनं क्षणमेकं ईक्षणाभ्यां प्रदीप्तांगारकल्पाभ्यां, आच-क्रामच तं दुष्प्रसहेन वेगेन······किञ्चिदवनमितगण्डस्थल:······किञ्चिदा-कुंचितलोचन: बृंहन् कर्णकर्कशम् ।

इयत् कर्कशमासीत् तस्य तद्बृंहितं······यत् तद्विजित्य तं प्रद्रवकोला-हलं, न्यक्कृत्य गजताया विजयोन्मत्तं बृंहितरवं, बधिरीकुर्वत् सर्वदिक्पाल-कर्णेन्द्रियं······आचकर्ष ध्यानं सहसा स्खलितपदक्षेपाणां सप्ताश्वाश्वानामपि पश्चिम–सागरे मिमंक्षूणाम् ।

किं तर्हि आश्चर्यं सर्वेषामेव सन्निकृष्टविप्रकृष्टानां प्राणिनाम्–इत्यत्र ?

आकृष्टध्यानास्तेन······ते प्रधावन्त: यवनसैनिका उच्चावचा: प्रजहु: स्वं प्रधावनं कान्दिशीकं,······ताननुधावन्त: ते अकुतोभया: नंदगजा: तत्यजु: स्वम् अनुधावनं,······दुर्गप्राकारशिरसि कृतसंमर्दा:, वेगेन क्षीणतरीभवता, सांध्येनाऽऽतपेन समुद्भास्यमानविशेषा:, हर्षं स्वं विविधाभिश्चेष्टाभि: अभि-

व्यंजयन्तस्ते दुर्गसैनिकाः नियेमुः स्वं प्रकाशनं भावस्य,······प्रचक्रमुश्च ते सर्वेऽपि······एकचित्ता इव, एकप्राणा इव, एकजीवा इव,······अवलोकयितुं तत् सर्वथाऽसमं द्वंद्वयुद्धं नरकुञ्जरयोः······नयनागतपञ्चप्राणा इव······मूकमूकाः······चित्रलिखिता इव स्तब्धाः ।

नात्र आश्चर्यं किमपि ।

दिदृक्षा हि परसंघर्षस्य······तस्यापि तथाविधस्याभूतपूर्वसदृशस्य······सार्वत्रिकी,······प्राणिमात्रसुलभा ।

अनभिज्ञौ नितान्तं तेषां सर्वेषां दिदृक्षायाः (–उपस्थित्या एव, किं पुनः दिदृक्षायाः ?–), प्रयतमानाविव घस्तुं, इच्छन्ताविव दग्धुं परस्परं स्व-स्वदृष्टिभ्यां······तौ नरकुञ्जरौ······अथ······प्राक्रमेतां योद्धुं पणीकृत्य स्वान् प्राणान्, रक्षितुमात्मानं प्रतिद्वंद्विनः कुटिलेभ्यः आक्रमणेभ्यः, आक्र-मितुं च तं स्वयं कुटिलतराभिः विधाभिः ।

मूर्तस्य शारीरिकस्य बलस्येव प्रबलस्य तस्य कुञ्जरस्य विग्रहिणः बौद्धिकस्य चातुर्यस्येव चपलचपलस्य तस्य नरस्य च तत् द्वंद्वयुद्धं······प्रहर-दीर्घमपि······इयत् लोमहर्षकं······इयत् चित्ताकर्षकं······इयत् मनोवेधकं आसीत्······यत् सदागतिः सदागतिरपि विस्मृत्य स्वं स्वभाव बभाज इव स्थिरतां,······पश्चिमसागरमुपसृतोऽपि दिवाकरः समुपेक्ष्य स्वकर्तव्यं व्यलं-बत इव पश्चिमदिगंगणे,······पूर्वं क्षितिजं सत्वरमुपेतया सायंसंध्यया सूचित इवातुरातुरः प्रधावनश्रमारक्तमुखबिंबः अवज्ञाय प्रकृतिनिदेशं स्वसमयात् पूर्वमिवाविर्बभूव निशाकरः······तद्दिदृक्षया !

श्रुतमस्माभिः यत्–निशामुखीने गगनांगणे ताद्रात्रिके महान् संदोहो-ऽपि नक्षत्राणां अभूतपूर्वसदृशः आसीत् उपस्थितः······तद्दिदृक्षया !

समुपेक्ष्य गतागतानि······सुखदुःखानि······प्राणिनां······स्वं स्वं कर्तव्यं आदिशक्तिप्रदत्तमनादिनः कालात् अनुतिष्ठन्तीनामतिमानवीनां शक्तीना-मपि मनस्तथा संमोहयत्······तत् युद्धं नरकुञ्जरयोस्तत्रत्यमपारं प्रणि ! संमर्दं मंत्रमुग्धमिवाकरोत् स्थिरं······नयनागतप्राणं······विस्मृतस्वपरभावं ······इत्यत्र किमिवाश्चर्यम् ?

प्रहरदीर्घस्यापि क्षणिकस्येवालक्षितदैर्घ्यस्य तस्य द्वंद्वयुद्धस्य प्रारंभे तिर्यक्निपतद्दिवाकरकरप्रकाशिते······अलक्ष्यत सर्वैः सः कुञ्जरः······आदा-

वेव कस्यापि अवशः, तत्रापि मदोद्धतः, तत्रापि अनुभूय प्रत्यवायमनुधावने करिण्यास्तथाऽलंकृतायास्तन्मनोहारिण्याः क्रुद्धः,……तत्प्रत्यवायकारणं, क्षुद्र-मेकं द्विचरणं, स्वपराक्रमार्जिताधिपत्यं तं तथाऽधिक्षिपन्तं—तदपि समक्षं तदनुयायिनां, समूलं भेत्तुं मर्दितुं चूर्णयितुं बद्धपरिकरः,……विवशीकुर्वन्निव विजयश्रियं वरितुं तं बलात्।……महान् हि आसीत् तस्य क्रोधः (—कस्येन क्रोधः व्याहतस्य कामातुरस्य क्रोधमतिवर्तितुं शक्नोति ?—)……दुर्गप्राकार-शिरसि कृतसंमर्दानां दुर्गस्थानां हर्षाकुलेन कोलाहलेन, कुण्डलीकृत्य द्वंद्व-युद्धस्थलमेकदेशतः अचलमवस्थितानामपि बृंहितैः सततं उत्साहं तस्य वर्द्ध यतां गजानां चीत्कारेण च सततं परिवर्ध्यमानः।……मध्येऽचिरोदितबाल-निशाकरकराभिव्यज्यमाने……किंचिद्विगतमदावेश इव, किंचिद्विलुप्त-क्रोधावेग इव, अनूभूय सामर्थ्यं कल्पनातीतं स्वप्रतिद्वंद्विनः आपातक्षुद्रस्य द्विचरणस्यापि सहस्रचरणस्येव चपलचपलस्य किंचिद्विस्मित इव, धृत्वा धैर्यं कुर्वन्निव प्रयासं उत्तरोत्तरं दुर्बलीभवन्तमनुनेतुं तां तद्वरणाय।……अन्ते च पूर्णोदितसुधांशुप्रभासिते……नितान्तं श्रान्तः, अत्यंतं खिन्नः, असंख्यभल्लक्षतप्रस्रवदरुधिरक्लिन्नगात्रः, विलुप्तधैर्यः, विनष्टविजयाशः: गवेषयन्निवावसरं प्रपलायितुं तस्याः रणस्थल्याः यथाकथंचिदपि।

प्रारंभे तस्य द्वंद्वयुद्धस्य……निःस्तब्धतया एकछत्रं प्रशासितायां रण-स्थल्यां तस्यां……शशासुः गगनमण्डलं विविधाः कोलाहलाः, पर्यन्तपर्वत-वासिभिः निशाचरैः श्वापदैः स्वस्वनिलयेषु निलीनैः मूकमूकैः साश्चर्यमा-कर्णिताः।……आदौ दुर्गप्राकारशिखरमधिष्ठाय नयनसौख्यमनुभवतां नंद-सैनिकानां सोपहासैः सकुत्सैः आह्वानैरेव, अधिपं स्वं तथाऽऽक्रामन्तं वीक्ष्य सगर्वाणां सोत्साहानां उत्क्षिप्योत्क्षिप्य स्वं स्वं शुण्डादण्डं तं प्रोत्साहयतां उपहार (!)—गजानां चीत्कारैरेव,……मध्येऽवलोक्य कुंजरं तं न्यूनीभव-दावेशं स्वामिनं च स्वं पूर्ववदेवाविचलितेन धैर्येण युद्धयमानं प्रत्यागत-प्राणानां, प्रोत्साहयितुं तं 'अल्लाहो अकबर !……अल्लाहो अकबर !' इत्युद्घोषतां यवनसैनिकानां रणगर्जनैरपि,……अन्ते च समीक्ष्य विगतमदं तं कुञ्जरं श्रान्तमधीरं ततः अपयियासुं, अनुमाय च विजयं स्वस्वामिनः सुनिश्चितं हर्षोन्मत्तानां विस्मृत्योच्चावचविचारं अन्योन्यमालिंगतां यवन-सैनिकानां 'जिन्दबाद !……जिन्दबाद !' इति उद्घोषैरेव संमिश्रिताः !

नरकुंजरयोः अभूतपूर्वसदृशस्य तस्य द्वंद्वयुद्धस्य परिवर्तनानि तानि····· कृते दर्शकानां विस्मयंगमान्यपि·····नासन् एकान्ततः अनपेक्षितानि ।

कुंजरो हि·····उपेतोऽपि महत्तरेण शारीरिकेण बलेन·····आसीत् हीनतर एव बौद्धिकेन तेन·····अपेक्षया नरस्य । अत एव सः·····अदूरदर्शी (–कुतो हि पशोस्तस्य दूरदर्शिता ?–) उपयुयोज स्वं शारीरिकं बलं सर्वात्मना प्रारभत एव द्वंद्वयुद्धस्य,·····न किमपि संचिकाय कृतेऽनागतस्य, ·····उपयुयोज न शान्तेन चित्तेन, अपि तु क्रुद्धेन ।·····अतः सः·····सुदीर्घ-परिश्रमानन्तरं श्रान्तः, साक्षात्कृत्य स्वप्रयत्नानां अकिंचित्करत्वं, अनुभूय स्वस्य शारीरिकस्य बलस्य वैयर्थ्यं···सहसा बभूव विस्मितः, अथ हतोत्साहः, अथ हतबलः, अन्ते चापययियासुः·····स्वप्रत्यर्थिसान्निध्यात् ।

नरस्तु·····हीनतरोऽपि शारीरिकेण बलेन·····आसीत् उपेतः महत्तरेण बौद्धिकेन तेन·····अपेक्षया कुञ्जरस्य । अत एव सः·····दूरदर्शी (–स्वतः स्पष्टैव सर्वदा विजयश्रियाऽलंकृतस्य तस्य दूरदर्शिता !–) न उपयुयोज स्वं शारीरिकं बलं सर्वात्मना प्रारंभत एव द्वंद्वयुद्धस्य,·····संचिकाय तत् यावच्छक्यं·····उपयुयोज च बौद्धिकं तत् शान्तेन चित्तेन । अत एव न शश्राम किंचिदपि, प्रत्युत साक्षात्कृत्य परिणामकारित्वं स्वस्य बौद्धिकस्य बलस्य·····क्रमशः बभूव प्रवृद्धोत्साहः, अथ प्रवृद्धबलः, अन्ते चोपययियासुः स्वं प्रत्यर्थिनम् ।

उपलभ्य च योग्यं क्षणं अन्ते प्रथमस्य नैशस्य प्रहरस्याविदितगतस्य ·····सहसा बिभेद तं गण्डस्थले·····लक्ष्यीकृत्य तद्भागं मध्यवर्तिनं स्वेन चंद्रातपोद्भास्यमानसुतीक्ष्णांग्रप्रदेशेन पुरुषाधिकप्रमाणेन भल्लेन,····उपवेश-यामास तं वेदनाविह्वलं गण्डिलस्थलनिःसरद्रुधिरप्रवाहक्लिन्नशिथिलशुण्डा-दण्डं, करुणकरुणैश्चीत्कारैः स्वं पराजयं स्वीकुर्वाणं रणस्थलौ,·····अधिरोप्य तन्मस्तकेऽवनमिते स्वं भल्लं·····अस्मयतास्फुटं·····भूषितः विजयश्रीवरण-मालया,····निगडयामास च स्वां पराभिभविन्तीं दृष्टिं सह दृष्ट्याऽश्रुपूर्णया भस्मावृतांगारकल्पया श्रान्तया तमेव एकाकिनं–स्यान्नाम सभयं सादरं सविस्मयं–ध्यायन्त्या ।

तथा आबद्धदृष्टिः सः करी·····विज्ञाय इव तन्मनोगतं·····अथ उच्चिक्षेप स्वं शुण्डादण्डं शनैः शनैः, अंगीचकार च सर्वजना ामक्षं एकमात्रेण

बृंहितेःन विनम्रेण तत्प्रभुत्वम् ।

निशम्यैव तत् तस्य बृंहितं······तावत्कालपर्यन्तं चित्रलिखितेव अवस्थाय निश्चलं भरतवाक्यं तस्य द्वंद्वयुद्धस्य लोकमाना सा गजताऽपि विगलितदर्पा विनष्टमदा उच्चिक्षेप स्वं स्वं शुण्डादण्डं,······अंगीचकार च सर्वजनसमक्षं समवेतस्वरेण बृंहितेन विनम्रेण तत्प्रभुत्वम् ।

तदनुपदमेव सहसा उज्जगामापारात् निबिडात् यवनसंमर्दात् सुधाधवलचन्द्रिकोद्भास्यमानात् 'हाकिमे आला ए हिंदोस्तां जिन्दःबाद'······'हाकिमे आला ए हिंदोस्ताँ जिन्दःबाद' इति जयनिर्घोषः,······आरभत च दुर्गप्राकारप्रतिध्वननसंवर्द्धितः प्रत्यन्तपर्वतानालिकानुरणनोपबृंहितः······विलाययितुं प्रसह्य मूकं वधिरं निष्प्राणं भीतभीतं नन्दसैनिकसंमर्दं दुर्गप्राकारशिखरात् ······उपसर्तुं च चतुर्दिक् चिकथयिषयेव तस्याः रोमाञ्चकारिण्याः 'युद्धस्यकथायाः रम्यायाः' जनेभ्यः प्रसह्य जागरितेभ्यः प्रगाढायाः निद्रायाः सर्वस्य भारतवर्षस्य ।

इयान् व्यापृतचित्त आसीत् नूनमासीत् स यवनसैनिकसंमर्दः······ उत्क्षिपन् स्वं स्वं शस्त्रं, समालिंगन् परस्परं,······तस्मिन् जयनिर्घोषे यत् न एकोऽपि तन्मध्यात् तटस्थ इव शशाक लक्षयितुं······कदा खलु तत्स्वामी आजुहावान्यतमं गजदलाधिकारिणां समीपतरवर्तिनं दृष्टिक्षेपेणैकमात्रेण, आदिदेश तं समीपतममुपसृतं नेतुं तं उपहारगजप्रमुखं स्वसैन्यसंनिवेशगजविभागे,······कदा खलु सः गजप्रमुखः अनुसृत्य तदाज्ञां समुस्थितः अनुससार तमधिकारिणमवनमितमस्तकं विलंबमानशुण्डादण्डः भूतलनिखातसाश्रुलोचनः,······कदा खलु तमनुचचाल अन्यगजवृन्दः तत्समानावस्थः, कदा खलु च तत्स्वामी अपससार तस्याः रणस्थल्याः शनैः शनैः,······प्रविवेश च स्वं पटप्रासादं,······अक्षिपन् एकामपि दृष्टिं दिशि प्राकारस्य द्वेषणस्य,······ तथा तेन······एकलेन······पराभूतस्य,······अचिन्तयन्निव विषये तस्य क्षणमेकमपि ।

न एकोऽपि मध्यात् तस्य,······चिरात् स्वं स्वं पटकुटिरं निवृत्तस्य, कथमपि प्रशमय्य क्षुधां अकस्मात् जागृतां शय्यायां निपतितस्य, श्रान्तश्रान्तस्यापि उत्तेजनावशात् निद्रातुमसमर्थस्य, स्मृतिचक्षुषा सद्यः समाप्तं तत् द्वंद्वयुद्धमेव लोकमानस्य······शशाक ज्ञातुं यत्—स्वामी तस्य······प्रविष्टोऽपि

स्वं पटप्रासादमचिन्तयन्निव विषये तस्य द्वेषणस्य·····चिरं वस्तुतश्चिन्तयामास विषये तस्य·····पीत्वाऽन्यमनस्कभावेन किमपि औषधमिव तत्सेवायां सभयमिव समुपस्थितेन स्वराज्यवैद्येन प्रदत्तं, निषिद्धय् सर्वप्रवेशं स्वं शयनकक्षं प्रविष्टः,·····तत्रत्ये सुखासने एवोपविष्टः·····सर्वथा उपेक्षमाणः अनुरोधं स्वशरीरस्य श्रमातुरस्य विश्रामाय दीर्घदीर्घाय ।

चिरं खलु स चिन्तयामास–'किम्·····अवमाननीयः निःशब्ददुःसहं द्वेषणोऽयं तथा समर्प्य तत्सेवायां (!) वृन्दं तादृशानां गजानां उपहारतया तं उपहसन् (–न केवलमुपहसन्, अपि तु कुर्वन् कृत्वा तथा कापुरुषोचितं प्रयासं तदुन्मूलनाय–), अकृत्वा किमपि अधिकतरम् ? उत आक्रमणीयः दुःसहवेगं प्रभाते एव प्राप्तप्राये, विनाशनीयश्च निरपवादम् ?'–इत्येतस्मिन् विषये ।

विवेकशक्तिस्तस्यानुभववृद्धा उपदिदेश तमनुसुतुं प्रथमं पर्यायं····· कथयित्वा तं–'कृत्वा एवं त्वं, भारतवर्षमपि स्वे साम्राज्येऽन्तर्भावयितुं कृतसंकल्पः, आत्मानं भारतीयानामुदारमनस्कतां स्वीकुर्वाणं प्रदर्शयन् बहूनां भारतीयानामादरपात्रीभविष्यसि'–इति । स्वाभाविकी प्रवृत्तिश्च तस्याऽऽजन्मनः असहनस्य प्रेरयामास तमवलंबितुं द्वितीयं·····प्रकटयित्वा तत्पुरतः दुराशयत्वं तस्य प्रयत्नस्य द्वेषणस्य साभिनिवेशम् ।

चिन्ता अथ सा तस्यान्तमियाय प्रारंभेऽन्तिमस्य तस्य नैशस्य प्रहरस्य युगदीर्घदीर्घस्य·····सह उदयेन निश्चयस्य वज्रदृढस्य वरीतुं प्रथममेव पर्यायम् ।

कियान् नूनमासीत् प्रभावस्तस्मिन् तस्य विवेकशक्तिः, कियांश्च तस्यापायचिन्ताप्रवृत्तेः निसर्गप्रदत्तायाः अकस्मात् प्रबुद्धायाः असकृच्च तस्मै दुष्परिणामान् खण्डप्रायस्य विद्वेषणदेशस्याऽऽभ्यन्तरतरे सुदूरे प्रदेशेऽकृत्वैव पार्ष्णिरक्षोपायान् प्रवेशस्य दर्शयन्त्याः·····एतत्तु न विद्मः ।

एतदेव विद्मः यत्–कृतनिश्चयः दर्शयितुं सर्वजनसमक्षं क्षुद्रत्वं····· तुच्छत्वं·····अकिंचित्करत्वं प्रयत्नस्य तस्य द्वेषणस्य प्रस्थानेन ततः स्वं गृहराज्यमभिलक्ष्यापरेद्युरेव शान्तेन भावेन·····सः·····मध्येऽन्तिमस्य तस्य नैशस्य प्रहरस्य·····उदतिष्ठत् तस्मात् सुखासनात्, निरगच्छत् शयनकक्षात् शनैः शनैः, उपासरत् पटप्रासादप्रवेशद्वारं, तिष्ठंश्च तन्मध्य एव·····

चिरमवालोकयत्‌ ··· किंचिद्‌दूरावस्थितमपि महाकारतया समीपावस्थितमिव भासमानं, तिर्यक्‌निपतत्‌सुधाकरकरप्रकाश्यमानविशेषं, निर्जनतया चित्र-लिखितमिव प्रसुप्तमिवावभासमानं दुर्गं तं द्वेषणस्य, ··· अन्यमनस्कतयाऽसकृत्‌ स्पृशन्‌ स्वं निःस्नेहं श्मश्रुपाशं, चिन्तयन्‌ किमपि किमपि, ····· अनभिज्ञः अनु-मान्य तमुपसरन्तं प्रवेशद्वारं तत्पादरवेण चिरपरिचितेन निःशब्दं ततोऽपसृ-तस्य, अपसृत्य पटप्रासादकोणे एकस्मिन्‌ अवस्थितस्य, अवस्थाय तत्र निश्चलं तद्दिशि एव ····· तमिव एकलं ····· नयनप्रान्तेन सभयमिवावलोकयतः सशस्त्र-स्य द्वाररक्षकसैनिकस्य, ····· अनभिज्ञश्च दुर्गप्राकारशिरसि आपाततः निर्जने, शून्यशून्यराजध्वजदण्डसमीपे एव, अवस्थितस्य, अवस्थाय तत्र निश्चलं तद्दिशि एव तमिव एकलमवलोकयतः, किंचिद्‌दूरावस्थानात्‌ औन्नत्यवशाच्च प्राकारशिखरस्य पुत्तलमात्रपरिमाणस्येव भासमानस्यापि वस्तुतः उन्नतस्य पुरुषस्यैकस्य ।

अनभिज्ञ एव च सः ततः अपावर्तिष्यत ····· किंचिद्वलितः, विभाव्य निशान्तं प्राप्तप्रायं गन्तुं अन्तः पटप्रासादस्य प्रवृत्तः ····· क्षणमात्रानन्तरं ··· यदि एकः क्षणदृष्टनष्टः अस्पष्टः प्रकाश इव एकश्चिन्तं तस्य न आकर्षिष्यत्‌ ।

तेनाकस्मात्‌ आकृष्टचित्तस्तु क्षणमात्रं मूर्तिवत्‌ अवातिष्ठत सः तथैव किंचिद्वलितः, ····· 'कुतः खलु अयम्‌' इति विस्मयमानः निरीक्षते स्म सूक्ष्मे-क्षिकया प्राकारशिखरं संमुखीनं, ····· अवलोकयामास च क्षणमात्रानन्तरं ··· शून्यशून्यराजध्वजदण्डस्याधस्तादेवावस्थितं, तद्दिशि एव, तमिव एकलमव-लोकयन्तं पुरुषमेकम्‌ ।

'कः खल्वयम्‌ ? ····· किं दुर्गसैनिकानामन्यतमः, अवलोक्य ह्यस्तनं स्वनृपपराभवं विस्मितः, जिज्ञासयाऽअस्माकं भाविनः पदक्षेपस्य, महति प्रत्यूषे, एकाकी एवात्राऽऽगतः ? ····· उत नंदस्य राजकविः, तस्य पौरुष-प्रशंसायामेव वीतजीवनः, साक्षात्कृत्य ह्यः तस्य पौरुषप्रकाशं खिन्नः, समुत्-पादयितुं स्वमनसि प्रत्ययमस्माकं वास्तविकत्वे साक्षाद्द्रष्टुं अस्मान्‌ सूर्य-प्रकाशेऽत्र उपस्थितः ? ····· आहोस्वित्‌ नंद एव पुनः प्रतिष्ठापयितुं स्वप्राणान्‌ कण्ठगतान्‌ अवलोक्यास्मान्‌ इतः प्रतिनिवर्तमानान्‌ अत्र स्वयमा-गतः ?'—व्यस्मयत सः तन्निखातलोचनः ।

व्यस्मयत स चिरं । न पुनः शशाक तं प्रत्यभिज्ञातुं याथार्थ्येन ।······ नापि तत्राऽऽश्चर्यम् ।······कथं हि सः अशक्ष्यत् प्रत्यभिज्ञातुं तम् ?······स हि आसीत्······धर्मपालः ।······आम् !······धर्मपालः,······पांचनदस्य राज्ञः जयपालस्य पौत्रः,······तस्यचिररिपुः,··· तस्य विनाशाय सततं प्रयतमानः··· सततं पराभूयमानोऽपि प्रयत्नं स्वं सततं आदौ पितामहस्य ततः स्वजनकस्य तदनतरं स्वसोदरस्य तदनंतरं स्वमित्रस्य तदनंतरं भारतीयस्य नृपान्तरस्य नंदसदृशस्य साहाय्येन कुर्वाणः,······असकृद् भावितोऽपि सकृदेव दृष्टपूर्वः,······सोऽपि अकृततारुण्यप्रवेशः······सह तत्पितामहेन पराभूतेन !

यदि नाम सः अशक्ष्यत् प्रत्यभिज्ञातुं तं,····अशक्तोऽपि वा कर्तुं तथा··· अशक्ष्यत् वेत्तुं तन्मनोगतं तात्कालिकं······किमिव सः अकरिष्यत् ?

किं ब्रूथ ?······नैवाकरिष्यत्,······कृतमपि वा पूर्वं अत्यक्ष्यत्······ स्वं संकल्पमवमानयितुं तदाश्रयदायिनं कलिंजयाधीशं उपेक्षयैव सावज्ञया, निर्वर्तितुं च स्वं गृहराज्यं संतुष्य प्राप्तेनैव विजयेन,······परिकरं स्वं अभन्त्स्यत् उपरोद्धुं तं दुर्गं आतद्विनिपातं, बन्दीकर्तुं, प्राणदण्डेन च दण्डयितुं तदन्तःस्थित मानवमात्रम्—इति ?

परंतु······कथमिव—

अथवा—किमनयाऽभूतसंभावनया ?

भूतमेव भावयामः ।

अशक्तश्च तं प्रत्यभिज्ञातुं······अन्ते······व्यावर्तयत् स्वे लोचने ततः,··· न्यवर्तत् चान्तः पटप्रासादस्य······समुद्विग्नमानसः ।

सांमुख्यं हि चिरद्वेषणस्य······अज्ञाततत्वस्यापि······समुद्वेजयत्येव मानवमानसम् ।

समुद्विग्नमानस एव चाऽऽरभत······नैशजागरणारक्तलोचनः······ज्वरग्रस्तगात्रः······द्यमानप्रत्यग्रक्षतः···आदेष्टुं तत्तत्सेनादलाध्यक्षान् स्वान्··· तत्सेवायामनुपदमेव समुपस्थितान्, दृष्ट्वा तच्छरीरावस्थां सचिन्तामपि अभिव्यञ्जितुं स्वां चिन्तामसमर्थान्, अधोवदनान्, कलिंजयनरेशदण्डधारणादेशमुत्प्रेक्षमाणान्, प्रतिशोधसमुत्सुकान्······चालयितुं स्वानि स्वानि दलानि 'दिशि उत्तरस्यां' समुद्दिश्य गृहदेशं विदूरवर्तिनम् ।

आकर्ण्य तस्य तमादेशं क्षणमात्रं विस्मिता अपि,······नांशतोऽपि

प्रकटयामासुस्ते स्वं विस्मयं (–किं पुनरुचुः स्वं मतं तदादेशविपरीतं !–), चिरस्य जानन्तः अनाहूतपरामर्शासहं तस्य स्वभावं कोपनम् ।......बभूवुश्च मुहूर्तमात्रानन्तरं व्यापृतास्तदादेशानुपालने......स्वपरिवारजनपुनर्मीलन-संभावनया प्रतिक्षणं वर्द्धमानया समुत्सारितभावनान्तरया प्रमुदितमानसाः ।

स तेषां प्रमोदः......अवलोकयत एव सहस्रांशोः चक्रनेमिक्रमेण गगन-मध्यमारुरुक्षोः......प्रससार सर्वत्र तत्सैन्यसंनिवेशेऽचिरादेव,......पूरयामास तं समुत्साहेनापारेण,......नुनोद कर्तुं तं उपसंहारं स्वस्वसामग्र्या विवि-धायाः,......अशाकयच्च तं योजनप्रसृतमपि समाहर्तुं स्वं विस्तारं, चलितुं च स्वगृहदेशदिशि सजयघोषं......रजोधूसरीकुर्वन् स्वर्णाभं अपराह्णसूर्या-लोकम् ।

इयान् अपारः आसीत् तस्य, दिवाऽपि स्वगृहस्वप्नमवलोकमानस्य, स्वगृहदेशदिशि शनैः शनैश्चलतः, समुत्साहः......यदवलोक्य तं प्रमुख इव परिवारस्य प्रसन्नः, विस्मृतचिन्तः सः तस्य नेता न क्षणमपि अलभतावसरं लक्षयितुं पुनरेकवारं......विजितदुर्गप्राकारशिखरे शून्यशून्येऽवतारितराज-ध्वजदण्डसमीपे एवाहर्मुखात् आरभ्य तथैव निश्चलमवस्थितं, तत्प्रस्थानमेव निर्निमषेमवलोकयन्तं पुरुषं तं......धर्मपालं......सहजगौरवमण्डितमपि निःश्रीकमिव भासमानं, धवलविरलीभूतकृष्णकुटिलचिकुरनिचयं, वलितभाल-पट्टं तीक्ष्णतर-भेदकतर–नेत्रयुग्मं, प्रौढावस्थमपि कृतवार्धकप्रवेशमिव भास-मानं, 'शोकेन......अन्तर्गूढघनव्यथेन' कृतचिरंतनवासमिवाऽऽपतन्तं, कृश-तरवपुषं,......विषण्णेन मनसा चिन्तयन्तं–

'तत्र गच्छति......अक्षतप्रायः......अंशतोऽपि अनपकृतः, किंचिदपि अनभिभूतः, सफलतायाः परमोच्चं शिखरमारूढः......मूर्तिभंजकः,...अपहरन् न केवलं धनं......अपि तु स्वातंत्र्यं......अभिमानं......मनोबलं......भवितव्यं मम देशस्य !'

'तत्र गच्छति......विफलीकृत्य मम......आम् ! कपटकुटिलं......नवीन-तमं प्रयत्नं......तत्पराभवाय सततं इमान् संवत्सरान् युगदीर्घान् प्रयतमा-नस्य !'

'कियता चातुर्येण सः कल्पितः आसीत् मया......अवलोक्य स्वसुहृदं नंदं......मत्परामर्शानुसारं न केवलमाक्रामकप्रतिरोधाय बद्धपरिकरं अपि तु

संघीकृतौत्तरभारतीयनृपबलनायकपदमपि स्वीकृतवन्तं······कृतमहत्सेनासंनहनमपि निशम्यैव द्वेषणस्य भारतवर्षप्रवेशसमाचारं सहसा च्युतधैर्यं······परित्यज्यायोधननिश्चयं प्राक्तनं वीरोचितं छत्रछायामेव अस्य दुर्गस्याजय्यस्याऽऽगतं,······अत्र कृतसर्वविधस्वसुरक्षोपायमपि अप्रत्यागतसाहसं······शरणगमनातुरं······सहसा क्रोधाविष्टेन ।'

न खलु सः नंदः आदौ ऐच्छत् कर्तुं सहकार्यं प्रयत्ने मया परिकल्पिते समर्पयित्वा सेवायां द्वेषणस्य तदभीष्टोपायनमिषेण वृन्दं गजानां वन्यानां दुष्टानां, सुदीर्घप्रयत्नानन्तरमपि अवशंवदीभूतानां, मृत्युदण्डं नंदेनैव प्रदत्तं प्रतिपालयताम् । (सनिःश्वासं) मया खलूत्प्रेक्षितमासीत् यद्वृन्दः सः, उपायनमिषेण प्रेषितो बहिर्दुर्गात् अन्ते दिवसस्य तपनतापदुःसहस्य······स्वभावत एव कामाचारः······जिघ्राय गन्धं हस्तिनीनां द्वेषणसैन्यसंनिवेशवर्तिनीनां कामातुरः······तथाऽऽक्रम्यात् संनिवेशं द्वेषणस्यासावधानं तासामभिलाषया······यथा कुर्यात् तं विध्वस्तं कतिपयेष्वेव क्षणेषु,······हन्यात् तत् स्वामिनं, रिरक्षिषया पुरत आगतं,······शमयेच्च व्याधिं विनैव लशुनभक्षणम् !'

'(सखेदं) सर्वं नूनं यथोत्प्रेक्षितं तथैव परिणतमभविष्यत्······यदि सः हताशः कार्तिकेयः······नन्दस्य राजपुरुषः······अधिकृतस्तेन नन्देन······न व्यस्मरिष्यत् कर्तुं तं मदिरापानमत्तं······प्राक् संप्रेषणाद्बहिः ।'

'अथवा······दैवायत्ते साफल्ये······किं क्रियताम् ?'

अयमपि प्रयत्नः मम तत्पराभवाय एतान् संवत्सरान् सततं प्रयतमानस्य······एवं वैफल्ये पर्यवसितः······इतरेतरप्रयत्नवत् !'

त्रयोदश प्रयत्नान् अकरवमहं,······न द्वित्रान् !'

'अकरवं अहं त्रयोदश प्रयत्नान्······आ कैशोर्यात् अद्यावधिपर्यन्तं आदौ स्वनामधन्यस्य पितामहस्य जयपालस्य,······कृत्वाऽऽत्मदाहं स्वपराजयपरंपरालांछनपरिमार्जनं कृतवति तस्मिन् जनकस्यानन्दपालस्य, ततः सोदरस्य शाठ्यप्रयोगकुशलस्य तदनंतरं हृदयभंगेन लोकान्तरं गतवति ताते त्रिलोचनपालस्य,स्खलितधैर्ये तस्मिन् च्युते स्वकर्तव्यकरणात् तदात्मजस्य भीमपालस्य, अन्ते क्षीणवीर्यमवलोक्य स्वकुलं निर्विद्य नृपान्तराणां भारतीयानां काश्मीरनरेशसदृशानां नेतृत्वं साहाय्यं वा अंगीकृत्यानुष्ठितान्, हुत्वा स्वं कैशोर्यं

तारुण्यं पारिवरिकं सुखं ऐश्वर्यं–सर्वमपि–प्रतिशोधाग्नौ प्रकल्पितान्······
त्यक्त्वा स्वं राज्यं दुष्प्रतिरोध्येन रोगेणेव द्वेषणस्य प्रभावेण प्रभावितं
राज्यान्तरेषु भ्रमता, अकृत्वा मानापमानविचारं विस्मृत्य कुलपरंपरागतं
वैरभावं स्वीकृत्य जीवनं याचकस्य तेभ्यस्तेभ्यः भारतीयेभ्यः साहाय्यं याचता
······तान् कूपमण्डूकवृतीन् .स्वधर्मरिरक्षिषया संघटयितुं स्वं सामर्थ्यं सत्येव
समये अनवरतं नुदता प्रस्तावितान् ।'

आप च साफल्यं,······(सविषण्णस्मितं) साफल्याभासं इति तु वक्तुं
युक्ततरम् !······द्विवारमेव,······कृतकयवनस्य स्वसोदरस्य सुखापालस्य
माध्यमेनानुष्ठिते तस्मिन् कपटप्रयोगे, लोहकोष्ठमाश्रित्यावस्थितस्य काश्मीर-
नृपस्य माध्यमेनानुष्ठिते तस्मिन् वनयुद्धे च ।'

'यदि नाम······नृपान्तरसहकृतः तातः काश्मीरनृपो वा······प्रयासं······
तयोरवसरयोः······अकरिष्यत् आक्रमितुं द्वेषणं विश्रान्तं हतबलं······कर्तुं च
तं नामशेषं······ तर्हि······तर्हि······'

'अथवा······किमनयाऽतीतचिन्तयाऽऽत्मसंतापमात्रकारिण्या ?······
अनागतचिन्तैव करणीया ।'

'(सखेदं)······पर्याप्ता खलु सामग्री कृते तस्याः !'

'एभिर्हि व्यतीतैः कतिपयैः संवत्सरैः······परिवर्तितपरिवर्द्धितस्वलक्ष्य
इव लक्ष्यते स मूर्तिभंजकः ।······आदौ तावत् सः······लुण्ठित्वा भारतीयान्
अपारान् धनराशीन् तेषां स्वदेशे नयनेनैव संतोषं लभमान इवालक्ष्यत ।
······न त्वधुना ।······अधुना तु–तावन्मात्रेणापरितृप्तः···विपच्य गांधारान्
अकृतकृत्यंमन्यः······अत्रत्यान् पांचनदप्रदेशसदृशान् भारतीयान् प्रदेशान्
अपि निसर्गसमृद्धान् अन्तर्भावयितुं स्वे साम्राज्ये सततं प्रवर्द्धमाने बद्धपरिकर
इव लक्ष्यते ।······न केवलमन्तर्भावयितुं, अपि तु यवनीकर्तुं ।······अत एव–
तस्य विजितेभ्यः भारतीयेभ्यः प्रदेशेभ्यः समुच्छेत्तुमार्यसंस्कृतिं प्रसारयितुं
च स्वां······एतावान् आग्रहः,······एतावान् अभिनिवेशश्च विनाशयितुं
देवस्थानमात्रम् ।'

'तथा सति तु–महान् अनर्थः ।······भौतिकं हि धनं लुण्ठितमपि पुनर-
भिवर्द्धते शनैः शनैः ।······न तु संस्कृतिधनम् ।······तत्तु सकृत् लुण्ठितं······
विलयमेव याति······आत्यंतिकम ।

'अतस्तस्याऽत्यंतिकः प्रतिरोधः आवश्यकतमः ।......सोऽपि......विना कालातिपातम् ।......अन्यथा......सकृत् अत्र दृढबद्धः......उच्छेत्तुमशक्य एव भविता म्लेच्छसंस्कृतिप्रभावः ।'

'तत्प्रतिरोधश्च तद्विनाशेनैव संभवी ।......नान्यथा ।'

'क्षेत्रान्तरचिकित्स्या एव हि तस्य लोकेषणा' ।

'विनाशे च तस्य......न एकोऽपि शक्तः सांप्रतिकः भारतीयः नरेश, ......एक एवासीत्, तथा......मम पितामहः ।......सोऽपि वैफल्यमेवालभत स्वेषु प्रयत्नेषु......वार्धकदोषवशात् ।

'शक्तस्तु संघस्तेषाम् ।'

'मन्ये—द्वेषणोऽपि सम्यक् जानाति एतत् ।'

'अतएव......सः......यदा यदा प्रयत्नमकरवमहं संघीकर्तुं तान्...... अध्यगच्छं च साफल्याभासमपि स्वे प्रयत्ने......तदा तदा सः नियतं आक्रामत् विशिष्टं भारतीयं, नृपं......भाविनः संघस्य नेतृत्वेन संकल्पितं,...... व्यनाशयच्च मम प्रयत्नं विनाशयित्वा तम् ।'

'(सविषण्णस्मित्) मन्ये—द्वेषणः......सम्यक् जानाति अस्याः संघीभवनकल्पनाया उद्भवस्थानमपि ।'

'अत एव—प्रयत्नशील इव चर्वयितुं मां सप्राणमेव ।'

'सफलीभविष्यन्ति......न वा......प्रयत्नास्तस्य—न जाने ।......एतत्तु जाने यत् प्रयतिष्येऽहं यावच्छक्यम् ।'

'प्रयतिष्ये !......(सनिःश्वासं) किन्तु—लभिष्ये साफल्यमथवा न—इत्येतत् तु न जाने ।......बहवः खलु प्रत्यवायास्तत्र ।......इयती दृढबद्धमूला पार्थक्यभावना नरेशेषु आस्माकीनेषु......भौगोलिकेभ्यः कारणेभ्यः समुत्पन्ना, भाषिकैः भेदैरुपोद्बलिता, लोकाचारपार्थक्यैः संवर्द्धिता, ईर्ष्याभयादिदोषैः सबलीकृता......यत् असकृदुपदिश्यमाना अपि मया......फलमन्ततो आत्मविनाशकं स्वौदासीन्यस्य समुत्प्रेक्षमाणा अपि......ते नोत्सहन्तेंऽगीकर्तुं ऐक्यं, विनाशयितुं च रिपुम्......अहरहः प्रवर्द्धमानबलं...... प्रच्छन्नं परिणामभयंकरं रोगमिव भारतमातुः अगतिकायाः देहं शनैः शनैः आक्रमन्तम् ।'

'मनसि कृत्यैव संभावनां वैफल्यस्य मम प्रयत्नानामेतेषां......प्रवृत्तोऽ-

स्मि······कपटप्रयोगैरपि विनाशयितुं द्वेषणम् ।······प्रयत्नोऽयं मम प्रथमस्तेषाम्······प्राप्तो वैफल्यं निःसंशयम् ।······प्राप्नोतु नाम !······अहताशः एतद्वैफल्येन प्रयतिष्येऽहं भूयोभूयः ।······कर्तुं मम साहाय्यं······अत एव··· मयाऽनुरुद्धः······देवपालः······देव······प्रवेष्टुं द्वेषणस्यसंनिवेशेऽकुतोभयतया किंचित्शिथिलीभूतरक्षोपाये धृत्वा वेषं भारतीयस्य सैनिकस्य कलिंजयनृपस्य द्रव्यलालसया तत्सेनायामेव प्रविविक्षोः······प्राक् कलिंजयदुर्गावरोधात्······शनैः शनैः संपादयितुं तत्र विश्वासं उच्चाधिकारिणां······अवसरं योग्यं प्रतिपालयितुं······ हन्तुं च द्वेषणमेव साक्षात् उपलब्ध एव तस्मिन्–'

सुचिरं चिन्तयित्वा चैवमादि······शनैः शनैः हातुं तं दुर्गं प्रवृत्तं······ तावत्या कालकलया प्रत्यागतप्राणमिव सक्रियम् ।



## त्रयोदशः परिच्छेदः

सः प्रसादस्तस्य यवनेश्वरस्य······औत्सुक्यत्वरितयाऽपि लुण्ठितधन-भारवाहकद्विरदमन्थरया बंदीकृतभारतीयदासमन्दया गत्या स्वगृहदेशदिशि विजितपूर्वान् समाकर्ण्य तत्प्रतिनिवर्तनवार्त्तां भयातुरैस्तद्देशिकैः जनैः परित्यक्ततया शून्यशून्यानपि सस्यसंपन्मण्डिततया नयनसुखदान् दिगन्तप्रसृतान् अनन्तानिव भासमानान् मार्गपतितान् जानपदान् प्रदेशान् अतिक्रम्य प्रचलतः······नाप क्षयं लेशमात्रमपि ।

प्रत्युत वृद्धिमेव आप प्रतिदिनम् ।

समीचीनमेवोक्तं–'क्लेशः फलेन हि पुनर्नवतां विधत्ते' इति ।

तेनोपोद्बलितः सः······स्वप्नदर्शिन्या दृष्ट्या सर्वान् तान् तत्-साम्राज्यान्तर्विलीनान्, तत्संस्कृतिमुररीकुर्वतः, तद्धर्ममनुगच्छतः, तत्-कोषागारं प्रतिवर्षं वर्द्धयतः अवलोकयन्······प्रसन्नमुखमुद्रः······न मनसि चकार लेशमात्रमपि परिश्रमं वा प्रवासस्यानवरतस्य, कफज्वरं वा चिराद्-दृढबद्धमूलं सन्ततौषधिसेवनेन लुप्तमिव लक्ष्यमाणमपि समुल्लंघिते एव पथ्याचरणे कृते एव श्रमातिरेके पुनः पुनः समुद्भवन्तं, दौर्बल्यं वा शरीरस्य अनवरतगत्या वर्द्धमानं, दुर्गमत्वं वा मार्गस्यातिसंकीर्णस्य नगाधिराजमध्य-यायिनः कुटिलकुटिलस्य ।

न शशाक परंतु यथापूर्वमनुभवितुं तं निशम्य वार्त्ताः ।······असकृत् सेवायामुपतिष्ठद्भ्यः वार्त्ताहरेभ्यः······साक्षात्कृत्य तं क्रोशशतविदूरे विपक्षिदेशे दिग्विजये व्यापृतं प्रत्यागतसाहसानां, तद्गृहदेशस्ययैव शान्ति-मसकृद्भञ्जतां, तत्सुतस्य तदनुशासनप्रयत्नान् तिरस्कृत्य शनैः शनैः प्राबल्यमेवाधिकाधिकमधिगच्छतां सेल्जूकानां उद्वर्तनप्रसंगान् निवेदयतीः ।

'······एते सेल्जूकाः······अस्माभिः खलु,······'स्वयं तुरुष्का इमे, अनादिकालात् प्रभृति स्वच्छन्दाचरणस्वभावा अपि, वनेचरप्राया अपि, असंस्कृता अपि, नूनं भविष्यन्ति वशंवदा अस्माकं यथासमयम् अनुभूय

नागरीः सुविधाः,......भविष्यन्ति च–स्यान्नाम सुदूरे भाविकाले–अस्मत्-सैनिकशक्तेरुद्गमस्थानमन्यतममविच्छिन्नं।......महत् खलु साहसं एषां...... शौर्यं च,' इति चिन्तयद्भिः,......स्वयं......राज्यस्य दक्षिणसीमान्तप्रदेशात् आनीय आभ्यन्तरतमे भागे स्थापिताः, उपकृताश्च प्रदानेन विविधानां सुविधानाम्।......परंतु–व्यतीतेऽपि पर्याप्ते समये न जहति एते आत्मनीनं यथेच्छाचारित्वं,......साक्षात्कृत्यैवास्मान् अन्यत्र व्यापृतान् असकृदुन्नमयन्ति शिरांशि स्वानि सफूत्कारं,......अवगणय्य च दण्डधारणप्रयत्नान् मुहम्मदस्य निरंतरान् धर्षयन्ति अधुना केंद्रसत्तामेवास्माकम्!–' इति चिन्तयन्......

'अथ मुहम्मदोऽपि......अनुभववृद्धेनातिविश्वसनीयेनामात्यप्रमुखेनोपपन्नोऽपि, प्रबलाऽऽभ्यन्तरबलसाहृतोऽपि......दौर्बल्यात् स्वभावस्य......न शक्नोति एतान् शूरानपि साहसिकानपि अंगुलिपरिगणनीयान् बलात् अनुशासितुम्!......कथं खलु अयं......स्वर्गं गतेषु अस्मासु......शक्ष्यति संरक्षितुं शान्ति सर्वत्र अस्माकं साम्राज्ये......वर्तमान एव काले विस्तारमेतावन्तं प्राप्ते......कालेन तु तावताधिकतरमेव तमुपगते?......कथं कर्तुं च सहकार्यं......अनया विधया वर्तमानः......सोदरस्य......मसूदस्य......निरन्तरं पैतृकं साम्राज्यं परिवर्द्धयितुं सोत्साहं प्रयतमानस्य?......उभयविधमपि कर्तव्यमेतत्......अयं मसूदः......एकल एव करिष्यति इति तु असंभवप्रायम्......असाधारणं स्वं शारीरिकं सामर्थ्यं शस्त्रप्रयोगे प्रदर्शयितुमातुरः......युद्धप्रियः......अयं......यथा शक्ष्यति संवर्द्धयितुं सीमाः स्वराज्यस्यविजित्यान्यान्......न तथा रक्षितुमान्तरां शान्तिम्।......न केवलं न शक्ष्यति, अपि तु–दूषयिष्यति तां स्वयमेव......अनिच्छन्नपि।......स्वभावेन आक्रामक एवायं......अहंमन्यः......परामर्शासहनश्च!......दृश्यते विनीत इव,......सादर इव,......एभिरेव दिनैः......उपस्थितौ एव अस्माकमेव।... (सस्मितं) मन्ये–साक्षात्कृत्यास्माकं तत् द्वंद्वयुद्धं सह तेन दुष्टेन द्विरदेन पुरस्तात् तस्य......कलिंजयदुर्गस्य......तस्मिन् निशामुखे......बहु मन्यतेऽस्माकं शौर्यं......धैर्यञ्च।......परंतु–अयं न तस्य स्थायीभावः।......स तु आक्रामक एव......योग्यायोग्यविवेकाक्षमश्च......इति स्वभावौ इमौ आत्मनः सुतयोः......सहजयोरपि......अतीव विसदृशौ पर्यालोचयन् अहं......'

इत्येवमादि किमपि पर्यालोचयन् ।

स आरभत वेगेनानुभवितुं······तमेव परिश्रमं तस्य प्रवासस्य त्रासदं ······तमेव कफज्वरं चिन्ताकरं······तदेव दौर्बल्यं दुःसहम् ।

आरभत········स्वसाम्राज्योदर्कचिन्तामणिस्पर्शसमुद्घाटितदृष्टिविशेष इव······निरीक्षितुं स्थितीः वर्तमानाः गांधारादिषु स्वसाम्राज्याऽन्तरतर-भागेषु,······न ददर्श च ताः अपि यथापेक्षं संतोषप्रदाः ।

आन्तरतरेषु एतेषु भागेष्वपि असमर्थः कर्तुं परिस्थितीः सुविधोपपन्नाः कृतेऽस्मत्प्रजाजनानां······अयं मुहम्मदः······किं शक्ष्यति कर्तुं तास्तथा······ कृते तेषां सुदूरसाम्राज्यभागनिवासिनां······गतेषु स्वर्गं अस्मत्सु ?'—इति चिंतया पीड्यमानश्च······प्रारभत चलितुं वेगेन द्विगुणितेन समुद्दिश्य गजनीं ······'वयमेव स्वयं करिष्यामः सर्वं' इति प्रेर्यमाणः निश्चयेन······आ आन्तर-तरभागप्रवेशात् तमेवावलोकयितुं तमेवाभिनंदितुं तमेवाशीर्वचनैरभिषेक्तुं विहाय स्वानि स्वानि उदवसितानि तद्गमनरथ्योभयपार्श्वनिबद्धपंक्तीनां हर्षोत्फुल्ललोचनानां ग्रामीणानां नागराणां च तत्प्रजाजनानां सान्द्राः दीर्घाः पंक्तीरवलोक्य सहसा समुद्भूतेन ।

प्रविश्य तां निर्द्धारितसमयात् पूर्वमेवैकस्मिन् सायंसंध्यामुखे सान्द्रमेघ-पटलधूमले······अनपेक्षितेन तस्य प्रत्यागमनेन चकितानामपि सहजहर्षोत्फु-ल्लनयनानां तत्रत्यानां नागरिकाणां प्रमुदिताः मुखमुद्राः दृष्ट्वा तृप्ताहंभावः ······तेषां (स्यान्नाम—आहार्य—) वैभवविभाविलासिनीं स्थितिमवलोक्य समाश्वस्तः······सः······दृढतरीभूतप्राक्तननिश्चयः······आरभत······अपरे-द्युरेव प्रातः······अवलोकयितुं······अध्येतुं तत्रत्यां परिस्थितिं सूक्ष्मेक्षिकया ······विनिश्चेतुं च पौर्वापर्यं कार्याणां कर्तव्यानां······सह वृद्धेनामात्यप्रमुखेन, सुदीर्घेषु तदनुपस्थितिकालेषु स्थित्वा राजधान्यामेव सर्वविधप्रशासनसूत्र-संचालने राजपुत्रस्य मुहम्मदस्य सहकार्यं······पथप्रदर्शनं······कुर्वाणेन (—वस्तुतः अग्रे कृत्वा तं तानि स्वयमेव (—अर्थादिव सम्राजः अनुज्ञया) संचा-लयता, (—एतावान् तदवलंबी आसीत् मुहम्मदः !—) ।

निश्चिकाय च कतिपयेष्वेव प्रहरेषु दण्डयितुं तान् सेल्जूकान्······प्राप्य मार्गदर्शनं एकस्मात् कस्माच्चित् स्वयमेवाधिगतनेतृत्वात् वयसा तरुणतरात् तुरुष्कात् दुर्दान्तन्तरीभूतान् ।

तदपि स्वयमेव ।

न तदमात्यप्रमुखस्य, वयसा पितृव्यतुल्यस्य, तत्कल्याणाकांक्षिणः, निशम्य तस्य तं निश्चयं विस्मितस्य, विपरीताशंकयाऽस्वस्थचित्तस्य, स्नेहसिक्तः तद्विरुद्धः परामर्शः,......न वा तद्राजवैद्यवृन्दस्य, दृष्ट्वा राजपथे प्रातरेव तस्य ज्वरशुष्कां क्षीणक्षीणां वृद्धतरीभूतां समुत्तप्तनयन-मात्रभासुरां शारीरीमवस्थाशंकितचित्तस्य, संततस्तद्विरुद्ध आग्रहः,......न वा तत्बालस्य, भारतीयादभियानात् तेन सह सद्यः प्रत्यागतस्य, सुखितस्य, गृहगमनातुरस्य, आदेशं तदनुकूलमपेक्षमाणस्य, सहसाऽधिगत्य तं तद्विपरीतं विषण्णस्यापि शब्दयितुं तं सर्वथाऽसमर्थस्य विस्पष्टः अनुत्साहः......शशाक व्यावर्तयितुं तं निश्चयात् तस्मात् ।

नुद्यमान इव तेन निश्चयेन प्रतिक्षणं......प्रातिष्ठत सः स्वराजधान्याः सप्ताहाभ्यन्तर एव स्वपैतृकराज्यस्य दाक्षिणात्यां सीमामुद्दिश्य......शिशा-सिषया उद्वृत्तानां सेल्जूकानां,......शशास तान् आकर्ण्य तत्प्रत्यागमनवार्त्तां किंचिन्न्यूनीभूतोद्रेकान्, भाविकार्यपद्धतिचिन्ताव्यापृतान्, अनुभूय तस्य नितान्तमनपेक्षितं तडिद्वेगमाक्रमणं दुःसहं विशीर्णोत्साहान् शरणागतान् मासाभ्यन्तरे एव,......न्यवर्तत च स्वां राजधानीं कृतार्थः ।

न्यवर्तत स्वां राजधानीं कृतार्थः ।......परंतु......अनागतानिष्टाऽऽशंका-कलुषितचित्त एव ।

स्मृतिर्हि मुखमुद्रायास्तेषां शरणागतानां नायकस्य, अल्पवयसोऽपि आत्मविश्वासापूरितस्य, बद्धहस्तमुपस्थितस्यापि अनभिभूतस्येव, निःशब्द-स्यापि नयनाभ्यां मूकमुखराभ्यां तस्य...दिगन्तविश्रुतकीर्तेः तस्य यवनसम्राजः ......वशंवदत्वं प्रत्याख्यायिन इव, दूषयामास एव निरतरं चित्तं तस्य...... आशंकयाऽऽस्पष्टप्राययाऽपि समुद्वेजयन्त्या...तस्मै तस्य तत्सुतस्य तत्साम्रा-ज्यस्य वाऽपायं, भाविनि काले निकटे सुदूरे वा, अवश्यंभाविनं असकृत् सूचयन्त्या ।

न्यस्तशस्त्रं तं न खलु स पारयामास प्राणैर्वियोजयितुं,...उपहसन्तमिव तं चिरस्थायिसाम्राज्यसंस्थापनाभिलाषुकं न वा विस्मर्तुं उद्दण्डतरुणान्य-तमत्वेन......विधात्राऽसाधारणसाहसवरदानेनोपकृतं न वा समुपेक्षितुं स्वपुत्रपौत्रानधिकपौरुषमिति ।

स्मृतिः सा तस्य मुखमुद्रायाः······तं निर्निमेषमवलोकयन्त्याः······प्राप्य सहकार्यमेकस्मिन् दुःस्वप्ने स्मृतेः भिन्नाया मुखमुद्रायाः मथुराभियानपूर्व-रात्रौ तस्य पटप्रासादस्य विश्रामकक्षेऽकस्माद्दृष्टिगतस्योपहाससस्मितमुख-स्य भारतीयस्य तस्य संन्यासिनः प्रवृद्धसामर्थ्या······तथाऽऽरभत पीडयितुं तमहर्निशं यथा स्वराजधानीं प्रतिनिवृत्त एव, आविष्ट इव, प्रावर्तत यापयितुं प्रत्येकं दिनं अनुष्ठाने तेषां तेषां स्वसाम्राज्यवैभववर्द्धकानां कार्याणां··· प्रत्येकं च नक्तं उपभोगे तस्य वैभवस्यायोज्य भव्याः राजकीयाः कविगोष्ठीः तत्स्तुतिगानपराः ।

तस्य तस्याः ज्वरग्रस्ताया इवातुरातुरायाः कार्यपद्धतेः मूले स्वप्रजाजन-कल्याणचिकीर्षा वाऽऽसीत्,······स्वसाम्राज्यस्थायिकरणाभिलाषा वा,······ प्रत्याचिख्यासा वा तस्याः भविष्यद्वाण्याः क्षणमेकमपि अविरमन्त्यास्तत्-पीडनात्······इत्येतत् न विद्मः ।

एतत्तु विद्मः यत्······कतिपयवर्षानन्तरमेव आरभत चकासितुं तस्य तत् साम्राज्यं नवीनप्रार्थनामन्दिरपाठशालाग्रंथालयभवनसुशोभितं······ अपारेण इतिहासविख्यातपारसीकतुल्येन दिगन्तविश्रुतयशशस्तोमेन वैभवेन, ······तस्य सा राजसभा च अल्बरुनीसदृशेन गणितज्ञेन ज्योतिर्विदा इति-हासलेखकेन फरबीसदृशेन तत्त्वज्ञेन फिरदौसीसदृशेन महाकविना अंसूरी-अस्तदी-फरुक्कीसदृशैः विद्वद्रत्नैः ।

अत्यल्पमिदमुक्तं—एतदपि विद्मः यत्······'एतादृशस्य साम्राज्यस्य निर्मातृत्वेन मानवेतिहासपृष्ठेषु स्थानमस्मदीयं सुरक्षितम्'—इति समुपजाता-श्वासोऽपि······निपीयाऽऽकण्ठं स्तुतिगीतानि महतां कविवराणां (—स्यान्नाम द्रव्यक्रीतानां······बलादपहृत्य राजधान्यामानीतानां वा—) मधुमधुरेण स्वरेण राजगायकान्यतमेन गीयमानानि तृप्तोऽपि······प्राप्याऽऽशीर्वादान् स्वधर्मप्रमुखात् तं सद्धर्मप्रचारकत्वेन बहुमन्यमानान् धन्यमात्मानं प्रदर्शयन्नपि······दुर्लभतमभारतीयरत्नखचितभूषणभूषितोऽपि······स यवनसम्राट्··· अनुबभूव एवासकृत् अस्वस्थतां चित्तस्य······विशेषतः नक्ते······कृते तस्य दुर्लभस्वापे······एकान्ते वा······तेन यावच्छक्यं परिह्रीयमाणे ।

किं कारणमासीत् मूले तस्याः ?

किमाशंका विषये आयतेः तत्साम्राज्यस्य ?······किं 'अस्मदुपस्थितौ

मैत्रीभावेन वर्तमानौ एतौ मसूदमुहम्मदौ······अपि नाम दिवंगतेषु अस्मासु एवमेव वर्तेताम् ?'—इति यक्षप्रश्नः ।······किं मालिका दुःस्वप्नानां ?······ अनिच्छतोऽपि तस्य······निपीयौषधानि परिहर्तुं तानि आतुरस्यापि तस्य··· स्वापेषु असकृदाविर्भवतां······हतबलाय तस्मै—कदाचित् तस्य तुरुष्कतरुण-स्योपहासदुःसहां तां मुखमुद्रां, कदाचित् तस्य भारतीयसंन्यासिनः प्रकाशमाने (—मन्दनैशदीपे तस्मिन् विश्रामकक्षे कथं खलु तत् प्रकाशते स्म ?—) मुखे स्पष्टलक्ष्यां भंगिं, तेनैव खड्गहस्तेन निर्मिते रक्तमांसवसाकर्दमे दुर्गंधदुःसहे गर्ते क्रमशः निमज्जतः निर्गन्तुं ततः कथमपि यतमानस्य तस्यैव दुर्दशां (—न जाने कैः कैः स्त्रीपुरुषैः साट्टहासमुपहस्यमानां—!—) बलात् प्रदर्शयताम् ?

अथवा—अन्यदेव किमपि कारणम् ?

मन्यामहे—अन्यदेव किमपि कारणम् ।

मन्यामहे—युयुत्सैव······विजिगीषैव'······स्वाधिपत्यवितिस्तीर्षैव······ अधिकतरसंपर्दाजिजिषैव······मनुष्यसंख्याऽतिविवर्तिषैव ।

सा एव लोकेषणा तस्य, किंचित्कालपर्यन्तं प्रशमिता इव निरन्तर-विजयमालिकया, निर्वापिता इव शारीरिक्या ग्लान्याऽत्यधिकया, विनाशिता इव प्रजाजनकल्याणचिकीर्षया इव, शनैः शनैः पुनरुदीयाय तदन्तःकरणे, विजिगाय सर्वा अपि अन्याः इच्छास्तत्रत्याः······चकार च तमस्वस्थं दिवानिशम् ।

अत एव तु तस्य वज्रकठोरतलः दक्षिणः करः, सस्नेहं परामृशन् स्वं असंख्ययुद्धप्रसंगसहकारिणं करपालं, चिरायते स्म तत्र ।······दृष्ठिरासन्न-भल्लचुम्बिनी नैव व्यावर्ततान्यत्र चिरम् ।······स्मृतिश्च पुनः पुनः स्मरन्ती तांस्तान् हर्षोन्मत्तान् भारतविजयप्रसंगान् नैव इयेष स्मर्तुमन्यान् प्रसंगान् विनाऽऽयासम् ।

प्रवंचिका युञ्जानानामपि······सा······तत्सदृशमाकण्ठं लालसाकर्दमे निमग्नं यत् चिक्लेश चिरं निरन्तरं च—तत्र किमिव आश्चर्यम् ?

—इत्थं व्यतीत्य कथमपि वर्षत्रयं आतुरतायाः परांकाष्ठामापन्नस्य, एकदा समुपविश्य विश्रामकक्षे सुखासने वातायनसमीपमुपस्थापिते परिचार-केणान्यमनस्कतयाऽवलोकयतो दृश्यं सायंतनं दिगन्तप्रसृतस्याकालमेघघटा-

ऽन्धकारधूसरितस्य स्वमहानगरस्य, स्मरतश्च शोभां बुद्धिपुरःसरमलक्षिताmपि तदा तत्स्मृतिपथे हठादवतरन्तीं, भारतीयस्य······विशिष्य पांचनदस्य ······सूर्यास्तस्य केशरवररसधाराभिः सान्द्राभिः चलाचलं स्नापयत इव हृद्यस्य, तस्य, सेवायामुपातिष्ठत निःशब्दमेकः, अनतिवया अपि आपाण्डुर-मूर्धजः, पारसिकोऽपि आश्यामलवर्णः, क्षामवदनोऽपि शीतोष्णादिद्वंद्वसहन-क्षमः, विशिष्य परिगृहीतनववेष इव लक्ष्यमाणः, अदृष्टपूर्वः पुरुषः······वहन् वामेन हस्तेन रक्तवस्त्रवेष्टितां पेटिकां······कुर्वंश्च प्रणाममन्येनासकृत्······ आदरातिरेकावनमितोत्तमांगः।

अवलोक्यापि तमपरिचितं विश्रामकक्षे तस्य तदा तथाऽऽगतं······ नाकुप्यत सः किंचिदपि······अनुमाय तं कंचिद्वैदेहकं दुर्लभपण्यविक्रेतारं पारसिकम्।······द्विविधौ हि पुरुषौ सः सदाऽन्वमोदत प्रवेष्टुं तस्य (–अर्थात् कार्यान्तराव्यग्रस्य–) सेवायां विश्रामकक्षेऽपि,······देशविदेश-वार्त्ताहरं गुप्तचरं······वैदेहकं च।······सुष्ठु हि सः विवेद महत्वं प्रथमस्य। दृढं च अभिललाष प्रस्थापयितुं रक्षितुं च सुप्रतिष्ठितां स्वकीर्तिं देश-देशान्तरेषु दुर्लभमहार्हवस्तुजातरसज्ञत्वेन······क्रीत्वा पण्यं द्वितीयस्यानव-गणय्य तन्मूल्यं, अकृत्वा समयासमयविचारम्।

अपि तु–अन्वजानात् तं दृष्टिक्षेपमात्रेणोपवेष्टुं भूमौ तत्पुरतः······ स्वीकृत्य तत्प्रणामान् अवनमय्येव स्वं मस्तकं,······समादिशच्च तं प्रदर्शयितुं तस्मै स्वं पण्यम्।

महत्या कुशलतया (–सुचिराभ्यासमात्रसाध्यया–) उपस्थापितेषु रत्नाभरणबहुलेषु दुर्लभेषु वस्तुषु तेन महार्हरक्तारक्तास्तरणावृत्तायां कक्षभूमौ······प्राविशन् कक्षे तस्मिन् राजसेवकाः, प्राज्वालयन् रत्नदीपान् तत्रत्यान्, समुदभासयंश्च तत् सहस्रगुणितेन तेजसाऽमायेव तदन्तः बहिरुत्प्लवता।

इयनमनोहारि आसीत् तत् मुक्तामाणिक्यवैदूर्यगोमेदवज्रविद्रुमपद्मराग-मरकतादिरत्नखचितमाभरणजातं नानाप्रकारकं स्वस्वप्रभावलयैः उल्लोलैः परस्परसंमिश्रितैः समुद्भावयत् ऐन्द्रं धनुरद्भुतं कक्षे तस्मिन् आपीतरत्नदी-पालोकालोकिते यत् अवलोकितपूर्वानेकरत्नोऽपि स यवनसम्राट् आश्चर्येण विस्फारिताक्षः, क्षणमात्रं विसस्माराऽऽत्मसंयमं आजन्माभ्यस्तं······उज्जगाद

च सहसा–'अहा !'

क्षणमात्रानन्तरमेव पुनःसंयमितस्वान्तः निगूहितभावः अवलोकयामास मुखं तस्य वैदेहकस्य किंचिदुन्नमय्यैवाक्षिणी स्वे,···बभूव समुपजाताऽऽश्वास इव दृष्ट्वा तमपि अवलोकयन्तं तदेवाद्भुतं दृश्यमवलोकितपूर्वमपि (–स्यान्नाम शतशः–) अनवलोकितमिवाविचलितया दृष्ट्या·····अपरिलक्षित-तद्भावोद्रेकम् ।

तस्थौ च निर्विकारमुखमुद्रः·····क्षिपन् स्वां दृष्टि दिशि·····कदाचित् तस्यालौकिकस्यैवाद्भुतस्य पण्यजातस्य·····कदाचित् तत्स्वामिनः······ कदाचिच्च कक्षदीपानां न्यक्कृतानामिव मन्दीभूततेजसां·····प्रतीक्षमाणः अभ्यर्थनां वैदेहकस्य विस्मृतस्थलकालव्यक्तिविशेषस्य स्वपण्यमात्रविनिगडि-तलोचनस्य तृप्तादिव विस्मितादिव गर्वितादिव मुखात् निःसरन्तीम् ।

'जहांपनाह! '–चिरादिव ननाद तस्य वैदेहकस्य वाणी भावमन्थरा कक्षे तस्मिन् निःस्तब्धे, 'नास्ति समस्ते जगतीतले सदृशः भवतः रसिकः रक्षकश्च (–निक्षिप्य एकां दृष्टिं क्षणिकां तत्पुरस्तात् प्रसृतानामाभरणानामुपरि–) एतेषां–इति कृत्वा मनसि आगतोऽस्ति अयं दासः·····तस्मात् मूर्तिपूजका-द्देशात्·····भवत्सेवायामेव ।·····तत् अनुगृह्णातु एतान् स्वामी स्वीकारेण ।

निशम्य तां समुपजाताश्वासोऽपि स यवनसम्राट् न प्रदर्शयामास स्वां भावनां लेशतोऽपि,·····अपि तु तस्थौ पूर्ववदेव·····अभिव्यज्य स्वीकारं तस्या अभ्यर्थनायाः किंचिदुन्नमय्य स्वं दक्षिणं हस्तं·····शुश्रूषुः तन्मूल्यम्, ······न पारयामास गूहितुं स्वं आश्चर्यं ज्ञात्वा तत् सर्वं तेन तस्मै उपायनी-क्रियमाणं,·····विरराम अन्ते दत्वा तस्मै रूपेण सत्कारनिधेरपारस्य,······ प्रत्यैक्षत च तत्प्रस्थानं ततः·····उत्सुकोत्सुकः उत्थापयितुं हस्ते स्वे बहु मानयितुं च तत् रत्नजातं स्नेहमृदुलेन खरकरस्पर्शेण ।

·····परंतु·····स वैदेहकः, असमर्थ इव गन्तुं ततः विहाय तद्रत्नजातं तत्र·····तथैवावतस्थौ मूर्तिवत्·····तन्मात्रनिगडितलोचनः·····मूकमूकः ।

अन्ते·····समुपजातसहानुभूतिरिव स यवनसम्राट्·····कथमपि यापयि-तुमन्तरालं·····पप्रच्छ तं तदधिगमस्थानम् ।

आकर्ण्यैव तस्य पृच्छां···आतुर इवावस्थातुं तत्र येन केनापि निमित्तेन ······समुत्सुक इव चर्चितुं विषये वस्तुनः प्रियस्याऽऽसन्नविप्रयोगस्य·····

आरभत प्रभो! सः वैदेहकः निवेदयितुं तत् घर्घर स्वरः, 'हुजूर ! ···अधिगतं इदं मया एकस्मात् (सतिरस्कारं) ब्राह्मणात्, सोमनाथमंदिरे मूर्तिपूजायां विनियुक्तात्······(सोपहासं) एकस्याः कस्याश्चित् वेश्यायाः नागर्याः प्रेमपाशैर्बद्धात्······चोरयित्वा एतत् आभरणजातं मूर्तिभ्यः उपदेवतानां तत्र-त्यानां तद्विनिमयलब्धेन द्रव्यराशिना तां तत्स्वामिन्याः सेवायाः मोचयितुं प्रवृत्तात् ।'

प्रोत्साहितश्चोद्गारेण तं भारतीयं मूर्तिपूजकं अधिक्षिपता यवनसम्राजः आरभत सः सविस्तरं वर्णयितुं भ्रष्टाचारं······समस्तेऽपि तस्मिन् मूर्तिपूजके देशे (–विशिष्य तदीयेषु पूजास्थानेषु–) क्षेत्रीयं व्याधिमिव······अनादिनः कालात् प्रचलितम् ।

तद्वर्णनं तस्य, प्राप्याप्रत्याशितया रीत्या तत्सदृशं विशिष्टं श्रोतारं प्रवृद्धोत्साहस्य, स्ववैदेशिकानुभवसंपत्प्रदर्शनेन तं दीपयितुं बद्धपरिकरस्य, इयन्तमाप विस्तरं सामाजिकराजकीयार्थिकभौगोलिकादीनामवस्थानां देशस्य तस्य विश्लेषकं······यत् तल्लीनचित्तः स यवनाधिपः न लक्षयामास ······सायंसंध्यासमयं तं परिणममानं प्रथमनैशप्रहरे उद्गच्छत् स्वस्वकार्यव्याकुलनागरिकजनकोलाहल-संकुले अथ द्वितीयनैशप्रहरे समुद् भवत्कविगोष्ठी–संगीतसभादि श्रुतिमधुरध्वनिलहरीहृद्ये, अथ तृतीयनैश-प्रहरे नीरवप्राये,······न लक्षयामास वा राजवैद्यं राजपरिचारकप्रमुखं भोजनशालाधिकृतं रात्रिवेषपरिवर्तकं सेवकं च विश्रामकक्षद्वारे आगतं, अवलोक्य तं संभाषणव्यग्रं तत्रैव चिरायितं, अन्ते च किंकर्तव्यताविमूढतया शनैः शनैः ततः उपगतम् ।

प्रत्याजगाम अथ निशीथे प्रवासादिव तस्य देशस्य, सदा तं आह्वयत इव तेन तेन मिषेण······विरते तस्मिन् वैदेहके तस्माद्वर्णनात्······सः ।

अन्वमोदत तं मित्रमिव सस्नेहं अपगमनाय ततः ।

न तु न्यवर्तत······क्लान्तशरीरोऽपि श्रान्तचित्तोऽपि सोत्साहमानसः··· स्वां शय्यां समीपस्थां······प्रतीक्षमाणामिव चिरात् तदागमनम् ।······अपि तु–तथैवोपविष्टः सुखासने तस्मिन्······अवगणय्य कृकाटिकापीडां······ समुपेक्ष्यजानुवेदनां······तिरस्कृत्य कशेरुव्यथां···चिन्तयामास चिरं किमपि स्मयमानमुखमुद्रः प्रकाशमाननयनयुगलः ।

किं चिन्तयामास स एवं–न नूनं विद्मः ।

एतत्तु विद्मः यत्–चिरात् शनैः शनैः (–सस्नेहमिव–)शायितं शय्यायां तस्यां……अवलोक्य निशीथसमयमपि अपयान्तं निःशब्दं तत्समीपमुपसृतेन, तद्वैयक्तिकसेवायां सद्यः अनुमतेनापि तत्परंमविश्वासपात्रीभूतेनानतिप्रौढेन ……महाकुलीनेनेवासाधारणदर्शनेन्……तिलकालंकृतभ्रूमध्येन……परिचारकेण एकेन केनचित्……आ संध्यामुखात् उपस्थाय बहिः……आवृतप्राय-विश्रामकक्षकपाटपार्ष्णौ……संभाषणं तयोराकर्णयता……स्यान्नाम आह्वानं स्वामिनः प्रतिक्षणं प्रतिपालयता……न पारयामास, मुद्रितलोचनोऽपि, निद्रातुं……आ निशावसानम् ।

अन्ते……लालितः शीतलाभिः वातायनेभ्यः अन्तः प्रविशन्तीभिः प्रातः समीरलहरीभिः……निद्रितोऽपि……अवलोकयामास एव स्वप्नानि विविधानि ।

कानि आसन् तानि–न नूनं विद्मः ।

तर्कयामः परंतु–आसन् तानि तदावाहकदेशविषयकानि……सुखकराणि ……इति ।

पश्यतो हि तानि तस्य मुखमुद्रां विशिष्य गर्वितामिव सोल्लासामिव ददर्श असकृत् तस्मिन् निशान्ते समीपं तस्योपसृतः, शय्यासमीपे सुचिरमवस्थाय तन्मुखमुद्रां (–सद्वेषमिव–) अवलोकमानः तस्य सः परिचारकः,…… उत्थितस्यापरेद्युः तस्य सेवायामुपस्थितः, शरीरावस्थां यथापूर्वं दीर्घज्वर-ग्रस्तामपि क्षामक्षामामपि कफलामपि सहसा सोत्साहामिव सबलतरनाडी-परिस्पन्दामिवालभत आश्चर्यान्वितस्तस्य सः राजवैद्यः,……यथापूर्वंदैनंदिनानां प्रशासनकर्मणामवलोकने प्रवृत्तस्य तस्य मानसमन्यत्र व्यासक्तमिवानुबभूव तस्य सः, सुचिरसहवासप्रभावेण सूक्ष्मतमस्वामिमनोभावसंवेदने पाटवं प्राप्तः स अमात्यप्रमुखः,……यथाभ्यासं सायंतने समये राजकीयं तन्निर्मितं भव्यतमं प्रार्थनामन्दिरं गत्वा प्रार्थनाप्रणतस्य तस्याकृतिं नततरामिव याचमानामिव किमपि जगन्नियन्तुः । अवालोकत च तत्सहप्रार्थिगणः ।

एवंक्रमेण व्यतीतेषु सप्ताहानधिकेषु दिवसेषु, प्रभात एकस्मिन् समुपातिष्ठत् सेवायां तस्य राज्यकार्याणि विचारयतः……एकः गणः……प्रमुखतमेन धर्मगुरुणा विशिष्य प्रेषितानां, धवलोष्णीषानां, धवलमृदुलवस्त्राणां,

धवललम्बमानकूर्चपाशानां, अंशावताराणामिव सत्वगुणस्य दृश्यमानानां (–दृश्यमानानामेव–! ) प्रतिनिधीनाम् ।

अभिननन्द च तं चिरं······उन्नमय्य स्वहस्तान् आशीर्वचनैः ।

'किमिव······स्वार्थं मनसि निधाय प्रेषिता इव······लक्ष्यन्ते एते धूर्ताः अये ?'–निःशब्दं व्यस्मयत सः······अवनमय्य स्वशिरः······सबहुमानं निमीलिताक्षं स्वीकुर्वन् प्रकटतः तानि धीरगंभीराणि आशीर्वचनानि आडम्बरगुरुणि······पुष्पाणीव स्वर्गात् निपतन्ति !

'सद्धर्मरक्षक !'–चिरात् समादधन् तं विस्मयं तस्य······आरभत प्रकटयितुं स्वागमनप्रयोजनं प्रमुखस्तेषां, अतिशयोक्तेषु तत्प्रशंसापरेषु वचनेषु विनाश्य पर्याप्तं समयं तस्य,······'इत्थमसकृद्दण्डिता अपि, वारंवारमधिकृत्य सत्यतां अस्माकं धर्मस्य······तस्यैव केवलस्य······शिक्षिता अपि, भवताऽसद्धर्मानुगमनफलानि भोजयिता अपि······ते अन्धमूढाः विवेकशून्या भारतीयाः नैव जहति मूर्तिपूजां सर्वविनाशकारिणीं, नैव त्यजन्ति अन्धविश्वासपरंपरां, नैव स्वीकुर्वन्ति चैकमात्रं सद्धर्मम् ।'

'विशेषतः–भवताऽद्यापि अदण्डितेषु भागेषु निवसन्तः ।

'तत्रापि–सुदूरेषु पौरस्त्येषु पाश्चात्येषु दाक्षिणात्येषु च तेषु वर्तमानाः ······अद्यापि अदृष्टभवत्पराक्रमाः !'

'ते हि······अविश्वसन्तः विक्रमे भवतः······सद्धर्मप्रसारार्थं परवरदिगारेण विशिष्य प्रेषितस्यानुगृहीतस्य च दुरभिभवनीयत्वेन······न बिभ्यति स्वप्नेष्वपि भवतः अतिशक्तेः,······मूर्तिपूजस्थानानि औत्तराणि भवता एतावत्कालपर्यन्तं विजितानि, तद्धर्मवैयर्थ्यप्रदर्शनार्थमेव केवलमुद्ध्वस्तानि, तत्कल्याणं कर्तुं एव केवलं विनाशितानि न बहुमन्यन्ते,······उपहसन्ति तत् पूजकान् तद्रक्षकांश्च मिथ्यावतारमात्रपूजकानिति,···मन्यन्तेऽहंभावदुर्विदग्धा आत्मानं परमेश्वरस्य सत्यावतारस्य–एकमात्रस्य सत्यावतारस्य–पूजकान् ······अतश्च दुष्प्रधर्ष्यान् कृते भवतः सैनिकानां······(तन्मतानुसारं–) मत्तपशुनिर्विशेषाणाम् ।'

निशम्य विशेषणं तत् तस्य सैनिकानां······परंपरासंबंधेन तस्य······ कृते भारतीयैस्तैः प्रयुज्यमानं, मुखं यवनसम्राजः······निमील्य इव नयने (–वस्तुतः वक्तुर्मुखं सूक्ष्मेक्षिकया निरीक्षमाणे······तत्र च किमपि चिह्नं

असत्यभाषणस्यालभमाने–) तद्भाषणं आकर्णयतः······सहसा बभूवाऽऽ-रक्तमिव क्रोधेन,······न परंतु प्रकटयामास तद्भावनां स्तोकमपि ।

तादृशमेव आसीत् खलु तस्य कौशलं स्वभावगूहने ।

'अपि–जानाति श्रीमान् धर्मगुरुः (–अनुगृह्णातु तं दीर्घेणायुषा जग-दीश्वरः !–) कुत्रत्यास्ते नरब्रुवाः ?'–आपातशान्तया वाण्या पप्रच्छ सः ······स्मयमान इव ।

'किमिव न जानाति श्रीमान् धर्मगुरुः नः ?'–प्रोत्साहित इव आतुरेण स्वरेणोज्जगाद सः प्रतिनिधिप्रमुखः ।····'सद्धर्मप्रसारार्थमेव परवरदिगारेण प्रेषितः मध्ये नः······सः –'

'कुत्रत्याः ?'–मध्ये एव सहसा पुनरपृच्छत् यवनेश्वरः······व्यञ्जयन्निव स्वामरुचिं श्रवणे स्तुतिगीतस्य 'श्रीमतः' धर्मगुरोः ।

'गुर्जरराज्यस्थाः······गुर्जरराज्यस्थाः'–हतप्रभ इव सहसा प्रत्यवदत् अभ्यागतः ।

'एवं ।······गुर्जरास्तर्हि इत्थमधिक्षिपन्ति नः बलम्,'–आरभत चिन्त-यितुं सः । 'नूनं मूढाः न जानन्ति······आसन्नं अन्तकालं स्वम् !·····आम् ! (सोत्साहं)······एते एव गुर्जराः तेन वर्णिता आसन् तस्मिन् निशामुखे वैदेहकेन 'धनाढ्यतमाः निखिलेऽपि तस्मिन् देशे' इति ।······धन्याढ्यतमाः ······'स्वमपारं धनं देवस्थानेभ्यः मुक्तहस्तं ददानाः' इति च ।······अत एव पूजास्थानानि तेषां समृद्धतमानि–इति कथयामास सः ।'

'मध्ये च तेषां अपि सोमनाथन्दिरं इत्यपि । 'समृद्धतमं विशालतमं प्रसिद्धतमेमिति च ।

आस्त च चिरं मूकः······स्मरन् तद्विशेषान्, तेन वैदेहकेन वर्णितान् ······प्रकटतः आकर्णयन् तस्य प्रतिनिधेः संदेशमवशिष्टम् ।

सर्वथा मुषितचित्तश्च तेन संस्मरणेन······सः······संधुक्ष्यमाणलोभ-बह्निः······न विवेद······कदा सः प्रतिनिधिप्रमुखः, समुत्प्रेक्ष्य सम्राजं स्फुट-मन्यमनस्कं निरुत्साहः, असमर्थस्तर्कयितुं तन्मनोगतं कुण्ठितः, अलब्ध्वा कमपि प्रतिसंदेशं किंकर्तव्यताविमूढः, भीत इव, खिन्न इव, अपससार तत्पु-रतः कथमपि परिसमाप्य स्वं भाषणं, कथमपि अभ्यर्च्य तं आशीर्वचनैः साडम्बरैः प्रतिन्यवर्तत स्वं मुख्यालयम्······अजानन् आत्मानं सफलयात्रं,···

कदा तस्यामात्यप्रमुखः, उपविष्टः पार्श्वे सम्राजः, भूमितलनिगडितलोचनः, निश्चलः, आकर्ण्याऽपि समग्रं तत् संभाषणं अपह्नवानः स्वां प्रतिक्रियां, अनुभूय स्वरस्वामिनः अन्यमनस्कतां, अपससार निःशब्दः,······कदा च बभूव सः विशालः कक्षः······शून्यस्तदितरेण ।

अथवा–न शून्यस्तदितरेण,······अपि तु–एकमात्रेण तदितरेण सनाथः ।

व्यपगतेष्वपि हि सर्वेषु ततः शनैः शनैः······तत्रैवावातिष्ठत······सः······सम्राजा सहाऽऽगतः, प्रविष्टे तस्मिन् तदन्तः स्वीकृत्य प्रणामान् सर्वेषां······बहिः, अपावृतकक्षकपाटसमीप एव मूर्तिवदवस्थितः, तिलकालंकृतभ्रूमध्यः परिचारकः······(–स्यान्नामतदिच्छितानुमिमांसया–) स्वामिमुखनिगडितनयनः····दृग्गतसर्वेन्द्रियशक्तिरिवेतरप्रकारकसंवेदनशून्यशून्य इव भासमानः······नैशपरिचारकत्वेन विनियुक्तोऽपि स्वामिनं दिवानिशं तच्छायेव उपतिष्ठमानः······'गृहदारादिभिः विप्रयुक्तः वैदेशिकः भारतीयोऽयं स्वामिकृपालोभपारवश्यात् करोति एवं मूकबधिरः ।······तत् करोतु नाम वराकः' इति सकुत्सस्मितं सर्वैः सहकर्मिभिः अधिकारिभिश्च सम्राजः सेवायामधिकृतैरनुमतः,······श्रुत्वा च माध्यंदिनं समयं सूचयन्तं रवं घण्टाया बृहत्याः, भारतीयस्य राज्ञ इव कस्यचित् सम्राजः अपि प्रासादस्य महाद्वारैकदेशे आहन्यमानायाः (–कथं तावत् शशाक बधिरः सः श्रोतुं तं रवं ?–इत्येतत् तु रहस्यं न सत्यं विद्मः –)······अन्तः प्रविवेश निःशब्दं, उपसृत्य च सम्राजं पस्पर्श तं स्वेन करेण ।

क इवाऽऽसीत् विशेषस्तस्मिन् तस्य करस्पर्शे तेनाननुभूतपूर्वे–इति तु न विद्मः ।······परंतु सत्यमेतत् यत् तन्मात्रेण एव सहसा जजागार विचारतंद्रायाः स यवनसम्राट् विरम्य स्वश्मश्रुपाशलालनात् उन्नमय्य च स्वां मुद्रितप्रायां दृष्टिं अवलोकयामास स्वस्रष्टुः मुखं ।······प्रत्यभिज्ञाय तं अस्मयत क्षणमात्रानन्तरं, अस्फुटं उज्जगाद च तन्नाम (–तेन स्वयमेव प्रदत्तं–) 'अल्तमश !' इति ।

परिचारकस्तु······मूकबधिरः······अथवा मूकबधिरत्वेन ज्ञातः सर्वैः······न शुश्राव······अथवा न दर्शयामासाऽऽत्मानं श्रुतवन्तं······तत् संबोधनम् ।······अपि तु प्रायतत उत्थापयितुं तं तदासनात् ।······प्रायतत शरीरेण ।······मनसा तु विचारयामास······चिरं विचारयामास ।······वास्तविकं अर्थं

दृष्टेः यवनाधीशस्य साकल्येन······याथार्थ्येन······क्षणमात्रपूर्वमेवावलोकितायाः। न परंतु पारयामास निर्णेतुं तम्।······दृष्टौ हि तस्यां क्षणमात्रं अवलोकितायामपि स ददर्श इवाऽऽन्तरं आत्मानं तस्य,······आन्तरमात्मानं ······नग्नं······अगूहितं कृतकभाववस्त्रैः परप्रविवञ्चियिषया धृतैः।······ ददर्श निर्मर्यादां धनलालसाम्······अपारां कीर्तिस्पृहां······दुर्दमनीयां महत्वाकांक्षां······उद्दामां लोकेषणां······दुःसहां परप्राणपिपासाम्।······ददर्श द्युतिमिवाऽऽरक्तपीतां लोभदावानलस्याहर्निशं तदन्तर्ज्वलतः······अहर्निशं तदन्तः ज्वलयतः।

ददर्श,······बिभाय च तस्मात्······उन्मत्तादिव······हिंस्रादिवश्वापदान्।

परंतु–क्षणमात्रमेव।

अपरस्मिन्नेव हि क्षणे······स··संनिययाम, व्यापारयामास च, आत्मानं उत्थापने तस्य तदासनात्······नयने च ततः तस्य······सुदीर्घकालिकोपवेशनवशात् अशक्नुवत इव उत्तिष्ठितुं चलितुं च पदमेकमपि अधृत्वा हस्तावलम्बम् अन्यस्य।

व्यापारयन्नेव च तं तथा बालकमिवावशमात्मनः दिशि भोजनकक्षस्य नातिदूरस्थितस्य,······द्वारदेशे एव सभाकक्षस्य······अवनताक्षः निर्विकारमुखमुद्रः······सहसा अनुबभूव तं······विरमन्तमित क्षणमात्रमग्रे चलनात्··· अवलोकयन्तमिव तं तयैव दृष्ट्या······भणन्तमिव च घर्घरस्वरं तं–'इच्छसि किं······अल्तमश!······वृद्धां स्वां मातरं द्रष्टुं चिरविप्रयुक्ताम्?',······ आत्मानं······तत्क्षण एव विदिततद्दृष्टयाभिप्रायं······प्रत्यभिजानन्तं तं नवीनतमप्रचण्डतमभारताभियानप्रवृत्तं······प्रेर्यमाणं चाकस्मात् उत्पन्नया दुर्दमनीययाऽनिवार्याऽऽवेगया इच्छया तं प्राणैः, तत्रैव तदैव छुरिकया, तद्रक्षणमिषेण सर्वदा कटिनिबद्धया निशितया वियोजयितुं नुदन्त्या।

संयम्य परंतु आत्मानं प्रयासेन भागीरथेन······प्रकटतो दर्शयामास आत्मानं मूकबधिरतया अश्रुतस्वाम्युद्गारं निर्विक्रियं······पूर्ववदेव एकाग्रेण चित्तेन यथापूर्वं व्यापृतं स्वसेवाकर्मणि,······वस्तुतः व्यापृतः······पणीकृत्य प्राणान् व्यापृतः······ऊहे भाविनस्तदाक्रमणस्य लक्ष्यस्य वास्तविकस्य।

यवनसम्राट् तु, अनभिज्ञ एव तदन्तर्द्वन्द्वस्य,······अज्ञ एवापमृत्योः

मार्जारपादैस्तत्समीपे आगतस्य, आगत्य चानिच्छुकस्येव दातुं तस्मै अजरामरां कीर्तिमेवमपहृत्य तमदृष्टस्वस्वप्नभंगमक्षुण्णमनोरथमभग्नहृदयं स्वौरसपुत्रकलहावलोकनेनानष्टदर्पं अपगतस्य,···अविस्मित एवानधिगत्य किमपि प्रत्युत्तरं स्वसेवकात् मूकबधिरात्,······तथैवाविष्टस्तेनोन्मादकल्पेनाऽऽवेशेन कथमपि चकार माध्यन्दिनं भोजनं, अकृत्वैव च तदौपरान्तिकं विश्रामं यथाभ्यासं······आजुहाव······अवलोकयत एव निर्विकारया मुखमुद्रया तस्य परिचारकस्य······स्वान् सैनिकान् उच्चाधिकारिणः······मंत्रणाकक्षे, आदिदेश च तान्······श्रृण्वत एवाधोमुखस्य खिन्नस्य प्रधानामात्यस्य······राजवैद्यस्य विवक्षयेव प्रस्फुरच्छुभ्रश्मश्रुपाशावृतप्रायौष्ठपुटस्य निसिसेधिषयेव किंचित् प्रकम्पमानग्रीवस्य······कर्तुं संनाहं कृते नवीनस्य भारताभियानस्य।

आदेशः सः तस्य······वृद्धप्रायावस्थस्यापि क्षामक्षामस्यापि कफलस्यापि अप्रत्याख्येयप्रभावस्योदग्रनयनस्य तादृशाऽऽवेशाविष्टस्य······इयतोत्साहेन पूरयामास तस्य तान् सैनिकानधिकारिणः, तन्माध्यमेन सर्वान् सैनिकान् (–उपभुक्त्वा सततं पारिवारिकं सुखं तमिव किंचिद्विमनायमानान् तमिवासकृत् रणरणिकयाऽतीतान् भारतविजयप्रसंगान् रोमाञ्चकरान् संस्मरतः, तमिव वारं वारं स्वं स्वं शस्त्रं सस्नेहं साकूतमवलोकयतः, तमिव च निःशब्दं युद्धोत्तेजनायैव स्पृहयतः –), तन्माध्यमेन च इतरेजनान्–यत् कतिपयेष्वेव दिनेषु न केवला राजधानी, न केवलं तत्पैतृकं राज्यं, अपि तु–तद्विस्तारितं बृहत्तरं यवनराज्यं आहिमाचलोपत्यकाप्रसृतं आरभत परिस्पन्दितुं तीव्रतरेणेव वेगेन ।

'भविता नवीनतममभियानं सम्राजः आर्यावर्तवर्तिनां समृद्धानां देवस्थानानामन्यतमं समुद्दिश्य'–इत्यमन्यत तस्य प्रजा ।······तत् तस्या मतं नैव निसिषेध स यवनाधीशः,······मन्यमानस्तत् उपकारकमेवाऽऽक्रमणव्यूहस्य, तत्संकल्पितस्य द्वित्रसैनिकाधिकारि (–तन्मतानुसारं–) मात्रविदितस्य ।

प्रस्थितश्च स्वराजधान्याः पक्षाभ्यन्तरे एव संप्रार्थ्य परवरदिगारं संकल्पितसिद्धये, साडम्बरं प्रवसन् स्वराज्याभ्यन्तरतः, समुल्लंघयामास नगाधिराजं तदुपत्यकाभेदकेन संकुलेन संकटबहुलेन वर्त्मना हैमेन हिमास्तरणप्रतिफलद्रविकिरणदुरालोकेन विनायासम् ।······क्रमशः अभिवर्द्धितगतिः प्रविवेश, भूतपूर्वपांचनदं तदानींतमं तत्साम्राज्यान्तर्भूतं, प्रदेशम् ।······

संतुष्टश्च निःशब्दमवलोक्य पाञ्चनदीयानां दशां संपन्नतरां,⋯अभिननन्द, काश्मीराधीशेन, तेन सह मैत्रीभावं यथापूर्वं रक्षितुमातुरातुरेण, स्वयं संप्रेषितं बहुमूल्यमुपायनन् । निरन्तरमग्रे सरंश्च दाक्षिणात्यायां दिशि प्रविवेश आर्यवर्तंहृत्प्रदेशे, समुत्प्रेक्ष्य तदाक्रमणमवश्यंभावि कातरहृदये इव प्रकंपमाने मासद्वयाभ्यन्तरे एव ।

तत्र च परिवर्त्य सहसा (वस्तुतस्तत्संकल्पितव्यूहानुसारमेव) स्वप्रसरणदिशं, आरभत चलितुं वेगेन प्रभंजनस्य दिशि पौर्वात्य-दक्षिणात्यायां⋯ दिशि अपारस्येव दिगन्तप्रसृतस्य मरुस्थलस्य राजस्थानव्यापकस्य दिवा उत्तप्तधूलिधूसरितदशदिशस्य रात्रौ हैमवतइव शैत्यदुःसहस्य,⋯स्फुटमाचिक्रंसुः तत्पारवर्तिनं समृद्धं, स्थानविशेषं वा तत्रत्यं⋯तन्मात्रविदितम् ।

अतिक्रान्त्वा च तत् मरुस्थलं कष्टबहुलमपि अनपेक्षितागतसंकटाकुलमपि धैर्येणानुपमेन साहाय्येन च स्वप्रत्युत्पन्नमतेः,⋯प्रविवेश गुर्जरप्रदेशं ⋯आकर्ण्य कर्णोपकर्णिकया तदागमनवार्त्तां भयजडं,⋯उपरुरोध च तत्रत्यं महत्तमं संपन्नतमं देवस्थानं⋯सोमनाथमन्दिरावस्थितया निखिलेऽपि भारतवर्षे ख्यातिमपारां प्राप्तं⋯निरुद्धश्वासमवलोकयत एव संपूर्णस्य गुर्जरप्रदेशस्य ।

'एतत् तर्हि⋯देवस्थानं⋯अल्तमश !⋯एतेषां मूर्तिपूजकानां ⋯पवित्रतरं⋯(सस्मितं)⋯समृद्धतमं !'—अस्फुटं⋯स्वगतमिव ⋯उवाच⋯सद्यःपरिकल्पित—नगरोपरोधक—स्वसेनासंनिवेशाग्रभागावस्थितस्य स्वर्णशिखरद्वयसंसूचितस्य प्रचलद्राजपताकासुशोभितशृंगस्य स्वपटप्रासादस्य प्रवेशद्वारेऽवस्थितः महमूदः⋯क्षामतरः वलितभालप्रदेशः शुभ्रतरमूर्धजः किञ्चित् (—भारादिव साम्राज्यस्य—) अवनतोत्तमांगः⋯ आरक्तया श्रान्तयाऽपि तीक्ष्णया सर्वग्राहिण्या दृष्ट्यालोचमानः पिहितं महाद्वारं नगरप्रकारस्य⋯अस्ताचलप्रविष्टाश्वसप्ताश्वकरपरिचुम्ब्यमानपीतलकीलकं⋯, समुद्दिश्य पार्श्ववर्तिनं मद्यचषकहस्तं अल्तमशं⋯ संततप्रवासादिव कृशतरं विषण्णतरम् ।

'कियान् खलु सोढः अस्माभिः खेदः⋯शारीरिको मानसिकश्च !⋯ कियती खलु परास्ताऽस्माभिः विपत्परंपरा⋯बाह्याऽऽन्तरा च⋯विजेतुं स्थानमेतत् कुधर्मानुयायिनां बद्धपरिकरैः !'—अलब्ध्वाऽपि किञ्चित् प्रत्युत्तरं

पार्श्वचरात् यंत्रपुरुषवत् अविचलितभावेन तं सदा परिचरतः अविस्मितः– अग्रे उवाच सः ।

प्रसारयामास चान्यमनस्कभावेन स्वं करं ग्रहीतुं मद्यचषकम् ।

'अस्माभिः खलु······मूलस्थाननगरं तत् स्वसाम्राज्यान्तर्गतं विहाय अग्रे······दिशि अस्य······प्रचलितैः······रिरक्षिषया नु अस्य स्थानस्याकस्मात् पुरत अस्माकमागतेन तेन दिगन्तप्रसृतेन मरुस्थलेन निरुद्धप्रवासैरपि अखिन्नैः, ······प्रत्युत्प्राप्य तद्विघ्नं(–स्यान्नाम नैसर्गिकम्–)तत् कालपर्यन्तं निर्विघ्नं संपन्ने प्रवासे संधुक्षितोत्साहैः······तथा प्रोत्साहितं अस्मदीयं बलं······यत् ······पुनराविष्टमुत्साहेन······विजित्यानवरतप्रवासखेदं······पराजित्य अज्ञातरिपुप्रदेशप्रवेशजनितमनुत्साहं······न्यक्कृत्य रमजानोपवासक्षीणता······ वहत् स्वं स्वं भारमन्नजलतृणसंग्रहस्य······उपोद्बल्यमानधैर्यं च सजलचर्मगोणीवाहकेन उष्ट्शतकत्रयेण सहप्रवसतां······अन्ते शशाक एव ततुं तत् दिग्भ्रामकं सन्ततोदीयमानिवात्याचक्रधूसरितदशदिशं निरुदकं उदधिं मासाभ्यन्तरे एव······भीषयितुं च तत्पारवर्तिन्, मत्वाऽऽस्माकीनं बलं सर्वथाऽसमर्थं उल्लंघयितुं तं नैसर्गिकं प्रत्यवायं विश्वस्तं चामुहान-स्वसामर्थ्येन ······अकस्मात् !'

'अवलोक्यास्माकं बलं······आकाशादिव पतितं, धरणीगर्भादिव समुत्पतितं पैशाचिकमंत्रबलादिवाऽऽविर्भूतं······भीतः सः नरेशः ददर्श स्वं-श्रेयः अनुसरणे एव मार्गस्य तद्बंधुजनैस्तत्पूर्वमनुसृतस्य,······ररक्ष च (सतिरस्कारं) आत्मानं कापुरुषवत् पलायनेन तद्राजधान्याः ।

अराजकाऽनाथा प्रजा तस्य ईक्षते स्म आगमनमस्माकं भयजडा उच्छुष्कमुखा······अजता इव मृगेन्द्रस्य ।······तादशीमवस्थां आपन्नानां······ मूर्तिपूजकानमपि······मर्दने (सदर्पं) वयं नोत्सहामहे परिस्थितिषु साधारणासु ।······तात्कालिक्यः परंतु आसन् ताः भिन्ना एव ।······भृशं हि वयं अवाञ्छाम विधर्मानुयायिनस्तद्देशीयान् (–तावत्कालपर्यन्तमसाक्षात्कृतास्मद्बलविनाशसामर्थ्यान्–) प्रभावयितुं तत्प्रदर्शनेन······हन्तुं च तान् अनुत्क्षिप्यैव भल्लं एकवारमपि ।·········अत एव–वयं अददामानुमतिं स्वां बलायाऽऽस्माकीनाय लुण्ठितुं प्रजां तस्य······नृपब्रुवस्य······यथेच्छम् ।······ दुर्गं च तदीयं······उत्फ्लुतप्राणमिव व्यात्तमुखं······भयजडं······अहन्म······

उपेक्षाखड्गेनैव खड्गादपि तीक्ष्णतरेण।'

'अचलाम ततः दिनत्रयानन्तरमेव दिशि विख्यातस्य पाटनस्य गुर्जर-राज्यमहापट्टनस्य।.........(सस्मितं) अन्वभवाम चानपेक्षितया रीत्या (–उत्तेजनाशून्यशून्यायाँ नीरसायां तस्यां सहजविजययात्रायामुत्तेजकं–) प्रत्यवायं.....जलदौर्भिक्ष्यरुपं.....तन्मार्गे एव।.....(सविस्मयं) किंकृतः आसीत् सः प्रत्यवायः,.....मनुष्यकृतः काकतालीयो वा.....इत्येतत् तु न प्राभवाम निर्णेतुमद्यावधिपर्यन्तम्।.....दृढम् अमन्याम तदा तं अस्मद्विपक्षिगुर्जरनृपकारितं,.....प्रायताम च चिरं लब्धुं तस्य संशयस्योपोद्बलकानि चिह्नानि.....नालभाम परंतु एकमपि।.....अचलाम चाग्रे संदिग्धहृदया एव।.....मार्गे सहसाऽऽक्रान्ताः संदेहेन, अस्मद्बलान्तर्वर्तिनमेव गुप्तपुरुषं विपक्षीयं कंचित् रिक्ताः कृत्वा अस्मज्जलगोणीः घोरतमस्विन्यां जलदौर्भिक्ष्याऽऽपदकं संसूचयता.....वयम् चिन्तयाम महति प्रत्यूषे तस्मिन् व्यापादयितुं सर्वान् एव यवनेतरान् अस्मद्बलान्तर्वर्तिनः आगामिन्यां निशायाम्।.....न परंतु अन्वसराम तं ऐकान्तिकं मार्गं.....चिंतयित्वा तं हृदयप्रदेशेऽयावनस्य देशस्य वर्तमानानामस्माकं कृतेऽनर्थावहं,.....लब्ध्वा च काकतालीयेन मार्गे एव तस्मिन् अपराह्णे सरलतरं प्रत्युत्तरं तस्याः विपदः क्षुद्रे निर्जने एकस्मिन् दुर्गेऽगाधजलाशयसनाथे।.....(सनिःश्वासं) कृत्वाऽऽस्माकीनाः असंख्या गोणीः पुनः जलपरिपूर्णास्तत्र.....अग्रे प्रचलिता वयम् दर्शयाम आत्मानं विस्मृततद्घातकृत्यमिव.........परंतु संतुष्टं कृत्वैव ता गोणीः अहर्निशं वंशपरंपरागतयवनसैनिकमात्ररक्षिताः।

'निरन्तरं.....निर्विघ्नं चाऽऽक्रमन्तः मार्गं ततः परं वयं शीघ्रमेव उपरुरुधिम तद्विख्यातं पाटनगरम्.....एकस्मिन् निशीथे।.....अवलोक्य तन्निश्चेष्टं.........अकल्पयाम तत् निःशंकनिद्रानिमग्नम्।.....अन्वभवाम चापारमाश्चर्यमवलोक्य तत् गूढपुरुषनेत्रैः निर्जनं.....परित्यक्तं तदधीशेन भीमदेवेनाभीमेन, तन्निवासिना प्रजाजनेन च निरपवादं.....बिडाल-शृगाल-मूषक–पारावत–पेचक–कुक्कुट–काकोलादिक्षुद्रप्राणिमात्रसनाथम्।.....न खलु अवाञ्छाम वयं लुण्ठितुं तत्.....उत्प्रेक्षमाणा आत्मानं तथा कुर्वन्तं .....मृतदेहमदन्तम्।.....(सजुगुप्सं).....अददाम.....परंतु.....अन्ते स्वानुमतिं स्वबलाय, अवलोक्य निर्जना अट्टालिका धनधान्यपूर्णाः प्रस्तुत-

लालारसं ।······निश्चक्यिम परंतु कालावधिं तदर्थं प्रहरचतुष्टयानधिकं पौर्वाह्णिकम् ।······तावन्तमपि कालं······परंतु······तत्, सर्वत्राप्रतिरुद्धप्रसरं नापैक्षत तदर्थम् ।······प्रहरत्रयानन्तरमेव न्यवर्तत स्वं संनिवेशं······कृतार्थं ······आहोपुरुषिकया स्वं स्वं लुण्ठितं स्वर्णभूषणादिकं बहुमन्यमानं······ मोदमुखरम् ।'

'दृष्ट्वा तत् तथा तुष्टं तुष्टा अपि······निरपवादसाफल्यप्रमुदिता अपि ······अशान्तयुयुत्सतया किंचित्खिन्नाः,······ततः······दिशि (–अवलोक्य······ शनैः शनै······विभाव्य इव अनर्थमासन्नप्रायं······खेदतमसि मज्जतः सोमनाथप्राकारस्य–) अस्य स्थानस्य प्रचलिताः······वयमपि अलभाम एवावसरं अप्रत्याशितं प्रशमनाय तस्या अपि······अचिरादेव निरुद्धप्रसराः एकेन परबलेन······संख्याबलेन······स्यान्नाम भीमदेवबलात् अस्माभिः सह युयुत्सया पृथक्भूतेन ।······(मन्दं मन्दं स्पृशन् आत्मनः धवलप्रायं मार्गधूसरितं श्मश्रुपाशं)······अवलोक्य तद् दूरतः बहुमन्यमानाः स्वं भागधेयं······वयं······ स्वयमेवाऽऽह्वयाम तत् योधनार्थम् । आचक्राम च तत् उत्सुकोत्सुकाः प्रशमनाय स्वयुयुत्सायाः ।·········आ कैशोर्यात् रक्षात्मकं एव युद्धं योद्धुं प्रशिक्षितं, नेतृत्वं कुर्वतः स्वराज्ञ एव स्फूर्ति निरन्तरं निरपवादमाहरत्······आहार्योत्साहं ······दृष्ट्वा तं क्षणमेकमपि योधनस्थलात् अपगच्छन्तं स्वयमपि योधनस्थलात् पलायितुमातुरं······खलु दृष्टचरं भारतीयं बलमस्माभिः आबाल्यात् । ······तत्······क्षणिकावेशवशात् प्रबोधनप्रभावाद्वा कस्यचित्······विनैय तेन सहास्माभिः सह योद्धुं प्रवृत्तमपि तद्गुर्जरनरेशबलं······अनेतृकमिवानाथामिवात्मानं सततं भावयत्······न प्रबभूव सोढुमस्माकमाक्रमणं······ प्राप च (विहस्य) तार्णीं गतिं कतिपयेष्वेव क्षणेषु–इत्यत्र किमिव आश्चर्यम् ?······उपायनीकृत्वाऽस्मभ्यं असंख्यान् सशक्तान् सुरुपान् युवकान्······ सर्वथा योग्यान् परिचरितुमस्मान् अस्मदधिकारिणश्च दासीभूय (–अर्थादेव कतिपयशारीरिकसंस्कारानन्तरं !–) अस्मदवरोधेषु ।'

'ततः प्रचालिता वयं······शीघ्रमेवोपससृम तत् नगरं······देवद्वाराख्यम् । ······न खलु (शनैः शनैः आस्वादयन् आसवं विस्मृतप्रायं) कदाचिदपि विस्मरिष्यामः नाम तत् तस्य नगरस्य !······तादृशमेव आसीत् तत्कृतं स्वागतं अस्माकं बलस्य······तस्मिन् मध्याह्ने······दुरालोके तीव्रातपवशात्

······अकस्मात् उपरुध्य तत् सर्वतः उपविष्टस्य ।······साक्षात्कृत्य तत् तस्य स्वागतं······सर्वथाऽस्मदुपेक्षकं······वयमपि अभूम······अविस्मयशीला अपि विस्मिताः ।······चिराद् अभ्यस्ताः स्वागतस्य,·····बहुशः भयजडस्य निरुद्ध-श्वासस्य कण्ठागतप्राणस्य,······कदाचिदेव स्वरिरक्षिषादृढस्य निर्भयस्य······ वयम् चिन्तयाम तादृशं स्वागतयात्मविश्वाससंभृतं······कस्यचित् सर्वथा विश्वसनीयस्य शक्तिमूलस्य······कस्यचिदनपेक्षितस्यात्मरक्षाव्यूहस्य······ कस्यचिद्गूढस्य प्रत्याक्रमणस्य बाह्यैस्तन्मित्रैः सह संकल्पितपूर्वस्य······ संसूचकम् युयुजिम च दृढान् स्वसंरक्षणोपायान् प्रेष्य गूढचरान् प्रतिनिवर्त-मानयात्रिकवेषान् सर्वासु दिक्षु जिज्ञासया गतागतानामितरनृपबलानां क्षुद्रा-णामपि।······(सव्रीडस्मितं) कियान् आसीत् विस्मयः अस्माकं विज्ञायान्ते तस्य सप्ताहस्य चिंताजडस्यानिद्रस्य स्पशेभ्यः अस्माकं पुष्पभारावनताऽऽरा-मिकछद्मनाऽन्तः प्रविष्टेभ्यः तस्यैतस्य स्थलस्य तेषामात्मविश्वासकारणम् । ······क्रोधश्च क्षणमात्रानन्तरं विचिन्त्यात्मानं तथा प्रवंचितं क्षुद्रैस्तैः ।······ आविष्टास्तेन तत्क्षणमेव निश्चिक्यिम स्पष्टीकर्तुं समक्षं तेषां······आत्मानं श्रीमत्सोमनाथद्वारवर्तिनं····श्रीमत्सोमनाथरक्षितं···अकुतोभयं मन्यमानानां मूढानां······कियान् समर्थ आसीत् तेषां श्रीमान् सोमनाथः'······अनादि-कालात् तैः पूजितः आराधितः······रक्षितुं तान् खड्गात् प्रचण्डात् अस्माकं ······सद्धर्मप्रसारार्थं तृणीकृत्य भौतिकानि सुखानि आदिगन्तं भ्रमताम् । ······ददिम च सहसाऽऽदेशं स्वं बलं कर्कशेन स्वरेण आक्रमणार्थं तन्नगरं तडिद्वेगेन ।······तदपि····आदित एव सप्ताहावधिकप्रतीक्षाव्याकुलं आदित एवाऽऽक्रमणातुरं तत्रापि साक्षात्कृत्यात्मानं दिग्विजयिनं तथा प्रवञ्चितं—वयमिव—क्रुद्धं······तथाऽऽचक्राम तत्······आन्दोलयत् दिक्चक्रं······प्रकंपयत् नक्षत्रमण्डलं····कर्णभेदिकाभिः रणगर्जनाभिः 'दीन—दीन—'इत्यादिकाभिर्यत् निवासिनस्तस्य नगरस्य, आकर्ण्य ताः रणगर्जनाश्चकिताः······अनुभूय तत् क्षणमेव तदाक्रमणं हतबुद्धयः······बभूवुः परासवः ।······केचिदेवावशिष्टाः शेकुः प्रपलायितुं ततः······तदपि अस्माभिः उन्मूलयितुं मनोबलं समीपवर्ति-नामितरेतराणां नगराणां वासिनां प्रसारेण वार्त्तायाः अस्मद्विजयस्य बद्धपरिकरैः तथा विशिष्यादिष्टेनास्मद्बलेनोपेक्षिताः ।

'(सतिरस्कारं) न खलु एकोऽपि मध्यात् तेषां······मुमूर्षाव्याकुलानां

पलायमानानां पलायितानां······सस्मार स्मर्तुं सकृदपि तद्रक्षकं 'श्रीमन्तं' 'देवदेवं' सोमनाथम् !······तावती प्रगाढाऽऽसीत् तेषां क्षुद्राणां श्रद्धा !'

कृत्वाऽपि तन्नगरं निर्मनुष्यं मुहुर्ताभ्यन्तरेऽनुपशमितक्रोधावेगं अस्मदबलं ······अस्मदबलं······ततो व्यापारयामासाऽऽत्मानं लुण्ठने तस्य प्रज्वलत्गृह-दहनप्रकाश्यमानस्य ।

'न वयं प्रायताम संयन्तुं तत् एकदापि ।'

"कः खलु प्रायतत संयन्तुं वृन्दं हिंस्राणां श्वापदानां······स्वयं मुक्तानां निगडबन्धात्······आक्रमणावेशपरवशानां······क्रोधातिरेकविस्मृतस्वपरभा-वानां ?······प्रायतत······अलभत च साफल्यं तत्र ?'—विचिन्त्यैवं······ उररीकृत्य साक्षिभावं······प्रलयताण्डवं तस्यानुमोदमाना मौनेन ।'

'परन्तु'—बलादपकृष्य तस्य चित्तमतीतघटनानां लोमसंहर्षणानां स्मृति-चक्षुषा साक्षात्कारात्, तत् वर्तमानासु तासु प्रसह्य संयोजयता, तुमुलेन उद्घोषेण सांयतनदेवपूजापरिसमाप्तिसंसूचकेन युगपत्प्रहतमृदंगपटहझर्झर-दुन्दुभ्यादिवाद्यनिनादोपोद्बलितेन सांध्याऽऽरतिगीतेन प्रबोधित इव······ स्फुटतरमुवाच स आक्रामकः······विन्सस्यन् रिक्तं तं चषकं हस्ते तत्क्षण-मेव प्रसारिते समीपवर्तिनस्तस्य परिचारकस्यान्धकारवशादलक्ष्यप्रायमुख-मुद्रस्य······अवलोकयंश्च दिशि नैशान्धकारनिगलितप्रायस्य अन्तरुद्गच्छ-दालोकसंसूच्यकानसंनिवेशस्य महतः प्राकारस्य आरक्ततराभ्यामाकुंचित-तराभ्यां नयनाभ्यां······'अभीष्टमस्माकं······, कतिपयानां नागरिकाणां तस्य देवद्वारस्य (—अधुनाभस्मावशिष्टस्य—) ततः प्रपलायनमनुमोद मानानां,······लक्ष्यते विफलीभूतमिव ।'

'न पश्यामः वयं······अपराह्णकालादेवावरुध्यैतत् देवस्थानं निरुच्छ्वासं विश्रान्ताः······गतागतानि एतस्य सहस्रलोचनैः लोचमानाः······एकमपि चिह्नं एतस्य मनोबलक्षयमस्फुटमपि संसूचयत् ।······यथापूर्वेव लक्ष्यतेऽस्य इयं सांध्यपूजाऽऽरतिपद्धतिः ।······नितान्तमनुद्विग्नं इव······स्तोकमपि अनुत्तेजित इव लक्ष्यतेऽयं (दिनावसानात् प्रभृति अधिकाधिकं कार्श्यं भज-मानोऽपि अविच्छिन्नः) संमर्दः नागरिकाणामस्य······कमपि अपायं कर्तुम-समर्थानां हिंस्राणां श्वापदानां स्तोममिवास्मत्सैनिकानां संदोहमवलोकयितुं प्राकारशिरसि अस्य विशिष्य आगतानाम् ।'

'श्व एव प्रातः'–शनैः शनैरुत्थाय स्वासनात्,·····दीर्घासनवशात् निश्चेतनाभ्यामिव संवृत्ताभ्यां पद्भ्यां·····आभ्यन्तरं विश्रामकक्षं, विन्यस्य करं कम्पमानं स्कन्धे अग्रेसृतस्य तस्य परिचारकस्य,·····मन्दं मन्दं निवर्तमानः·····अस्फुटमुवाच स मूर्तिभञ्जकः, 'लप्स्यतेऽयं, फलमनुरूपं एतस्य औदासीन्यस्य।·····लप्स्यते·····लप्स्यते अननुभूतपूर्वसदृशम्।

'मसूदस्तु'–आरभत च चिन्तयितुं·····सहसा कट्वास्वाद इव····· सनिःश्वासं शय्यायां पतितः·····मृदुलधवलमहाधनदुकूलेनाऽऽवृतकृशशरीरः ·····निमीलितलोचनः·····'मसूदस्तु, इमं देवद्वारसमं मन्यमानः ववरुछं आक्रमितुं प्रत्यर्थिनं, यावनं सामर्थ्यमुपेक्षमाणं,·····अद्य एव·····अपराह्ण एव।·····न स मनसि चकार क्षणमेकमपि आक्रमणाक्षमां अवस्थां अस्मद्बलस्याहोरात्रप्रवासेन परिश्रान्तस्य·····न वा संभावनां सर्वथाऽस्माभिरसंभावितस्य कूटाक्रमणस्य·····न वा संभावनां पार्ष्णिप्रहारस्य एतस्य देवस्थानस्य रिरक्षिषया प्रेरितस्य कस्यचिद् नृपस्य।'

'एतादृश एव मसूदः·····दासीभूय क्षणिकस्य अविचारितरमणीयस्य विचारस्य यत्किमपि कर्तुं सदा संनद्धः।·····आ कैशोर्यात् सर्वेष्वेव भारताभियानेषु अस्मान्-अनाहूतोऽपि–अनुसरन्·····पश्यन् चास्मान् तेषु निरपवादं सफलीभूतम्·····सः मन्यते प्रत्यर्थिमात्रं तृणकल्पं·····अनायासमेव जय्यम्। ·····बहुमन्यते च यावनं सामर्थ्यमतिरंजितया दृष्ट्या।·····यदि हि सः साक्षादकरिष्यत् पांचनदं सामर्थ्यं·····तेन वृद्धेन जयपालेन रणशिरसि नीयमानं·····तर्हि सः न एवममंस्यत।'

'तद्दृष्टिदोषं तादृशं आनत्कैशोर्यात् जानद्भिः, दूरीकर्तुं तमिच्छद्भिरस्माभिः·····वारंवारं समादिष्टोऽपि आक्रमितुं तान् बर्बरान् सेल्जूकान्, पराजेतुं च तान् स्वबाहुबलेन स्वमतिबलसहकृतेन (–जानीमः कस्मात् कारणात्–) न प्रवर्तते कर्तुं तथा,·····प्रवृत्तोऽपि कदाचित्·····निवर्तते राजधानीं·····संतुष्टस्तत्पराजयाभासेन एव।

'एवमतिरंजित दृष्टिः·····अक्षमः पर्यालोचनस्य निष्पक्षस्य परवीर्यस्य ·····कथं स प्रभविष्यति रक्षितुमभिवर्द्धयितुं चैतत् साम्राज्यमस्माकं····· स्वर्गं गतेषु अस्मासु ?

'तत्सहजः·····समुहम्मदौ वा·····बिभ्यन् रणस्थलात्·····प्रदर्शयन्

आत्मानं (–वस्तुतः रागद्वेषादिमानवमात्रसुलभदोषदुष्टं–) शान्तिप्रियम् ।'

'परस्परसहकार्येण प्रवर्तिष्येते तौ–इति तु मनोरथमात्रम् ।······सहजावपि तौ शरीरेण मनसा च तावन्तावेव समानौ······यावन्तौ प्रकाशान्धकारौ ।'

'कथं खलु तौ······तथाविधौ······भवेतां समर्थौ······रक्षितुमस्माकं साम्राज्यमेतत् ?–इति चिन्तयाऽहोरात्रं पीड्यमानाः······वयं······न पारयामः अहनि कर्तुमस्माकं कार्यजातं······रात्रौ वा लब्धुं निद्रासुखम् !–' शनैः शनैः मज्जन् निद्रायामस्वस्थायां······अखिद्यत सः ।······ददर्श इवात्मानं सहसा······मृतं······अकृतसंस्कारविशेषं······भूमौ विश्रामकक्षस्य शायितं······अवलोकमानं च निःस्पन्दाभ्यां भयावहाभ्यां लोचनाभ्यां स्वसुतयुगलं······विस्मृत्य स्वं पुत्रोचितं कर्तव्यं तात्कालिकं······समुपेक्ष्य तस्य और्ध्वदैहिकं कार्यजातं······अवगणय्य पिपीलिकासमूहं तस्य व्यात्ते मुखे निःशंकं प्रविशन्तं······परस्परेण सह कर्णकटुविवदमानं······तच्छयनकक्षे कृतसंमर्दन तदधिकारिसमूहेनोच्चैः हसताऽवमन्यमानं······आत्मानं तत् सर्वं लोचमानमपि, मनोवेदनामपरामनुभवन्तमपि, संनियम्य तं बन्धुकलहं गूहितुं तस्य यवनसम्राजः, गृहछिद्रं प्रयतमानमपि···असमर्थं कर्तुं किंचिदपि······अकस्मात् तत्सुतान्यतरेण विकृततरमुखमुद्रेण सहसा तत्समीपमुपसृतेन पादेन वामेन ताड्यमानम् ।······जजागार सहसा क्रोधावेशप्रकंपमानवपुः । अपश्यच्चात्मानं राजोचितवेषं विश्रामकक्षस्य पर्यंके तत्प्रिये शायितं······अवलोकमानं च विनिद्राभ्यां लोचनाभ्यां लोचनयोः निःस्पन्दयोः भयावहयोः अन्तस्तले एकस्य महत, आपिंगलवर्णस्याशीविषस्य······कथमपि लब्ध्वा प्रवेशं तत्पटप्रासादकक्षे, कथमपि आरुह्य तत्पर्यंकं, तत्समीपमुपसृतस्य······कृत्वा च कुण्डलनां तद्वक्षःस्थलेऽवस्थितस्य······समुत्थाप्य च स्वां फणां हिंस्रया दंशनेच्छया······तमेवलोकमानस्य ।

क्षणमात्रं च भयमूढः, अवरुद्धश्वासः, प्रेतवन्निश्चलः,······'किं वास्तविकोऽयं ?······उत प्रातिभासिकः ?' इति विनिश्चेतुं प्रयतमानः,······क्षणमात्रानन्तरं 'वास्तविक एवायं' इति संजातनिश्चयः···आत्यंतिक्या जिजीविषया केवलया प्रेर्यमाणः······प्रयुज्य यावच्छक्यमेकाग्र्यं चेतसः धैर्यं मनसः चातुर्यं च संविदः······शनैः शनैरुदस्थापयत् स्वं दक्षिणं करं, मंदनैशदीपालोकालो-

क्यमानांगुलीयकमणिव्याजेन तमाश्वासयन्तमिव······अपासारयच्च वेगेनाऽऽवेशेन चाऽऽत्यन्तिकेन तं······वक्षःस्थलाधिरुढं साक्षादन्तकं······ततः एकयैव चपेटया दुःसह्या।

तथाऽपसारितः···उत्तानपतितः दूरे कोणे तस्य विश्रामकक्षस्य सफदूत्कारं ······स आशीविषः······पर्यवस्थाप्य स्वां तनुं स्वाभाविक्यामवस्थायां······ अवलोक्य आत्मनस्तथाऽवमन्तारं, शय्यायां पूर्ववत् शयानं, वलयित्वा स्वां ग्रीवां तमेवावलोकमानं, नेत्राभ्यां दहनमिव वमद्भ्यां··· सफूत्कारं अपजगाम तस्मात् कक्षात्,······व्यलीयत च क्षणमात्रानन्तरं बहिः प्रसृते नैशेऽन्धकारे ······अपुनरागमनाय।

यवनसम्राट् तु······अवलोक्य तं तथाविलीनं······शश्वास दीर्घं समुपजातश्वास इव, अवातिष्ठत तथैव शय्यायां, विचारयामास चिरं–'स आगमः तस्य विषधरस्य······किमासीत् काकतालीयः?·····अथवा बुद्धिपुरःसरं केनापि (अर्थात् अहितेन) प्रच्छन्नेन कारितः?' न शशाक संप्रधारयितुं किमपि, अपममाने प्रस्वेदबिन्दून् वलिते स्वे भालप्रदेशे समुद्भूतान् (–तावान् भीत आसीत् सः कृते आत्मनः······सः हताहतासंख्यमानवः!–), उदतिष्ठत् शय्यायाः शनैः शनैः, उपससार मंदं–मंदं मुख्य द्वारं पटप्रासादस्य, अवस्थाय च चिरं तत्रारभत श्वसितुं दीर्घं दीर्घं·····प्रयतमान इव पर्यवस्थापयितुमात्मानं प्राणवायुना प्राभातिकेन।

यथा यथा चावाप साफल्यं स्वप्रयत्नेषु······तथा तथा आरभतानुभवितुमात्मानमापूर्यमाणं क्रोधेन,·····स्वमहितं,·····पराजेतुं तं रणांगणेऽसमर्थं, व्यापादयितुं तं कापुरुषोचितेन तेन तेनोपायेन प्रयतमानं विषयी कृत्य वेगेन वर्द्धमानेन।

दृढं हि स अमन्यत तं आशीविषं······तत् सदृशे प्रदेशे दुरावापं तस्याहितानां मध्यात् कुटिलकुटिलेन तस्य पटप्रासादे विमोचितम्।

कथं खलु तस्याहितः सः शशाक प्रवेष्टुं तस्य सेनासंनिवेशं, कूटाक्रमणाशंकया सर्वतः निरुच्छ्वासं परिरक्षितं?···तत्रापि उपसर्तुं तस्य पटप्रासादं, अत्यन्तं विश्वसनीयैः यवनरक्षकैः संरक्षितं?······तत्रापि विमोक्तुं तत्समीपे तं विषधरमनुत्पाद्य संशयलेशं मनसि कस्यापि?······ततश्च यातुं विलयं स्वयमत्यन्तं–'एतत्तु न खलु शशाकानुमातुं·····प्रयत्यापि चिरं सः।

न्यवर्तत चशक्त्या तयाऽऽत्मनः संधुक्षितक्रोधदहनः······मंदं–मंदं······ निक्षिप्य दृष्टिमेकामन्यमनस्कां उपरि स्वपरिचारकस्य अलतमशस्य, स्वपट-प्रासादसभाकक्षकोणे भूतले एवार्भकवत् निशंकं शयानस्य,······स्वं विश्राम-कक्षम् ।

आरभत च शय्योपविष्टः······आशीविषपतनस्थलनिबद्धदृष्टिः······ विचारयितुं कूटघातप्रयाससंभावनाः······तत्समीपचराज्ञातविशेषकृतकयवन-कर्तृकां······प्रतिक्षणं बलवत्तरीभवन्तीं । न परंतु पारयामास···अन्विष्यापि चिरं······कमपि तन्निकटतमवर्तिनं······लक्षांशेनापि संभाव्यं तत् कर्तारम् ।

एवं विचारमग्नस्यानपनीतनैशवेषस्य तस्य चित्तं······अथ······हठात् समाकृष्यत विदूरेणापि श्राव्येण निनदेन······हासस्येव, प्रचण्डात् जनसंमर्दात् निरन्तरमुद्गच्छतः ।

'कुतोऽयं हासः······उपहास इव······अस्माकं'–इति प्रकुप्य तत्क्षणमेव बहिः पटप्रासादागतस्य तस्य दृष्टिश्च······सर्वतः प्रसृतबालातपदीपिताऽपि ······मुख्यद्वारसमीपे एवावस्थितेन, एकाग्र्या दृष्ट्या नगरप्राकारशिखरम-वलोकयता, दृश्यमिव किंचित् अदृष्टचरं साक्षात्कुर्वाणेन, मूकमूकेनापि निश्चलेनापि क्रोधातिरेकारक्ततरमुखमुद्रेण, तत्सैनिकाधिकारिसंमर्देन,······ नातिदूर एव तस्मात्······दक्षिणपार्श्वे एव तस्य······समवेतेन च तद्वैयक्ति-कपरिचारकवृन्देनालतमशप्रमुखेन, व्यात्तमुखमवलोकयता, तत्समान-वृत्तान्तेन ।

'शमशेर !'······कोपतिक्तेन स्वरेण स आजुहाव सैनिकाधिकारिणा-मन्यतमं निकटवर्तिनम् ।

'किमिति एवं, विहसन्ति······(निक्षिप्य दृष्टिमेकां दिशि नगरप्राकार-शिखरस्य)······एतेऽधन्याः ?'–आकर्ण्य तन्नाम उच्चारितं तत्क्षणमेव पृथग्भूय संमर्दात् (-दृष्ट्वा तं स्वपुरत उपस्थितं सहसास्वनमितोत्तमांगात्-) तत्समीपे उपगतं आदरप्रह्वं कटिबद्धखड्गमुष्टिन्यस्तदक्षिणहस्तं तमधि-कारिणं······अवलोक्य तमाश्वस्तमिव लक्ष्यमाणं····पप्रच्छ सः प्रश्नमुखरया भृकुट्या एव ।

विनाशमात्मनः आगतमवलोक्य,······हुजूर !'–प्रत्युवाच सः भूमितल-निगडितलोचनः मंद्रेण स्वरेण ।

आदिष्टाऽपि तेन व्याख्यातुं स्वमुत्तरं········अनौत्सुक्यं स्वं तथा कर्तुं चिरं व्यानक् खिन्नतरमुद्रः ।

अन्ते चोवाच क्षणैकं निभाल्य कथमपि उत्थापिताभ्यां नयनाभ्यां स्वामिनः मुखं क्रोधताम्रं भीतभीतः······'हुजूर को अल्लाहताला लम्बी उम्र बख्शे ।······'निहतः युष्माकं स्वामी अस्माकं देवाधिदेवेन सोमनाथेन'–इति उच्चैः (आक्रुश्य उद्घुष्य उपहसन्ति अस्मान् मूढा एते !'

आकर्ण्य तद्वचनं क्षणमात्रं विस्मितस्य, क्षणमात्रं तर्कमग्नस्य, क्षणमात्रं प्राप्येव प्रत्युत्तरं कस्यचित् प्रश्नस्य तावत्कालपर्यन्तमनुत्तरितस्य समाश्वस्तस्य, तस्य मुखमुद्रा······तिर्यक्निपतद्दिनकरकरोद्भासिता·····शनैः शनैः इयती बभूव तिरस्कारदुःसहा······यत् धिक्कृता इव तया·····ते सर्वेऽपि तत्सेवकाः······कतिपयक्षणपूर्वमेव स्वस्वामिनः विषये दुःशंकामनुभवन्तः····· आरभन्त मन्तुमात्मानं क्षुद्रं·····भीरुहृदयं, बहु मन्तुं च स्वामिनं स्वं क्षणमात्रानन्तरमेव······'अल्लाहो अकबर !' इति रणगर्जनया·····विजित्य तं उपहासहासकोलाहलं सर्वासु दिक्षु प्रसरन्त्या·····तान् भरन्तं वीरोचितेनाऽऽवेशेन ।

उन्मत्तप्रायाश्च क्षणमात्राभ्यन्तरे एव तेनाऽऽवेशेन अननुभूतपूर्वसदृशेन आरभन्त·····समुद्यतायुधाः सगर्वाः ज्वलन्नेत्राः······उन्नततरा इव बलवत्तरा इव अजेयतरा इव·····गर्जितुं·····हाकिमे आला ए हिंदोस्तां जिन्दबाद !' 'हाकिमे आला ए हिंदोस्ताँ जिन्दबाद !' 'हाकिमे आला ए हिंदोस्ताँ जिन्दबाद !'······अभवंश्च समर्थाः कतिपयक्षणानन्तरं आकर्षणे चित्तस्य तस्य प्राकारशिखरगतापारजनसंमर्दस्य दिशि स्वस्वामिनः······तिष्ठतः स्वपटप्रासादद्वारे·····स्तोकमप्यक्षतस्य·····समुद्धृत्य स्वं खड्गं विकोषमभिमानाभिभाविन्या दृष्ट्या संमर्दमेव लोचमानस्य !

तथाऽऽकृष्टचित्तश्च न पारयामास स जनसंमर्दः विश्वसितुं स्वदृशि, अवलोकयामास तं पुनः पुनः, अन्ते च समुपजातविश्वासः विस्मयस्तब्धः आश्चर्यमूकः······बभूव भयाक्रान्तः······दृष्ट्वेव प्रेतं स्वपुरत आविर्भूतम् ।

तथा बभूव भयाक्रान्तः·······यथा व्यात्तमुखः न विवेद·······सम्राजं मूर्तिभंजकानां, निरीक्ष्य तं तथा भयाक्रान्तं मनोवैज्ञानिकदृष्ट्या प्रतिकारासमर्थं दृढतरीभूतात्मविश्वासं, कृत्वा 'दीन दीन' इति रणगर्जनां बलं स्वकीयं

तावता कालेनाऽऽयोधनसज्जं आदिशन्तं तदाक्रमणार्थं, नयन्तं तत् पंक्तबद्ध-मश्वसादिप्रायं उद्यतायुधं गर्जनामुखरं दिशि प्राकारमहाद्वारस्वाऽऽत्मविश्वा-सभावनामदभ्यां सर्वतः प्रकिरन्त्या गर्वोद्धतया गत्या, अतिक्रामन्तं प्रदेशं निर्मनुष्यमुभयान्तरालवर्तिनं कतिपयेष्वेवालक्षितगतेषु क्षणेषु, प्रविशन्तं चान्तः नगरस्य······समुपेक्ष्य कतिपयान् नागरिकान् प्राकारमहाद्वारे कृत-संमर्दान्, तदागमनं दृश्यमद्भुतमिव विस्फारिताक्षं मूकमूकमवलोकमानान् ······तार्णमिव ।

भयतंद्रा सा तस्य क्षणमात्रानन्तरं अभज्यत सहसोदीर्णेन एकेनापि कोलाहले युगपन्निपतदसंख्यतुरगपदखोद्भूते सर्वश्राव्येण वेदनाविह्वलेनाऽऽ-क्रन्देन कस्यचित्······महाद्वारान्तर्हिततया कृते तस्य दुर्लक्ष्यस्य नरस्य (–स्यान्नाम प्रहरिणामन्यतमस्य, अकस्मात् संस्मृतस्वकर्तव्यस्य, तदन्तःप्रवेश-प्रतिरोधसाहसं कुर्वाणस्य···तत्क्षणमेवाऽऽक्रामकसैनिकान्यतमखड्गेण उरसि विदीर्णस्य·······अधःपतितस्य······अन्तःप्रविशदश्वबलखुरदलितस्य········ कतिपयेष्वेव क्षणेषु मृतस्य–) कस्यचित् ।

अन्वगम्यत च प्रचण्डया······गगनमध्यवर्तिनं सप्ताश्वरयमिव स्पृशन्त्या ······निवातनिस्कंपं दिक्चक्रवालमिव कम्पयन्त्या······ध्वनिलहर्या······आदौ प्राकारशिखरगतजनसंमर्दात् ततः नगरान्तर्गतराजमार्गोभयपार्श्वगतोत्तुंग-प्रासादमालिकावलभिषु गृहवातायनपरंपरासु कृतसंमर्दात् नागरिकवृन्दात् समुद्गतया······हे सोमनाथ ! ······हे सोमनाथ !' इत्याक्रोशमुखरया,······ न प्रस्फुरद्रणावेशदुःसहया, अपि तु दीनदीनया ।

ईषदप्यविचलितस्तया ध्वनिलहर्याऽविच्छिन्नया······जानन्निवाकिंचित्-कारितां तस्याः प्रार्थनायाः करुणकरुणाया अपि दीनदीनाया अपि निःसर-न्त्या मुखेभ्यः स्वयं विस्मृतस्वकर्तव्यानां स्वयं विषयोपभोगव्यासक्तचित्तानां स्वयं भक्तिशक्तिविहीनानां अथ च संकटवेलासु–संकटवेलास्वेव–परमेश्वरं स्मरतां–तदपि वाचैव–तेषां मूर्तिपूजकानां स्थिरः······स नेता आक्रामकाणां ······स मूर्तः विपाकः पापानां भारतीयानामनेकजन्मसमुच्चितानां······सदर्पं प्रविवेश राजमार्गं विस्तृतं,·····व्याप तं, प्रविवेश जालं मार्गाणां इतरेतराणां राजमार्गेण संबद्धानां,······व्याप तदपि,······बलेन स्वेन प्रहरमात्राभ्यन्तर एव ।

संतुष्टश्च मत्वाऽऽत्मानमधिकारिणं सफलस्यापि सोमनाथमन्दिरं परिवृत्यानादिन: कालात् समुपविष्टस्य देवनगरस्य तस्य······आदिदेश सहसोद्गतेन तीक्ष्णेनाविच्छिन्ने तस्मिन् आरावेऽपि विदूरश्राव्येण स्वरेण तद्बलं स्वं······व्यापादयितुं आसमन्तिकं जनसंमर्दं······तावत्कालपर्यन्तमहतप्रायं······तावत्कालपर्यन्तमलौकिकं चमत्कारं आशासानं······तावत्कालपर्यन्तं मुखेन सोमनाथं स्मरन्तम् ।

आकर्ण्यैव तमादेशं तस्य चिरप्रतीक्षितं चिराकांक्षितं······सहसाऽपाकृतबंधन: महान् जलस्तोम इव······स अपार:, आपूर्य रथ्योपरथ्याजालं नगरप्रसृतं उपप्लवमान: यवनाश्वारोहिसंदोह:······आरभताभिभवितुमाक्रमितुं प्रहर्तुं खण्डयितुं हन्तुं चाऽऽसमन्तिकं भयमूढं निष्प्रतिरोधमर्बिचित्करं जागरिकसंमर्दम्····'अल्लाहो अकबर !' इत्यादिभि: रणघोषैरप्रतिद्वंद्विभि: कम्पयन् चीत्काराऽऽक्रोशहाहाकारानुनिनादिनीरूभयमाश्र्वव्यापिनी: क्षणश: क्षीणतरीभवति सांध्ये प्रकाशे मज्जती: गगनचुम्बिनी: प्रासादपंक्ती: । परिवर्तयामास च तं लूनमस्तकबहुले कृत्तकबंधकुत्सितदर्शने छिन्नहस्तपाददन्तुरे शुक्रमायुकफपिच्छिले पललपंकिले उत्पतद्धमनीजाले पुरूषप्रमाणेरथ्योपरथ्याजालालव्यापके रुधिरकच्छे ।

क इव च तत्र विस्मय: ?

न खलु कोऽपि ।

न हि कोऽपि विस्मयते दृष्ट्वा दिगन्तप्रसृतं तार्णं······कर्तरिकाशतकृत्तम् ।

साक्षात्कर्तुमेव ताटस्थ्येन घटनाक्रममैहिकं समादिष्टोऽपि विधात्रा······साक्षात्कृत्य तत् सामवायिकं निर्वापणमसंख्यानां निरपराधानां······अथवा सति संपदि तद्रक्षाऽसामर्थ्यमात्रापराद्धानां······नरनारीजनामां निर्विण्ण इव ······भगवान् सहस्रकिरण:······अथ······पातयामासाऽऽत्मानं पश्चिमाम्बुनिधौ ।······प्रतिफलिता इव धरणीतलप्रसृतापाररुधिरसागरछठा गगनसरसि······प्रससार आरक्ता प्रभा सायंसंध्याकालीना······आरभन्त काशितुं गगनांगणेऽसंख्यास्तारका:······अवलोक्य भारतश्रिय: तद्दुर्दैवं दु:खविह्वलाया: दिनश्रिय: निपतिता अश्रुबिन्दव इव ।······आस्त आवरितुं नगरं तन्महत् प्रशान्ताक्रोशं नीरवं नि:स्तब्धं निर्दीपं निर्धूमं नैश: अंधकार:······

मूर्तः नैराश्यभाव इव भक्तानां असंख्यानां……निलीय स्वयं प्रासादेषु गृहेषु मन्दिरेषु आपणेषु बाह्यं तद्भीषणं संहारकाण्डमवलोकयताम् ।

अवलोक्य तं वेगेन स्वं लक्ष्यं……स्वं भक्ष्यं……आवृणानं,……सहसा प्रबोधित इव रक्तपानमदात्……स मूर्तिभंजकः……संययाम स्वं बलं रथ्योपरथ्यासु प्रसृतं……उन्मत्तमिव प्रमत्तमिव विध्वंसप्रवृत्तं दुर्दमनीयं…… स्थापयामास जालकं गुल्मानां सशस्त्राणां सालातानां तत्र तत्र रथ्यासु संधि-स्थानेषु रथ्यानां चत्वरेषु च,……अपचकर्ष स्वमधिकतरं बलं बहिर्नगरात्, ……आरभत च प्रतीक्षितुमन्तं निशायास्तस्याः विघ्नकारिण्याः ।

इयाय च……अन्तं तस्याः……अविदितगतयामायाः……कदाचित् अपरेद्युतनबलप्रयोगपरिकल्पने व्यग्रः,……कदाचित् प्राप्तकल्पपरकीयधनेय-त्तोत्प्रेक्षणे मग्नः,……कदाचित् आसमन्तिकभारतीयनृपप्रतिक्रियोहने संलग्नः ।

आरभत च व्याप्तुं तत्रनगरं पुनः……स्वेन बलेन……अननुष्ठितनित्य-क्रिय एव ।

लोभातुराणां हि कुतो निद्रा……क्षुधा वा……पिपासा वा ?

श्रृणुमः खलु—अन्नक्षुधा……प्रज्वलिताऽपि आदौ……समुपेक्षिता…… शममिवोपयाति……प्राक् पुनर्ज्वलनात् ।

उपयायात् नाम ।

परंतु—धनक्षुधा ।

कथमिव हि अन्यथा……सः……क्षणमपि अनुपशान्तधनक्षुधः एवार-भत लुण्ठितुं नगरं तत् निष्प्रतिरोधं……सहस्रैः……लक्षैः……असंख्यैः हस्तैः……असंख्यदंष्ट्रः क्रव्याद इव शवम् ?

तृप्तविनष्टपरप्राणक्षुदिव……न स अधुना संजहार हतावशिष्टान् अपि असंख्यान् इवानन्तानिव पुनः पुनः प्रजायमानानिव निवासिनस्तस्य नगरस्य, ……अपि तु व्यापारयामास बलं स्वं लुण्ठने एव साफल्येन ।

गगनमध्यमध्यारुढे च दिनकरे……बभूव समर्थः एतावतो धनराशेः प्रचण्डस्य लुण्ठने प्रासादेभ्यो वणिजां पूजासामग्रीविक्रेतॄणां पूजाधिकृताना-ञ्च ब्राह्मब्रुवाणां……यत्……अकृतसोमनाथमन्दिरस्पर्श एव बभूव समा-क्रान्तः……, न स्यान्नाम तृप्त्या,……अपि तु—आशंकया तावद्धनराशि-

समुद्वहनविषयिण्या।......इयेष च निर्वर्तितुं ततः......समुपेक्ष्यावहेलया एकमात्रमक्षतमवस्थितं मन्दिरं सोमनाथस्य–'विराजतां नाम एतत् (–सकुत्स-स्मितं–)–प्रत्यक्षोदाहरणत्वेनाकिंचित्करत्वस्य......किंचित्करणासामर्थ्यस्य ......स्वभक्तजनसंकटक्षणेषु'–इति चिन्तयित्वा,

न्यवर्तिष्यत च सत्यमेव क्षणमात्रानन्तरं–यदि नाम एका घटना...... सर्वथाऽनपेक्षिता......स्यान्नाम तत्प्राक्तनमात्रप्रेरिता......न तस्मिन्नेव क्षणेऽघटिष्यत,......न एकः पदार्थः......आकाशादिव वेगेन पतिता......दिश इव पश्चिमायाः रंहसाऽऽगतः......सहसा तं वक्षसि......केवलेन कौशेन यवनराजवेषेणाऽऽवृते इव लक्ष्यमाणेऽपि, वस्तुतः -अन्तःपरिहितेन लौहेन कवचेनाऽऽवृते वक्षसि......अताडयिष्यत्।

परंतु–घटना साऽघटत।......यदार्थः एकस्तं अताडयत्।

ताडितस्तथाऽकस्मात्......तदाघातेननातितीव्रेण किंचिद्विचालित इव सः......मूर्तिरिव स्वतुरगाधिष्ठितः......क्षणमात्रं पपात इव किंचित् पृष्ठतः ......क्षणमात्रमेव,......किंचिदेव......परंतु।......क्षणमात्रान्तरमेव हि पुनः-पर्यवस्थापितस्वान्तः पुनरधिगतस्वाधिकारः......आरभतावतरितुं स्वतुरगात् ग्रहणेच्छया तस्य पदार्थस्य स्वहस्ते कौतूहलवशात्।......प्रागेव परंतु तद-वतरणात्......तत्पृष्ठवर्ती एकः कश्चन भल्लहस्तः अश्वसादस्तदीयः स्वयमवततार स्वात् अश्वात्,......स्वयं जग्राह तं पदार्थं......अर्पयामास च तं तस्मै।

गृहीत्वा च तं हस्ते......सचिरं परीक्षतेऽस्म सकौतूहलम्।

स आसीत् (–अन्ते निश्चिकाय सः–) एकः पृषत्कः......विशिष्टः पृषत्कः......भारतीयैरेव प्रयुज्यमानः पृषत्कः......निशितः......विलक्षणः...... त्रिशूलाकारः......आरक्ताग्रः,......रुधिरारक्ताग्रः ?......, नहि नहि,...... आर्द्रकुंकुमारक्ताग्रः,......रक्ताक्षतालाञ्छितः......(आघ्राय) धूपवासितः, ......आम्।......सद्यःपूजितः पृषत्कः।

परीक्षमाणस्यैव तस्य बभूव सा......आदित एवासुरूपा......तत्रापि वार्धकाक्रान्ता, वलिता, क्षामाऽनवरतप्रवासचिन्ताक्षीणतरा, आरक्तोच्छू-ननयनोदग्रा, प्रस्फुरन्नासापुटा आपीतधवलश्मश्रुपाशा, मुखमुद्रा......वेगेन विलीयमानकौतूहलछटा......तिरस्कारदुःसहा।'

'इत्थं'—स जगाद निःशब्दं······उन्नमय्य दृष्टिं स्वां सहसा तीक्ष्णतरीभूतां निगडय्य तां मन्दिरशिखरवर्तिवातायनपंक्तौ उपहसन् तद्दुश्चेष्टितं ···'इत्थं······तर्हि······अवलोक्यापि स्वं सर्वस्वं तथा लुण्ठ्यमानं स्वयं किंचिदपि कर्तुमक्षमाः, साक्षात्कृत्यापि (सतिरस्कारं) देवदेवं स्वं स्वभक्तजनसंरक्षणाक्षममविलीनभ्रान्तितिमिरा······क्षुद्रा एते······नरब्रुवाः······समीहन्तेऽधुना······पराजेतुं मां दिगन्तविख्यातमप्रतिद्वंद्विनं योद्धारं (—थूत्कृत्य—) इत्थंप्रकारकैस्तद्देवदेवतामसबलसंधुक्षितबलैः······शस्त्रैः! ······(सहसा सकुत्संस्मयमानः) तत्······अवलोकयन्तु एते······वैयर्थ्यं······एतादृशानामपि शस्त्राणां······एतादृशानामपि उपायानां कुत्सितानाम्!'

—इति निगद्य निःशब्दं······सः······प्रवृद्धान्तः कोपदहनज्वलन्नयनः तिक्तमुखास्यादः विलुप्ताशंकः आक्रामकः······विध्वंसनेच्छयैव केवलयाऽन्धया प्रेर्यमाणः······तत्याज स्वं प्राक्तनं विचारं,······निश्चिकाय विहातुं तदायतनं देवदेवस्य निरवशेषं विध्वस्तमेव,······व्यावर्तयामास तन्विमुखप्रायं स्वं अग्रयायिनं तुरगं दिशि सोमनाथमन्दिरस्य,······प्राप च तत् कतिपयेषु क्षणेष्वेव।

तमनु तस्य बलमपि······तद्घटनाकाण्डानभिज्ञं······तद्भावनाक्षोभापरिचितम्।

तमिव च······तत्संमुखं······अवतिष्ठत कतिपयक्षणपर्यन्तं······अवशमिव······निश्चलं विस्मितं मूकमूकम्।

बहूनि खलु मन्दिराणि भारतीयानाम् आसन् तेन स्वे प्रतिवार्षिकेऽमूर्तिभंजके भारताक्रमणे,······मन्दिराणि गान्धारप्रचलितानि, अथ च काश्मीरप्रसिद्धानि, पंचनदीयानानि, अथ च शौरसैनिकानि, आर्यावर्तशैल्या विनिर्मितानि, अथ च गुर्जरपद्धतिकानि,······मन्दिराणि स्वैश्वर्यविख्यातानि स्वभव्यताप्रसिद्धानि······अवलोकितानि आसन्, अथ च लुण्ठितानि भग्नानिविध्वस्तानि आसन् तेन मूर्तिविद्वषान्धदृष्टिना······'मूर्तिविद्वेषोऽयं मे तद्भक्तेः रूपमेवापरं······रूपं स्वल्पसुखदायि—' इति मनोवैज्ञानिकं तथ्यमजानानेन तेन।

न परंतु एकमपि मध्यात् तेषामसंख्यानामासीत् शतांशेनापि तत्समम्।

······इयत् खलु गगनचुम्बिस्वर्णकलशशिखरं तदासीत् विशालं भव्य·

मन्तःनिःसरद्धूपवल्लरीसुगंधितदिङ्मण्डलं अनवरतस्तोत्रपाठानुनिनादितं, नितान्तमनभिज्ञं इव वाह्यस्य विश्वस्य, नितान्तमसंपृक्तमिव प्रपञ्चेन संसारस्य, नितान्तमज्ञमिव बाह्यस्य जगतः, नितान्तं निश्चितमिव विषये तन्मर्यादातिक्रमणप्रयत्नस्य, नितान्तं आत्मगौरवान्वितमिव······यत् कतिपयक्षणपर्यन्तं मूर्तिरिबावातिष्ठत स्वयं यवनसम्राट् अपि······प्रभाबित इव।

किं पुनः······तस्य पांसुलपादं तद्बलम् ?

कतिपयक्षणानन्तरमेव परंतु······पर्यवस्थापयामासाऽऽत्मानं स मूर्तिमान् मूर्तिविद्वेषः।······अनुबभूव चाननुभूतपूर्वसदृशं प्रचण्डं उत्साहं तदवमर्दनार्थम्।

न उत्तुंगता तस्य मंदिरस्य, न विशालता, न भव्यता, न रम्यता पारयामास तं निवारयितुं निष्कारणात् तन्मर्यादातिक्रमणात्,······न वा तस्य पूजनीयता (–स्यान्नाम मतेनान्येषाम् !–) अनिराकरणीया।

पाशवं हि बलं स्वबलप्रमत्तः······मर्यादातिक्रमणार्थं उद्यतं······सत्ययेव हि–दुर्निवार्यम्।

आध्मातस्तेन बलेन······सः······अवश इव······प्रेर्यमाण इवाऽऽसुरेण केनापि सामर्थ्येन······उज्जुघोष–'दीन !······दीन !' इत्यातंककरमुद्घोषं घर्घरस्वरम्।······आरभत च निक्षेप्तुं पदानि उद्धतानि दिशि महाद्वारस्यानेकपुरुषप्रमाणस्य।

तमनु तत्सैन्यसंदोहोऽपि।

प्रविविक्षोरेवान्तस्तस्य पदवीमवरुरोध सहसा बहिरागतः भस्मचर्चितभालपट्टः स्तोत्रपाठस्फुरदोष्ठपुटः उपहारपाणि स्तोमो मंदिरपूजकानां······साष्टांगं प्रणतश्च तत्पुरतः आरभत प्रार्थयितुं तं कमपि तदभाषायां······तन्मात्रवेद्यायाम्।'

अपि तु–सद्यः स्फुटितसकुत्सस्मितविरुपतरमुखमुद्रः अन्तः प्रविवेष तस्य महाद्वारस्योपमृद्य तमनावृतोत्तमांगं उपानद्गूढाभ्यां दृप्ताभ्यां पादाभ्याम्।

तमनु तत्सैन्यसंदोहोऽपि।

कतिपवक्षणानन्तरमेव तौ विजहतुः स्फाटिकं दुग्धधवलं मन्दिरमहाद्वारप्रवेशभूतलं रक्तारक्तमानवमांकर्दमपिच्छलं विकीर्णहस्तपादास्थिविरुपं समुत्पतत्कतिपयांगुलिभीषणदर्शनं लुण्ठदसंख्यनरमुण्डम्।

आक्रमतुश्च स्वं मार्गं······समुद्दिश्य गर्भगृहं निष्करुणमुखमुद्रौ ।

यथा यथा चाऽऽक्रमतुस्तौ स्वं मार्गं, उल्लंघयामासतुश्च आभ्यन्तरतरं प्रकोष्ठान्तरं क्रमशो वर्द्धमानरामणीयकं······अवगणय्य प्रार्थनाः प्रतिपदक्षेपं (न विघ्नः—कुतः—) पुरतस्तयोराविर्भवतां बद्धकराञ्जलिनां साश्रुनेत्राणां महार्होपायनहस्तानामुच्चाधिकारसंपन्नानां दुर्लभदर्शनानां मन्दिरपूजाधिकृतानां······तथा तथा तयोर्मुखमुद्रे तथा तथा निष्करुणेऽभवतां······यथा ते आरभेतां तिरस्कर्तुं यमदूतमुखमुद्रानिष्कारुण्यमपि ।

तद्‌वस्थौ तौ······चिरादिव······अथ प्रविविशतुः गर्भगृहं······अनतिविशालं नितान्तमनलंकृतं एकलेन मन्देन घृतदीपेनाऽऽलोकितं अनवरतनिसरद्‌धूपबल्लरीसुरभितं प्रत्यग्रपूजापुष्पसौरभहृद्यम्,······अवलोकयामासतुश्च संनिधावेन देवभूर्तेः······न स्तोमं पूजाधिकृतानां······न समुदायं वा उच्चानां राजपुरुषाणां दत्वाऽपारं धनराशिं अभयं मूर्तेः क्रेतुं संनद्धानां,······अपि तु—एकं वृद्धमनावृतोत्तमांगं भस्मलाञ्छितभालप्रदेशं कृशं विप्रं कंचित्······अवलोकयन्तं मूर्त्तिमश्रुपूरिताभ्यां लोलनाभ्यां······निशम्य तयोः पदरवं तत्संमुखीभवन्तं······भाषमाणामिव च सम्बोध्य तौ किञ्चिच्चलदोष्ठपुटम् ।

बभूवतुः स्तब्धौ श्रोतुमिव तं मूकमूकौ······अवशाविव । बभूवतुः स्तब्धौ परंतु क्षणमात्रमेय ।······शुश्रुवतुः कतिपयान्······'भ्रष्टाचरण······प्रकुपित······प्रथित······देवाधिदेव'—सदृशान् शब्दान् ।······न शेकतुरवगन्तुमर्थं तेषाम् ।······न चक्रतुः प्रयत्नं अवजिगमिषया ।······दूरीचक्रतुस्तं क्षणमात्रानन्तरमेव भल्लदण्डप्रहारेण साधिक्षेपेण स्वमार्गात्, उपसस्रतुः मूर्तिम् ।······न प्रत्यक्षीचक्रतुः किमपि वैलक्षण्यं तस्यां······तन्निखातनयनावपि ।

'खण्डयत' 'इक्सिर्'—विदारयन् तां स्तब्धतां······ननाद सहसा तीक्ष्णः आदेषः द्वेषदुःसहः ।

'हुं'—प्रतिननाद अपरः स्वीकारात्मकः······सहर्षमंगीकुर्वन् तमादेशमकथितज्ञातोद्‌गमस्थानन् ।

'थाड्'—अनुननाद तदनुपदमेव सहसा······युगपत्पतितानेककुठाराघातशब्दः स्वसमशब्दमालिकानुसृतः । आरभत च······संकीर्णगर्भगृहभित्तिनिनाहिदतः······प्रोष्य कक्षान्तरेभ्यः······निर्गत्य मन्दिरात्······प्रसृत्य चतुर्दिक्······कथयितुं वार्तां मूर्तेः खण्डनस्य······विग्रहस्य देवदेवस्य सोमनाथस्य

सर्वेभ्यः ।

अथ अन्तमियाय तद्दुश्चेष्टितम् ।

सर्वमेव याति नूनं अन्तं······चेष्टितम् ।

न तु तस्य क्रोधान्ध्यम् ।······अवर्द्धत एव प्रत्युत सहस्रगुणितं, चकार च तं आदित एव निर्भयं······अकुतोभयम् ।

तदवस्थः······असकृत् स्मृत्वा तं तन्मारणप्रयत्नमज्ञातकर्तृकं उन्मत्त-प्रायः······सः······बभञ्ज तं विग्रहं सोमनाथस्य, दूषयामास पावित्र्यं तद्गर्भ-गृहस्य······प्रोक्ष्य सर्वतः तत् गोमेदमासपिण्डैः,······पानयामास तत् अधः विनाशय्य तदाधारस्तंबान्,······क्रमशः बहिरागच्छन् दूषयामास विनाशयामास बाह्यान् सर्वानपि मनोरमान् प्रकोष्ठान् तेनैव क्रमेण,······तेनापि असंतुष्टः अन्ते मंदिरात् बहिः निर्गतः, आज्ञापयामास स्वान् सैनिकान् धूलिधूसरितान् दूयमानकरान् श्रान्तश्रान्तान् परिवर्तयितुं तद्भव्यं मंदिरं प्रचण्डशिलाखण्डसमुच्चयमात्रे उलूकशृगालमूषकाऽऽवासमात्रोचिते ।

अवलोकयत एव तटस्थस्य कालपुरुषस्य······अथ तद्देवतायतनं,······स्वभव्यतया स्वविशालतया स्वोत्तुंगतया न केवले आर्यावर्ते······न केवले भारतवर्षे······अपितु समस्ते पौर्वात्ये जगतीतले यदानींतने विख्यातं,······अनादिकालान् असंख्यैः भारतीयैरार्यैः पूजितं, अनन्तेषु स्तोत्रेषु स्तुतं, अगणितेषु गीतेषु गीतं तद्देवतायतनं······पर्यवर्तत उत्तुंगे विषमपाषाण-शकलोच्चये दृश्यमानविविधप्रतिमाखण्डविद्रूपिते भीषणदर्शने ।

तर्पयामास चतं मूर्तिमन्तं भारतदुर्दैवविपाकम् ।

कृताट्टहासः सहसा अवलोक्य दुर्दशां तस्य रमणीयस्य वास्तुकला-विलासस्य स······अथ······प्रसन्न इव······अन्वमोदत यथेच्छं लुण्ठनं स्वसै-निकानां,······अवलोक्य तद्विनाशताण्डवं स्वस्वामिनः किंचित्संभ्रान्तानां, दृष्ट्वा तदपूर्वं वैभवं तथा विनाशितं मुषितमिवात्मानं मन्यमानानां श्रान्तानां ······नगरस्य तस्य······तद्दिनावसानपर्यन्तम् ।······

लब्ध्वा तदनुमोदनं तस्य सहसा प्रसन्नाः व्यपगतश्रमाः ते तस्य बर्बराः सैनिकाः तथा लुलुण्ठुः तथा लुलुण्ठुः तथा देहुः तत् अनाथं नगरं यत् प्रागेव तद्दिनावसानात् अभवत् तत् सदृशं शवस्य शृगाललुञ्चितस्य क्षतविक्षतस्य रक्तार्द्रस्य कस्यचिदनाथस्य ।

इत्थं भूमिसात्कृत्वा तद्विख्यातं देवनगरं तृप्तस्य दग्धप्रायकोपदहनस्य ततश्च गृहं स्वं चिरविप्रयुक्तं प्रतिनिविवर्तिषोः तस्य कर्णपथमुपजगाम वार्ता एकाऽज्ञातोद्गमस्थाना तद्बाणसंधानसाहसिकस्य नराधमस्य शंखधरद्वीपे पलायनं निलयनं च सूचयन्ती, प्रेरयामास च तमकस्मात् पुनः संधुक्षितकोपदहनं चलितुं ततोऽपि अग्रे····समुद्दिश्य तत् जलप्लावितं स्थानं भारतवर्षस्य औत्तरप्राच्यसीमाग्रवर्ति·····अपरेद्युः प्रातरेव।

निरुत्सुकं आसीत् तस्य बलं चलितुमग्रे,·····निरुत्सुकं·····श्रान्तं·····रणरणकदूयमानमानसं·····अज्ञातभयाशंकाकुलञ्च। व्यमज्ज तत् स्वां निरुत्सुकताम्। परंतु·····सभयमेव·····अस्फुटमेवः·····न दधर्ष प्रकटयितुं तां·····विस्पष्टैरक्षरैः·····किं पुनःप्रमाणयितुं तां समुल्लंघनप्रयत्नेन तदाज्ञायाः।

यथायथाऽऽरमन तद्गन्तुमग्रे·····गन्तुं औन्त्तरप्राच्यशीमाप्रदेशे निरंतरसागरजलोर्मिताडननिम्नोन्नते जलप्रायेऽपि दुरावाप्यपेयजले निरन्तसम्भवद्वात्याचक्रपीडिते कतिपयमात्त्स्विककुटजमात्रसनाये उत्तुंगसागरजलोर्मिप्रक्षिप्त-तीव्रातपमृत—जलजन्तुकलेवरदुर्गन्धदुःसहे कुत्रचित् सिकतिले कुत्रचित् पंकिले कुत्रचित्शुष्यल्लवणशुभ्रे·····तथा तथाऽभजताधिकाधिकमेव मौनं विस्मृतरणघोषं वेपमानम् अज्ञातभयाशंकया।

तस्य सेयमस्वस्तिभावना·····प्रतिक्षणं सान्द्रतरतां भजमाना·····बभूवोत्कटा अवलोकयतः अन्तिमे प्रहरे तृतीयस्य प्रवासदिवसस्यानतिदूरवर्तिनमस्तंगतदिनकरारक्ते पाश्वात्ये क्षितिजेऽचिरोदिनकृष्णमेघवृन्दमिव दृश्यमानं अदृश्यप्रायविशेषं, निर्जनमिव निश्वेष्टं, निस्तरंगसागरजलपरिवेष्टिनं द्वीपं·····शंखधरद्वीपं·····दिगन्तविख्यातयवनराजाधिराजामित्रनिलयत्वेन ख्यातिमाकस्मिकीं प्राप्तम्।

'अप्रतिद्वंद्विनमस्माकं नेतारं मध्याह्ने तथा पैशाचिक्य शक्त्या अभिभवितुं धृष्णुवतः निलयस्थानमेतत्·····नूनम्·····उदवसितं स्यात् अनन्तानां पैशाचिकीनां शक्तिनाम् इति परिकल्प्य वेषमानं तदवलोकयामास एव मूकमूकं आननं स्वनेतुः सर्वाग्रवर्तिनः कृष्णतुरगाधिरुढस्य सागरवातलहरीसमुद्धूयमानधवलप्रलम्बश्मश्रुपा शस्याऽऽकुंचितया दृष्ट्याऽविज्ञेयभवयाऽविचलितया तमेव भूशकलमवलोकयतः, आताम्रवर्णस्य क्षीणक्षीणस्य, लोहमयस्येव

पाषणमयस्येव निश्वालस्य ।

'अग्रेचलत' 'आगे कूच!'–विस्पष्टमादेशमाकर्ण्य च तस्य······अवशमिव ······मंत्रमुग्धमिव······अग्रे सागराम्मसि शनैः चालयामास स्वं आश्वम्······ आदौ जानुदघ्ने शनैः शनैः कटिप्रमाणे क्रमशश्च गभीरतरीभवति शेवाल-पिच्छिले कृमिले रोहितनलमीनशिशुकपाठिनगडकझषादिमत्स्याकुले क्वचित् कूर्परमात्रदघ्ने पाषाणखण्डविषमे अचिरादेव पुरुषाधिकगह्ने शनैः शनैः आश्वनासारन्ध्रस्पृशि सागराम्भसि प्रवसत् तत् यावत् साक्षात्कृत्य जलस्तरं क्रमशः उत्तानतरीभवन्तं बहुमन्यते स्वं भागधेवं······तावत् सहसा आजघान तत्······पिपीलिकावृन्दमिव अनुस्वराजं प्लवमानं······एकमकस्मादेव उत्थितं भीषणं मलिनीकृतदिक्चक्रवालं भीषणं······'सुंईईईई'–निनादभयं-करं वात्याचक्रम्, समुत्प्रेक्ष्य तत् पैशाचिकं ताण्डवं शक्तिविशेषाणामहि-तेन स्वसाहाय्यार्थमाहूतानां स्खलितधैर्यं तन्नूनं कटिदघ्नेऽपि समुच्छलदूर्मि-दुस्तरे जलधिजलेऽमंक्ष्यत्······यदि हि न तदध्यगमिष्यत् साहाय्यमनपेक्षितं कोलाहलेऽपि तस्मिन् वात्याचक्रजनिते सुश्राव्यात् भयंकरेऽपि तस्मिन् संकटेऽविचलितात् आदेशस्वरात्, अधिगततत्साहाय्यन्तु कथंचिद्धारयामा-साऽऽत्मानं,······उपससार च स्वं लक्ष्यं पिपीलिकागत्या,······प्राप चतत्–अन्ते प्रथमस्य नैशस्य प्रहरस्य,

प्राप्तमेव चानु बभूवाऽऽतंकं अनुभूतपूर्वसदृशं अवलोक्यात्मानंजलक्लि-न्नालातशतं शैन्यातिशयकम्प्यमानं तिष्ठन्तं तीरे एकस्य दिगन्तविस्तृतस्येव दृश्यमानस्य अञ्जननिभान्धकारमग्नस्यालक्ष्यविशेषस्य पुरुषाधिकप्रमाणा-संख्योपलदन्तुरभूतलस्य द्वीपस्य निर्जनस्य ।

'कीदृशं नामैतद्द्वीपं······निर्मनुष्यं······निर्जन्तुकं ?······मृतावासमिव ······मृतमिव ?······न कोऽपि धृष्यात्······न प्राणातंकितोऽपि अस्मन्नाय-करिपुः धृष्यात्······शरणीकर्तुं एतत्।······त्यजेत् एवात्रागतः एतत्······ अनामिकभयाक्रान्तः।······तत् किमिति अस्माकं स्वामी–' इत्येवमादिकं किमपि किमपि असंबद्धप्रायं चिन्तयदेव······दन्तवीणां वादयदेव······तत्······ चचाल······अकस्मात् श्रुतिपथमपतरितया नुदितं सकृदेव निःसृतया······समु-द्दिश्य मध्यबिंदुं (–अन्धंतमसि तस्मिन् सूचिभेद्ये कृते तस्यापरिज्ञेयं परंतु कृते तत्स्वामिनः सुनिश्चेयं–) तस्य द्वीपस्य ।

चलच्च शनैः शनैः......महत्या सावधानतया समुद्धृतभल्लं......तत्......प्रतिपदक्षपं संभावयदाकस्मिकं कूटमाक्रमणं परसैनिकानामसंख्यानामुपलनिलीनानां निरुध्य निःश्वासं तदागपनमेव प्रतिपालयतां......चिरादिव साक्षाच्चकाराऽऽत्मानं कुण्डलीकुर्वन्तमेकं निश्चेष्टं समुच्चयं गृहाणां कतिपयानां ......अतीते कल्पे निर्मितानामिव दृश्यमानानां......भव्यानां परंतु प्रलयकुपितसागरोर्मिताडितानामिव जीर्णशीर्णानां केषांचित् विनष्टद्वाराकपाटानां केषांचित् प्रबलझंझावातनिपातितभित्तिकानां विद्रूपाणामुलूकोदवसितानामिव भासमानानां पर्यन्तप्ररूढप्रचंडवृक्षराजिनिलीनानामिव दूरतः अलक्ष्याणां। ......साक्षाच्चकारात्मानं तिष्ठन्तं परिवृत्य तं।......अवलोकयामास, स्वं-नायकं पञ्चशदश्ववारमहितं तदन्तःप्रविशन्तं।......शुश्राव कतिपयक्षणानन्तरमेव सहसा तदन्तः निःसरन्तं प्रतिवादस्वरमिव भीतभीतमसंबद्धप्रायं केषांचित् विदन्तानां नराणां करुणकरुणं रुदनस्वरमिव काश्चांचित् वृद्धानां नारीणां दीनदीनमाक्रोशध्वनिमिव केषांचिद् बालकानां।......अवलोकयामासाचिरादेव समूहमेकं त्रयस्त्रिंशदनधिकसंख्यानां विदीर्णमहार्हवसनानां निस्तेजसामपि महाकुलीनानामिव भासमानानां, निःशस्त्राणां, तन्निवासिनां, तैः पञ्चाशदश्ववारैः बलाद्गृहेभ्यः आकृष्यमाणानां, बहिः कदध्वनि प्रक्षिप्यमाणानां, निर्दयं ताड्यमानानां, उच्चैराक्रोशतां, किंचिद्दूरमवस्थितं निर्विकारयामुखमुद्रया तां यंत्रणामवलोकयन्तं प्राणभिक्षां याचमानानां, असंबद्धप्रायं प्रलपतां, अन्ते च दीनस्वरमात्मानं सोमनाथपूजाधिकृतप्रमुखस्य कौटुंबिकं जनं स्वीकुर्वतां, स्वप्रमुखं च दूरादेवावलोक्य तत् स्वशरणस्थानं शनैः शनैराक्रम्यमाणं घोरे निशीथे एव,—विहाय तान् अशरणान्,—एकलमेवारुह्य उडुपं क्षुद्रं अदर्शनं गतं कथयताम्।

आकर्ण्य तत् कथनमनुपजातप्रत्ययः, 'हुँः!......अस्मान् तथा पैशाचिक्या शक्त्याऽभिभविष्णुः सः क्षुद्रः मूर्तिपूजकः स्यान्नूनं विलीनः अत्रैव कुत्रचित्......मूषक इव बिले भयमुद्रितनयनः......' इति मन्यमानः, आज्ञापयामास स्वसैनिकान् पारेदशसहस्रान् प्रसतुं सर्वस्मिन्नपि द्वीपे, तावत्या, कालकलया प्रस्फुटन्त्यां आरुण्यां प्रभायां सुलक्ष्यविशेषे, यत्कालं, मृगयितुं च तं पुरुषब्रुवं सूक्ष्मेक्षिकया।

तथा बभूव च क्रोधान्धः अन्ते द्वितीयस्य प्रहरस्य दिवसस्यानुपलभ्य तं

……आदित एव समुत्तेजितः, तत्रापि श्रान्तः, तत्रापि नैशजागरणत्रस्तः, तत्राऽपि क्षुधातुरः, तत्रापि अपेक्षाभंगकटुहृदयः ।……यथा न मनसि चकार क्षणमपि योग्यायोग्यविचारं, आदिदेश स्वसैनिकान् प्रज्वालयितुं तं गृहसमूहं अन्वजानाच्च तान् होतुं तस्मिन् अपौर्णमासे होलिकादहने यत् किमपि…… सह शरीरैः बंदीकृतानां तन्निवासिनां मृतप्रायाणां वृद्धानां कम्पमानानां भयविभ्रान्तेक्षणानाम् ।

पश्यत एव तस्य दूरे मूर्तिवन्निश्चलमवस्थितस्य……अथ प्रादुर्बभूव तत्-पुरतः……आदौ धूमबहुलः पश्चान्निर्धूमः सचटचटात्कारः समुत्पतत्स्फुलिंगः अवलीढाऽऽसमन्तिकपादपस्तोमः दग्धखगनिलयः……दहनः……तथाऽवर्द्धत च मुहूर्ताभ्यन्तरे एव यथा संत्रासेन धूमस्य गगनमध्यादधःभ्रष्टान् विषमाश्वाश्वान् लेढुं ईहमानः……तिरश्चकार इव तस्य क्रोधदहनम् । तृतीये प्रहरे च भस्मावशेषः प्रेरयामास तं सहसा व्यपगतक्रोधं सहसा निर्विण्णं सहसा तिरोहितसमुत्साहं सहसा श्रान्तं……सहसा विश्रामातुरं पारेवर्तिनि तटे मुख्यस्य भूप्रदेशस्य रिक्तहस्तमेव ।

इयान् नूनमासीत् तस्य सः निरुत्साहः सः निर्वेदः सः खेदः सः श्रमः यत् (–प्रकृत्या शतावधानोऽपि–) न स विवेद आत्मनः तान् सैनिकान् लुलुण्ठिषया सर्वत्र द्वीपे भ्रमतः अनधिगत्य किंचिदपि खिद्यतः अन्ते च बंदीकृत्य तत्रत्यान् सुरुपान् दारन् एव तस्यादर्शनं गतस्य पूजकप्रमुखस्य बालकांश्च कैशोर्यावस्थायां कृतपदार्पणान् आत्मना सह नयतः प्रतिनिवर्तनवेलायाम् ।

न च बभूव न्यूनः निवृत्तस्यापि तद्दिनावसाने मुख्यं भूखण्डं……तत्र च कानिचिद्दिनानि विश्रान्तस्य ।

अपि तु–समुदभावयत् तस्य निर्विण्णे खिन्ने भस्मावशेषे इवांगारेऽन्तःकरणे विलक्षणामननुभूतपूर्वां तेन स्वयमप्यनुत्प्रेक्षितामिच्छां–तत्रैव, तस्मिन् मूर्तिपूजकदेशप्रदेशे एव, स्वनवीनराजधानीसंस्थापनेच्छाम् ।……न्यक्कृत्य निरंतरसेवितौषधिप्रभावं प्रतिदिनं प्रबलतरीभवत् शीतोष्णाद्यतिरेकसहनाक्षमं तस्य तच्छारीरिकं दौर्बल्यं……प्रतिदिनं स्वपैतृकराजधानीनगरे तीक्ष्णतरीभवत् स्वसुतयोः तदुत्तराधिकारविषयकं नियतप्राणान्तकलहपर्यवसानं परस्परवैमनस्यं, प्रतिदिनं स्वपैतृकराज्यसीमासु उग्रतरीभवत् सेल्जूकाक्रमणसंकटं, प्रतिदिनं प्रगाढतरीभवत् तद्हृदयाकाशे राजकीयकोषागारोदर्कविषयकं

दुश्चिन्ताकालुष्यं, प्रतिदिनं निःसंदग्धतरीभवत् तदैहिकजीवनलीलावसान-सामीप्यसंवेदनं·····सर्वमपि नूनं समुदतेजयत् तां विचित्रां इच्छां तन्मनसि, अकथयत् तं वारं वारं निःशब्दं यन्निवसन् तत्रैव कल्पयित्वा स्वां साम्राज्य-नगरीं स लभेत·····न केवलं स्वस्य स्वाभाविकं शारीरिकं बलं, न केवलं अवसानं स्वकोषचिन्तायाः, अपि तु दीर्घमायुरपि प्रालोभयत् तं तदनुपद-मेव भव्यैः रमणीयैः तं प्रचण्डस्य भारतीयसाम्राज्यस्यैकाधिपत्रं सम्राजं चिन्तयद्भिः मनोरथैः समुज्वलवर्णैः, प्रैरयच्च तं·····अन्चे तस्य पक्षाधिकस्य तत्रविश्रमास्य·····अभिव्यक्तुं इच्छां तां रहसि पुरतः सभारत्नस्य····· अल्बरुन्याख्यस्य·····तत्सहचरस्य तद्दिग्विजयेतिहासलेखकस्य मानव-स्वभावनिरीक्षणचतुरस्य विवेकशीलस्य·····स्वैरमिव ।

आरभत च तदपरेद्युरेव प्रातः·····अपक्रष्टुं स्वमपारं, महत्तमे तस्मिन् भारताभियानेऽक्षतप्रायं बन्दीकृतैरसंख्यैः दासदासीजनैः परिबृंहितकलेवरं असंख्यलुण्ठितभारतीयधनवाहकोष्ट्रशकटसनाथं बलं तस्याः नगर्याः·····प्रच-लितुं च शनैः शनैः समुद्दिश्य स्वं पैतृकं राज्यं योजनसहस्त्रादूरस्थितमसंस्व-नैर्गिकबाधान्तरितं·····निशम्य स्वस्य सभारत्नस्य प्रत्युत्तरं कट्वपि समी-चीनं विपरीतमपि अप्रत्याख्येये परित्यक्तमनोरथः हताशः निर्विण्णः ।

इयान् प्रबल आसीत् तस्य निर्वेदः यत् न सः·····स्वभावतः तर्जना-सहनोऽपि·····ऐच्छत् प्रतिनिर्तितुं आगमन मार्गेणानुभूतचरेणापि निशम्य तस्यात्याचारान् लोकवार्त्तोपबृंहितान् प्रकुपितेन सांभरअनरेशेनावरुद्धं·····न परंतु दधर्षं कर्तुं तथा,·····अपि तु कापुरुषवत्····पाटच्चरवत्···परिवर्तया-मास स्वं प्रतिनिवर्तनमार्गं निभृतं,·····प्रत्यनिवर्तत चापरेणादृष्टचरेण सिंधुप्रदेशमध्ययायिना मूलस्थाननगरीस्पृशा ।

आप च-आदित एव निरुत्साहः·····महत् कष्टं तस्मिन्नपि·····आदौ परमये पश्चात् सिंधुसागरद्वीपीवकष्टबहुले दृष्टनष्टोत्पीडकजाटसैनिक-निरन्तरोपद्रवदुःसहे ।

शशाक च कथमपि·····बहोः कलादनन्तरं·····द्रष्टुं प्रदेशं हिमाच्छा-दितं चिरंतनाभावपीडितं दुःसहशीतवातदुःखदं स्वपैतृकराज्यस्य·····सह लुण्ठकलुण्ठितप्रायसर्वस्वेन शस्त्रमात्रद्वितीयेन श्रमातुरेण स्वेन बलेन·····

विना च स्वकीययाऽपारया स्वाभाविक्या तिरस्कृत्य बाधाः प्रचंडा अपि पुनः पुनरुद्भवंत्या तं पुनः पुनः उपोद्बलयन्त्या उत्तंभयन्त्या उत्साह-सम्पदा ।

न खलु एकोऽपि मध्यात् तस्यापारस्य बलस्य पारयामास आकलयितुं तस्य तद्दारिद्र्यं······ऋते तस्मात् तत्परिचारकात्······अल्तमशात् !



## चतुर्दशः परिच्छेदः

'एवं तर्हि······आदरणीयः······स्वनामधन्यः······अस्माकं परमोच्चः धर्मगुरुः······खलीफा अल् कादीर बिल्लाहः······मन्यते-तस्याज्ञां बहुमन्यमानैरस्माभि तथा विनाशितं तन्मन्दिरं सोमनाथस्य······तथाऽपमानितं संनहनं तस्य······खण्डितं आनीतं निखातं चात्र-भवतु निकृष्टतमम्लेच्छचरणदलितमिति !'

'अत एव तु सः······प्रत्यागतेष्वेवास्मासु तस्मादभियानात्······स्वयं प्राहिणोत् अस्मत्सेवायां स्वान् बकशुभ्रवसनान् बकधूर्तान् प्रतिनिधीन् अभिनंदयितुमस्मान् स्वैः वः परमेशस्य'······अप्रार्थितप्रदन्त्तैः······आशीर्वचनैः बहु मानयितुं च 'हबीबे इलाही' इत्यादिभिः महाडम्बरैः निःसारैरुपाधिभि!'

'नूनं इच्छति धूर्तानां शिरोमणिः वर्द्धयितुं स्वं प्रभावं······एवं स्थापयित्वा चतुर्दिक् अस्माकं तदाज्ञाकारित्वं'—सकुत्सस्मितं अथ एकदाऽचिन्तयत् यवनाधीश्वरः······महार्हपारसीकास्तरणाच्छादितायां चन्दनकाष्ठनिर्मितायां राजतपादायां पर्यंकिकायां सुखमासीनः, वातायनात् स्वप्रासादकक्षस्य लोकमानः अर्द्धमुद्रिताभ्यामारक्ताभ्यां लोचनाभ्यां शोभां सायंतनीं स्वराजधान्याः अधः आक्षितिजं प्रसृतायाः अस्तंगमिष्णुभानुभाभासितासंख्यप्रार्थनामन्दिरशिखरायाः, उद्गच्छन्नागरिककोलाहलव्याजेन तेन सह किंचिद्भाषमाणाया इव, आबाल्याद् दृष्टाया अपि प्रतिदृष्टिक्षेपं नवीनाया इव भासमानायाः, तत्प्रियतमायाः, नगर्याः······गजन्याः ।

'अनागतविधाता च······अभिलपति स्वं प्रभावं (—तदाभासं वा) अक्षुण्णं रक्षितुं अस्मदुपरान्तमपि !······अत एव तु सः तथाऽभिननंद सह अस्माभिः तनयावपि अस्माकं······स्वाशीर्वचनेन····बहुमूल्यपरिधानप्रदानेन च' ।

'अधिगच्छतु नाम वराकः अभिलषितं स्वं······' सावज्ञमिव अस्फुटगगदत् सः······सकृदास्वाद्य मदिरां मुद्रितनयनः ।

'का नामास्माकीना हानिस्तत्र ?'

'नहि मृगाधिपः......आकण्ठं तृप्तः......असूयते शृगालाय तदुच्छिष्टांशभोजिने !......(निर्निमेषया दृष्ट्या निरीक्षमाणः सायंतनसमीरलहरीदोलायितां प्रधानतमप्रार्थनामन्दिरशिखरविराजमानां हरित्पताकां) वयं खलु......तौरुष्किकपारसीकसाम्राज्यसंस्थापनार्थं कृतनिश्चयाः, तदर्थं अत्यावश्यकमर्थं कामयमानाः, श्रुत्वा तत् मूर्तिस्थानमतुलितेन वैभवेन मण्डितं, तत् लुण्ठितुमभ्ययाय......अध्यगच्छाम च कल्पनातीतं साफल्यम्......तदेव तृप्तेरस्माकं कारणम्......यत्तु सफला अभवाम आक्रमितुमान्तरतरान् भागान् हृत्प्रदेशस्य तस्य देशस्य, विजेतुं नवीनतरान् नराधिपान् तत्रत्यान् अहंमन्यान्......तदपि विनैव प्राक्चिन्तनं......विनैव महतीं हानिं स्वसैन्यस्य......(क्षणमेकं विचार्य......सस्मितं) अन्वभवाम नूनं कष्टं......गृहं स्वं प्रतिनिवर्तमानाः......शत्रूणां......विशेषतः जाटानां......विद्युच्चपलैररुंतुदैराक्रमणैः अहोरात्रं पीड्यमानाः......परंतु......तत् सर्वं......साकल्येन विचार्यमाणं......अकिंचित्कल्पमेव......कियन्तः द्वंद्वसहाः......कियन्तः कूटाक्रमणचतुराः आसन् ते जाटाः......निर्नेतृककल्पा अपि !......तीव्रं खलु ईषिम वयं विरन्तुं मार्गाक्रमणात् तस्मात् दैनिकात् कतिपयदिनपर्यन्तं, कल्पयितुं स्वसेनासंनिवेशं तस्मिन् सर्वथाऽस्मदननुकूलेऽपि प्रदेशे, प्रदर्शयितुं च तेभ्यः......मरुस्थलमूषकेभ्यः......नैपुण्यमास्माकीनं तथाविधेऽपि योधनप्रकारेः......(सनिर्वेदं) न खलु परंतु अभवाम समर्थाः पूरयितुमस्मदीयां तामिच्छां......लुण्ठितापारधनराशिनिनीषया अपारधनराशिसंरिरक्षिषया प्रतिक्षणं नुद्यमानाः......तया बद्धहस्तपादाः'।

'(साकाक्षं)......यदि नाम वयं भवेम समर्थाः भाविनि काले जेतुं......वशीकर्तुं......अन्तर्भावयितुं च तान् स्वसेनायां तदंगत्वेन......तर्हि–'।

'मालिके सल्तनत्'–सहसा बभज्ज तस्य तां विचारतंद्रां कस्यचित् भीतभीतस्येव सादरस्येव सानुकंपस्येव अनाहूतागतस्य संबोधनशब्दः।

'......आः !......कः खलु धृष्णोति एवं भंक्तुं रहः अस्माकं......अभियानात् सद्यः प्रत्यागतानां, श्रान्तानां ज्वरेण क्षीणक्षीणानां......?' इति क्रुद्धः यावद्व्यापारयति स्वे आरक्ते लोचने दिशि तस्य संबोधनशब्दस्य......तावद्ददर्श आबद्धकरयुगलं अवनतोत्तमांगं भूमितलविनिगडितलोचनं मिमं-

क्षुमिवापराधबोधेन धरण्यां स्वं प्रियं वृद्धतरं प्रधानामात्यं···अनतिदूर एव ।

'ओः!······अस्माकं वजीरे आजमः !–' उज्जगाद सहसा विलीन क्रोधः······'किं नु खलु समापतितं कार्यं अद्य······अस्यां वेलायां,······यत् प्रैरयत् भवन्तं द्रष्टुमस्मान् ?'······पप्रच्छ च सस्मितमुखमुद्रः······'बलवत्तमेन तेन नूनं भाव्यम् ।······अन्यथा भवान् नैवं उपस्थास्यत् भवत्तु रहः,···· साक्षात् भवान्······यः तस्मिन् प्रभाते स्वयं सावेशं स्पष्टीचकार पुरतः अस्माकं आवश्यकतां तस्य······आवश्यकता विश्रामस्य,······न केवलं स्पष्टीचकार,······अपि तु संपादयामास तत् अविलंबं स्वयमेव निषिध्य प्रवेशमात्रमस्मद्दिदृक्षोः भवदननुमितस्य ।······दृढं खलु विशश्वास भवान्····विश्राम एव केवलः लंभयिष्यति अस्मान् न केवलां मुक्तिं आस्माकींनात् क्षेत्रीयादिवासकृद्भाश्रमानात् अस्मात् रोगात्······क्षयात्,······अपि तु दीर्घं जीवितमपि ।'

'तत् कथं खलु उदसहत भवान् अद्य उल्लंघयितुं भवदीयामेव पथ्ययोजनां ?'–आह सः सस्मितम् ।

स तस्य हासः······स तस्य प्रहासः······पर्यणमत कतिपयक्षणानन्तरमेव आदौ विस्मये ततश्च क्रोधे निरतिशये······आकर्ण्य आगन्तुकात् तस्मात्, अनुत्सुकादिव कथयितुं अप्रियं तं वृत्तान्तं चिरायमाणात् ।

पुस्कोट चान्ते–'कथं······एवं तर्हि ते जाल्माः दास्याः पुत्राः बर्बरा जाटाः······मरुमूषकाः······गृहं निवर्तितुमुत्सुकोत्सुकानामस्माकं तद्दण्डधारणौदासीन्यं अस्मत्कातर्यसंसूचकत्वेन मन्यमानाः······क्षतिमस्मदीयां तत्कृतां सातिशयोक्तिं वर्णयन्तः······क्षुद्रेण अहंभावेनाऽऽध्मातशिरसः······उत्सहन्ते ······न केवलं मन्तुमात्मानं वीरवरत्वेन·····अपि तु धर्षयन्ते द्रष्टुं स्वप्नानि विनशनस्य अस्माकं·····अस्माकं·····साम्राज्यस्य······पैतृकस्य राज्यस्यास्य !–' इति क्रोधोद्गारे । प्रोत्साहयामास च तं क्रोधताम्रं ज्वलन्नयनं भावावेशेन कम्पमानं उद्घोषयितुं वज्रकठोरं स्वं निश्चयं–'तत् अनुभवन्तु मूढाः फलं स्वस्यौद्धत्यस्य, पश्यन्तु मुर्खाः फलं स्वस्य धर्षणस्य, अवलोकयन्तु क्षुद्राः परिणामं स्वस्य साहसस्य'–इत्याकारके ।

अस्फुटप्रायेण घर्घरेण स्वरेणैवं स्वं निश्चयमुद्घोषयतस्तस्य सा आदित एव विद्रूपा व्रणांकिताऽऽताम्रवर्णा शीतोष्णादिद्वंद्वाघातजर्जरा प्रश्रवल्लालार-

सक्लिन्नधवलश्मश्रुपाशा बलिता कृष्णवलयांकितलोचना मुखमुद्रा एतावती बभूव विद्रूपा……यदवलोक्य तां……तं आजन्मनः जानन्, तस्मै पितृव्यवत् स्निह्यन्, तस्य हितं सर्वात्मना इच्छन्, तमद्वितीययोद्धृत्वेन बहुमानयन्, तेन संस्थापितस्य साम्राज्यस्य हितं सर्वथा इच्छन्, तस्य मनोरथं साकारयितुं यथाशक्ति प्रयत्नं कुर्वन्, तमात्मघातिकाया महत्वाकांक्षाया अनुसरणात् परावर्तयितुमभिलषन्,……स तस्य प्रधानामात्योऽपि अभ्यलषत् सहसाऽपसतुं सामीप्यात् तस्य……उन्मादसमाक्रांतस्येवासह्यसांनिध्यस्य ।

का वार्ता तर्हि प्रधानामात्यानुपदमेव कक्षान्तः प्रविष्टस्य, आपूर्णमद्यभाण्डव्यापृतहस्तस्य, मूर्तिमदवस्थाय किंचित् पृष्टभागे स्वामिनः मद्यचषकं ……स्तोकमपि रिक्तं मद्यचषकं……मद्येनासकृत् आपूरयन्तमिवात्मानं प्रदर्शयतः, निर्विकारमुखयुद्रस्य, मूकबधिरत्वेन सर्वविदितत्वात् अमात्यप्रमुखसदृशेनापि मंत्रगोपेन अनाक्षिप्तसांनिध्यस्य, तस्य परिचारकस्य……अल्तमशस्य !

अभिलाषां तां……पूरयितुं शशाक प्रधानामात्यः……आपृच्छ्य एव स्वामिनः अनुज्ञां, अधिगत्य एव च तां हस्तेंगितेन तस्य……सुदूरचंद्ररेखाविनिगडितनयनस्य !

न तु सः परिचारकः ।

स तु न केवलं तथैव तस्थौ तत्र अवश इव,……प्रत्युत–उपससार तमधिकतरमेव……आतुर इव श्रोतुं तस्य क्रोधोद्गारान् बलादिवान्तस्तलान्निःसरतः……व्याकुल इव पठितुं तस्य क्षुब्धा भावनास्तस्याननफलके……प्रतिक्षणं धनतरीभवति तमसि दुर्लक्ष्यतामधिकाधिकमेव प्राप्नुवति ।

बभूव च सफलमनोरथः कतिपयक्षणानन्तरमेव……आकर्णयन्, यवनाधीशं पूर्ववदुपविष्टं पूर्ववत् मद्यं पिबन्तं अस्फुटतरेण स्वरेण गदन्तं–'श्रुतं त्वया, अल्तमश !, इच्छन्ति ते मरुमूषकाः विनाशयितुमेतत् साम्राज्यं…… अवलोकयत एव मम……मम महमूदस्य एतन्निर्मातुः ?……निर्माताऽपि तेषां न शक्ष्यति विनाशयितुमेतत् ।……न तेषां सः प्रमुखः सेल्जूकानामपि,' ……क्षणमात्रं विश्रम्य पुनरपि भणन्तं कटोरतरेण स्वरेण–'वयं खलु…… सद्य एव……अदत्वैव तेभ्यः अवसरं अधिकतरं द्रष्टुं दिवास्वप्नान्यपि तादृशानि……तथाऽऽक्रमिष्यामस्तत्प्रदेशान्……तथा हनिष्यामस्तान्……

तथा धक्ष्यामस्तदावासान्,……यथा प्राप्ता ख्यातिं लोककथासु महमूदकोण-ताण्डवलीलानिदर्शनत्वेन ते……निवारयिष्यन्ति उद्दण्डतमानपि प्रजाजनान् अस्माकं साम्राज्यस्य दर्शनात् तथाविधानां दिवास्वप्नानां,'……सहसा मन्द्र-तरीभूतेन स्वरेण जनान्तिकमिव गदन्तं—'हतभागधेयान् तान् दण्डयन्तः वयं ……उपयोक्ष्यामः तथाविधं शस्त्रं,……तथाविधमग्न्यस्त्रं……अप्रयुक्तपूर्वं…… यथा स्मृतमपि तत् कंपयिष्यति नूनं जगतीतलम् ।'

निनाय च तं उक्ता एवं सहसा मूकीभूतं……अनवरतं मद्यं आसेवमानं ……अन्ते तृतीयस्य नैशस्य प्रहरस्य……तच्छय्यासमीपं……अतृप्तजिज्ञास इव, उद्विजमान इव, तर्कवितर्कव्याकुल इव ।

यवनराजस्य स निश्चयः लेशतोऽपि न न्यूनीबभूवापरेद्युः, अपि तु बभूव द्विगुणित इव……आ निशान्तं तं पीडयद्भिः विभिन्नैः दुःस्वप्नैः संधुक्षित इव ।

अत एव न स मनसि चकार लेशतोऽपि……प्रातरेव तस्य सेवायां यथा-पूर्वं उपस्थितस्य, वयोनुभववृद्धस्य, समवलोक्य तस्य ज्वरातिरेकसंतप्तामि-वावस्थां आशंकितस्य, अनुमाय तस्य समुत्तेजनां कृत्वा च समुचितौषधि-योजनां तं विश्रामार्थमसकृदभ्यर्थयतः राजवैद्यस्य परामर्शं……पूर्वाह्ण एव विशिष्टदूतमुखैराहूतानां, अविलंबमेव तत्सेवायां उपस्थितानां, दृष्ट्वा, तस्यावस्थां आन्तरिककलहस्फोटाशंकाग्रस्तानां, साक्षात्कृत्य तां निर्मूलां किंचित् समाश्वस्तानामपि आकर्ण्य तस्यागामिभारतीयाभियानघोषणां चकि-तानां, स्वयं खिन्नानां,……'अपि नाम सद्यः भारतीयाभियानादेव प्रत्यागताः पारिवारिकजनसामीप्यसुखं उपभोक्तुं प्रवृत्ताः अस्माकं सैनिकाः उत्सहिष्यन्ते-प्रचलितुं भारतीये नवीने अभियाने……तस्मिन्नपि केवलया दण्डधारणेच्छयांगी-क्रियमाणे'—इति क्षणमात्रमाशंकितानां'……'उत्सहिष्यन्ते नूनं……समुत्तेजिताः निशम्य समाचारं मूर्तिपूजकानां तेषां यवनसाम्राज्यभंजनस्वप्नं पश्यताम्'—इत्यपरस्मिन्नेव क्षणे विलीनाशंकानां,……'अपि नाम समर्थो भविष्यति अयं नः वृद्धः रुग्णः सम्राट् सोढुं श्रमं संकल्पितस्यैतस्य कष्टबहुलस्याभियानस्य ? ……इति दुराशंकाव्याकुलानां,……'शक्ष्यति किं युवराजः मसूदः कर्तुं नेतृत्वमस्माकमभियानेऽस्मिन् ?……शक्ष्यत्येवः……महान् खलु हि योद्धा सः……हं……किंचिदविमृश्यकारी अपि……किं तर्हि……? परंतु—अनुमन्येत

किमयं नः स्वामी प्रस्तावमस्माकं तथाविधम् ?……उत मन्येत तमस्माकं मसूदपक्षपातित्वसंसूचकम् ?……निःसंशयं मन्येत तथा……सदाशयेनोपन्यस्तमपि……न खलु (–न जानीमः किमिति–) अयं विश्वसति स्वस्य पुत्रस्य एताविधोत्तरदायित्ववहनक्षमतायाम्'……इति सुनिश्चित्य जोषमास्थितानां, केवलं स्वस्वामिनः मुखमेवोदग्रमवलोकयतां……सेनादलाध्यक्षाणां अमात्यानाञ्च मौनम् ।

का वार्त्ता तर्हि-दावानलवेगेन तद्राजधान्यां, तदनुनिखिले तत्पैतृके राज्ये, तदनु तत्साम्राज्ये अथ च तदानींतने प्रगते विश्चे प्रसृतस्य नवीनतमभारतीयाभियानं सातिशयोक्ति वर्णयतः समाचारस्य ?……आकर्ण्य तं जनसामान्यजीवने समुत्थितस्य विस्मयस्य क्षोभस्य वा ?

अपितु–अधिष्ठित इव केनचित् दुष्टेन प्रेतात्मना व्यापारयामास (–न विद्मः कथं–) सामर्थ्यमभूतपूर्वसदृशमापन्नमात्मानं प्रतिक्षणं संनह्ने एव स्वसैन्यस्य……विस्मृत्य प्राक्तनं संकल्पं जितसाम्राज्यप्रशासनकर्मणि अधिकतरसमययापनस्य…अविगणय्य परामर्शं वैद्यवृन्दस्य गंभीरमुखमुद्रस्य, ……समुपेक्ष्य च सेल्जुकसंकटं निकटस्थम् ।

अथवा–अधिष्ठित एवासीत् सः दुष्टतमेन प्रेतात्मना ।

कोहि भवितुमर्हति दुष्टतमः प्रेतात्मा……ऋते प्रतिशुशुत्सायाः ?

अथवा प्रकृतमनुसरामः :

जुगोप च सर्वात्मना रहस्यमात्मनः नवीनतमशस्त्रविषयम् जनसामान्यात्,……अलतमशादपि प्राणपणेन (–न विद्मः केन प्रयोजनेन ?–) ज्ञातुं तत् अहर्निशं प्रच्छन्नं प्रयतमानात् ।

तन्निश्चयाकृष्टमिव तदावेशाविष्टमिव सैन्यं तस्य……अथ…… कतिपयमासाभ्यन्तरे एव बभूव संनद्धमभियानाय नवीनतमाय,……बभूव संनद्धं……न तावत् लुलुण्ठितेषानुप्राणितं यावत् प्रतिशुशुत्साप्रेरितं,…… प्रातिष्ठत एकस्मिन् घनाच्छन्न प्रभाते भारतवर्षं समुद्दिश्य,……अनवरतं आक्रमच्च यवनसाम्राज्यान्तर्गतं प्रदेशं, स्वीकुर्वच्च अभिनंदनानि स्वबांधवानां बहुमानव्यंजकानि बहुमूल्यानि उपायनानि माण्डलिकराजानां मार्गपतितानां ……प्राप मासाभ्यन्तरे एव स्वनेतुः साम्राज्यस्य भारतीयस्य भागस्य प्रधानं स्थानं मूलस्थानम् ।

तत्र च बभूव विस्मितमवलोक्य असंख्याः क्षुद्रनौकाततीः तदागमनमेव प्रतिपालयतीः,······बह्वमन्यत दूरदर्शित्वमनागतविधातृत्वं स्वनेतुस्ताः स्वप्रान्ताधिपमाध्यमेन निर्मापयितुः······स्मारं स्मारं जलबहुलत्वं तन्मूलकं च दुराक्रमणीयत्वं च शत्रुप्रदेशस्याचिर्क्रिसितस्य चिंतितम् ।

ततः प्रस्थितः, परिलक्ष्यात्मानं शत्रुप्रदेशं समुपसर्पन्तं सावधानः, तस्य नेता······अथ······आरभत नेतुं तत् मन्दतरीभूतेनापि अविच्छिन्नेन वेगेन···· व्यापारयन् स्वचारचक्षूंषि सर्वतः······आकर्णयन् क्षुद्रमपि समाचारं स्वस्पर्श-कर्णैः सुदूरतः ।

तथाऽऽकर्णयतः शत्रूदन्तं मनस्तस्य समाचकर्ष एक उदन्तः······वर्णयन् कथं निशम्य तस्य सद्यः गृहप्रदेशं स्वं प्रतिनिवृत्तस्य पुनःप्रस्थानवार्त्ता चकितं अप्राप्य स्वबलसंनह्नावसरं लुण्ठितमिवात्मानं मन्यमानं, अवलोक्य प्रतिदिनं मूलस्थाने संनह्यमानं नौकाबलमातंकितं तद् रिपुबलं कांदिशीकमेव नूनम-भविष्यत्······यदि तन्मध्ये न प्रादुरभविष्यत् एकः······अभिनिविष्ट इव स्वप्नेन यवनसाम्राज्यविनाशस्य, आविष्ट इवाभिनिवेशेन येन केनापि सूक्तासूक्तेन उपायेन तत् साम्राज्यं विशिष्य विनाशयितुं प्रेरयता······कोऽपि ······अज्ञातनामधेयः अविदितपूर्ववृत्तांतः वृद्धकल्पः, न च प्रैरयिष्यत् तत् रक्षितुं स्वं पौरुषं पणीकृत्य प्राणानपि ।

असकृत् खलु स प्रायतत ज्ञातुं विशेषान् तस्य पुरुषस्याधिकान् न परंतु अलभत साफल्यं स्वेषु प्रयत्नेषु महत् । विदांचकार एतदेव यत् स आसीत् उन्नतः······कृशः······अथवा कष्टैः दैहिकैः संततैः कार्श्यं लम्भितः,······परंतु बलवान्······शीतोष्णादिद्वंद्वसहनक्षमः······गौरवर्णः·····अथवा मूलतः गांधार इव गौरवर्णोऽपि अनवरतैः प्रवासैः कष्टबहुलैः ताम्रवर्णतां प्रापितः······ जन्मसिद्धेनाप्रत्याख्येन राजकुलीनोचितेन गौरवेणोपेतः······तथा सत्यपि साहजिक्या सरलतया स्वव्यवहारस्य पांसुलपादानामपि नितांतमपरि-चितानामपि भारतीयानां मनसि अनायासं विश्रंभोत्पादने क्षमः······एकं खलु विशेषं तदीयं स आकर्णयामास सर्वेष्वपि चारवृत्तान्तेषु समानरूपेण विशेषं तन्नयनविषयकम्······सर्वेऽपि ते······वर्णयामासुः तन्नयने आकुंचित-घनभ्रूलतान्तर्हितप्राये·······तीक्ष्णे·······अन्तर्ज्वलद्भावनाक्षोभदन्दह्यमाने अपि सकारुण्ये·····उच्छलद्उत्साहातिशयसमुज्वले अपि एकान्ते नैराश्यति-

मिरेण घनतमेनाभिभूयमाने इव दृश्यमाने······प्रवृत्तमात्रायां तद्वैयक्तिक-जीवनविषयिण्यां चर्चायां जवनिकायामिव तिरोभावं भजमाने······अथ च आरब्धकल्पायां परचक्रसंबंधिन्यां तस्यां सहसा सहस्रगुणितेनेव प्रकाशेन ······उन्मत्तप्रायेण······पराभिभावकेन प्रकाशेन······चकासमाने।

बहु खलु स प्रायतत एकान्ते द्रष्टुं पुरुषविशेषं एतद्विधं स्वकल्पना-चक्षुषा, न परंतु अलभत साफल्यं स्वप्रयेत्नेषु स्तोकमपि,······असकृत् खलु स अवलोकयामास व्यतीतानि त्रिशद्वर्षाणि स्वजीवनस्य तेषु तेषु भारती-याभियानेषु तेन आकैशोर्याद्व्यतीतानि, न परंतु शशाक स्मतुं तादृशं पुरुषविशेषं तत् प्रत्यर्थीभूतम्,······वारं वारं खलु स पप्रच्छ तान् तान् स्पशान् (—अर्थात् प्रसंगवशादिव, न खलु स निसर्गचतुरः कदापि इयेष प्रकटीकर्तुं आत्मानं······सम्राजं······तद्विधागन्तुकमात्रचिन्ताव्यापृत-चित्तम् !—) कान्देशिकत्वं तस्य पुरुषस्याधिकृत्य, परंतुनिष्फलमेव, प्रायः सर्वे एव हि ते वर्णयामासुः विविधभारतीयभाषिणं सर्वसाधारणवेषधारिणं तं अनिर्धारणीयं, तत्वेन, तस्य साधारणभारतीयपुरुषदुर्लभा उन्नतिः, दीर्घा सरला नासिका, विशालः भालप्रदेशस्तु स्फुटं व्यानक् तस्यार्यत्वं, यवन-मात्रद्वेषः सनातनधर्मानुयायित्वं, सद्व्यवहारशीलत्वं च महाकुलीनत्वं—तन्मतानुसारेण।

'कथं नु धूमकेतुरिवाकस्मात् अकस्मात् आविर्भूतः मध्ये तेषां,······'अज्ञातकुलशीलोऽपि सः······शक्नोति प्रभावयितुं (—संमोहयितुमिति तु वक्तुं युक्ततरम्—) तान् कूपमण्डूकवृत्तीन् जाटान् एतावत् ?'—इति तु साक्षात् परंपरया वा पृष्टास्तेन······ते ऐकमत्येन अनिर्दिशन् तस्य संदेहा-तीतां देशभक्तिमेव तत्कारणत्वेन।

'इयत् प्रभावशालि तस्य······यत्र कुत्रापि जनसमवायमुद्बोधयतः······उद्बोधनं यत् आकर्णयन्तस्तत् (—अभयमस्तु दासानुदासानां—) वयमपि ······अभूम क्षणमात्रं तद्भावभाविताः' अवनमय्य मुखं स्वमधिकमेव उचुस्ते।

एवमवचिन्वन् कणशो, विशेषान् तत्पुरुषविशेषसंबद्धान् स यवनाधीशः आरभत शनैः शनैः मन्तुं तं······अपरिचितमपि परिचितमिव, अदृष्टपूर्व-मपि दृष्टपूर्वमिव, द्वेष्णमपि आदरणीयमिव,······सतस्य आदरः······अजा-

नत एव स्वयं तस्य······आरभत वर्धितुं आकर्ण्य किम्वदन्तीः (–स्पशमाध्यमेन एवार्थात् तत्कर्णयोः समापततीः–) तत्संबंधिनीः······तस्य उदीच्यपाश्चिमात्ये सुदूरे भारतभागे विख्यातचरे संततयवनाक्रमणप्रतिरोधप्रयत्नेषु नामशेषीभूते कस्मिंश्चिद्राजकुले समुद्भवं, विनष्टेऽपि स्वे कुलेऽक्षीणस्वदेशानुरागस्य तस्य तेषु तेषु यवनाक्रमणप्रतिरोधप्रयत्नेषु सहभागित्वं, अन्ते च हुत्वा स्वं सर्वस्वं जीवितं स्वातंत्र्ययुद्धहुतभुजि असफलस्यापि अन्यूनीभूतप्रतिरुरुत्सोः वार्धकमुपेतस्यापि उत्साहसंपदा यूनः अपि न्यक्कुर्वाणस्य तस्य सोमनाथमन्दिरखण्डनप्रकुपितस्य पणीकृत्यापि प्राणान् स्वान् दण्डयितुमपराधिनं जाटदेशे आगमनं सातिशयोक्ति वर्णयतीः ।

एवं चिन्तयन्नपि सततं तस्य प्रत्यर्थिविशेषस्य विषये······न स क्षणमात्रमपि अपरराध स्वसैन्यसंचालनात् ।

अपरराध परंतु निरीक्षणात् मुखाकृतेः स्वपरिचारकस्य अल्तमशस्य···यथापूर्वं तमहर्निशं परिचरतोऽपि- यथापूर्वं गुप्तचरवृत्तान्तान् आकर्णयतस्तस्य संनिधौ निर्विकारभावेन उपतिष्ठतोऽपि, विचित्रयेव दृष्ट्या तं······विशेषतो विचारमग्नं······अवलोकयतः, क्षामक्षामस्य ।

यथा यथा······परंतु······आरभत सः अनुभवितुमात्मानं प्रविष्टं आभ्यन्तरे भागे शत्रुप्रदेशस्य, उत्प्रेक्षितुं तस्याक्रमणानि यस्मिन् कस्मिन्नपि, कल्पयितुं आत्मनैव प्रतिकारविधाः तत्तत्परिस्थित्यनुरूपाः । व्याख्यातुं च तां स्वसेनादलाध्यक्षाणां समज्यायाः उपस्थितौ······तथा तथा विसस्मार सः तं गूढं पुरुषविशेषमपि,······बभूव च व्यासक्तचित्तः नवनवरणकंदनकल्पनासु ।

प्रेरितश्च तया व्यासक्त्या ससार अग्रे······आभ्यन्तरतरे भागे सोत्साहम् ।······परन्तु······अग्रे सृतोऽपि पर्याप्तं तस्मिन् लवणोदबहुले क्षुद्रद्वीपसमुच्चयकल्पे प्रदेशे यदा नानुबभूव एकमपि आक्रमणं द्वेषणस्य, अवलोकयामास चात्मानं जलपक्षिणामेव दृष्ट्वा तानागच्छतः क्षणमेकं विस्मयमानानां क्षणमात्रानन्तरमुच्चैः कर्णकर्कशं विरुत्य उड्डयमानानां सांमुख्यं निरन्तरं भजन्तं······तदा······एकाऽननुभूतचरा भीतिरेवारभत ग्रसितुं तस्य तां व्यासक्तिं······तस्य तां रणकंदनकल्पनाभिरुचिं······पीडयितुं च तं दुश्चिन्तया घोरतमेष्वपि निराशाक्षणेषु······काश्मीराभियानक्षणेष्वपि निकृष्टेषु······अचिन्तितया एकया······'अपि नाम एते नरश्शृगालाः······जाटाः

······वैलक्षण्यमेव स्वप्रदेशस्यास्मत्पराभूतये प्रयुंजानाः······ईहन्ते समाकर्षितुमस्मान् आभ्यन्तरतमे भागे तस्य एवमेव······दग्धुं च नः विच्छिन्नसंबंधान् अन्ते स्वेन स्वेन जाठरेणाग्निना······विच्छिन्नास्माकं खाद्यपेयसामग्रीवाहिकाः नौकानाडिः विद्युच्चपालैराक्रमणैः ?······आम् !······प्रयुज्यास्मन्नाशार्थं रणनीतिं······अस्माभिरेव बहोः, कालात् प्राक्······तस्मिन् हैमवते रणस्थले तस्य वृद्धस्य जयपालस्य नाशार्थं प्रयुक्ताम्······इत्याकारकया ।

'अपि नाम······परिस्थितावस्यां सर्वथानपेक्षितोपनतायां······प्रतिनिवर्तनमेवास्माकमितः श्रेयस्करं स्यात् ?······परंतु······परंतु······परित्यज्यांगीकृतं कार्यं एवं प्रतिनिवृत्ता वयं······न विद्मः······कदा नु भवेम समर्थाः पुनराक्रमितुमिमं शत्रुप्रदेशम् ?······कथं च शक्नुवाम प्रतिरोद्धुं वाचालान् इमान् जलमूषकान् जाटान् आहोपुरुषिकया वर्णनात् स्वरणनीतेः,···अवलोकनाच्च स्पष्टतरमेव दिवास्वप्नानामस्मत्साम्राज्यखण्डनविषयकाणाम् ?'–इत्येवंप्रकारकं सविषादं चिन्तयत एव तस्यैकां क्षुद्रां तरित्रीं अधिरुह्य स्वं बलं नयतः दाक्षिणात्यायां दिशि, यवनाधीशस्य······ज्वरजराजर्जरितकलेवरस्य क्षामतरस्य······पपात दृष्टिः अकस्मात्······एकस्मिन् अपराह्णे घनमेघपटलमेदुरितदिक्चक्रवाले प्रबलवाते······उपरि एकस्यानतिदूरस्यापि अन्धकारवशाद्विदूरस्येव भासमानस्य पुरुषाधिकप्रमाण-निरन्तरतुषाराघातचिक्कण–उपलविषमस्य योजनार्द्धविस्तृतस्य, संततोच्छलत्सागरोर्मिफेनिलदन्तुरिततीरप्रदेशस्य निर्वृक्षप्रायप्रान्तस्य द्वीपस्य क्षुद्रद्वीपान्तरमालिकापरिवृतस्य ।

अवलोकयन् तत् वृद्धाभ्यामपि तीक्ष्णाभ्यां अन्यमनस्काभ्यापपि ऐकाग्र्यमसाधारणं सहसोपगताभ्यां नयनाभ्यां,······क्षणमेकं स खल्वमन्यत तत् सान्द्रं अभ्रपटलमेव गगनतलात् सागरतले जलभरणेच्छयाऽवतीर्णम् ।······अपाकुर्वंश्च तां मतिं कविभ्रांतमस्तिष्कमात्रोचितामिति सकुत्सस्मितं,······जग्राह तद्द्वीपं अन्यतमं मध्यमपरिमाणकमिति याथार्थ्येन ।

गृह्णन्नेव तत् तथा······सस्मार सहसा द्वीपान्तरं एकं तत्सदृशं तेनैकदा-आम्, सोमनाथाभियानस्यान्तिते चरणे–दृष्टम्,······आक्रामितं च ।

स्मृतिश्च सा······सहसा······(स्यान्नाम विधिविधानवशात्) प्रेरयामास तमवधारयितुं तत् तस्यादृश्यप्रायस्य द्वेषणस्य दुरुहसंकल्पस्य प्रधान-

सेनाकार्यालयत्वेन ।

प्रेरितश्च तया तथा स निश्चिकाय क्षणमात्रानन्तरं आक्रमितुं तत् अविलंबमेव ।

–(यदि हि सः प्रकृतिस्थः अभविष्यत्⋯तर्हि न स एवं निरचेष्यत।⋯ आसीत् हि दिनान्तः प्राप्तकल्पः⋯⋯,आसारः निश्चितप्रायः⋯⋯, प्रदेशश्च नितान्तमपरिचितः⋯⋯निःसंदेहं प्रतिकूलः ।⋯⋯परंतु–तत्प्रकृतिविरुद्धा (–स्यान्नाम जराजनिता अथवा प्रदीर्घप्रतीक्षाप्रोद्भूता अथवाऽस्वास्थ्यसंपादिता–) आतुरता प्रेरयामास तं कर्तुं तथा ।)–

आज्ञापयामास च निश्चयकठोरेण स्वरेण स्वं सैन्यं समुपसर्तुं दिशि तस्य निःशब्दं⋯⋯परिधायाऽऽवरणं प्रतिक्षणं निबिडतरीभवतः सन्तमसः ।

आकर्ण्य तामनपेक्षितामाज्ञां समारुह्यास्फुटप्रायं स्वरं आतदन्तं प्रसृतां किंचिच्चकितमपि⋯⋯अवलोक्याऽऽत्मानं चिरपरिचिततुरगविहीनमपरिचितनौकारूढं तथा आज्ञप्तं किंचिदातंकितमपि⋯⋯विश्वस्य आत्मनः नेतरि यत्र कुत्रापि गन्तुं संनद्धं⋯⋯तत्⋯⋯एकजीवमिव⋯⋯अथाऽऽरभत उपसर्तुं तत् तावत्या कालकलयाऽदृश्यप्रायतां गतं, संततप्रस्फुटत्सागरोर्मिशब्दैः कर्तुमिव स्वागतं स्वोपकर्तॄणामुच्चैः विरुवतां शृगालादीनां निशाचराणां चतुष्पदानां स्वरैश्च संसूच्यमानं द्वीपम्⋯⋯ऐकमत्येन ।

विभाव्य तन्मनोगतं घोरं भयस्तब्ध इव विरराम तदा⋯⋯गमनात् सदागतिरपि नभस्वान्, अभजत च स्थिरभावं स्वभावचंचलोऽपि उदन्वान् ।

निस्तरंगस्य दर्पणतलस्येवाऽऽदिगन्तं प्रसृतस्य सागरतलस्योपरि समुपसर्पादिव तत्सैन्यं⋯⋯अथ⋯⋯उपागच्छत् तस्य द्वीपस्य तीरं कतिपयक्षणानन्तरं,⋯⋯अन्वभवत् सहसा वृष्टिं नाराचानां⋯⋯गगनतलादिवाधःपततां, दिङ्मण्डलादिव समापतताां, भूगर्भादिव उत्पततां⋯⋯अरुन्तुदानां,⋯⋯ अभवच्चातंकितं समुत्प्रेक्ष्य आत्मानं वेध्यमानं पिशाचैः ।

परन्तु⋯⋯क्षणमात्रमेव ।

तदनन्तरमेव हि आपपात तत् कर्णपथे तीव्रः रणघोषः तन्नेतुः⋯⋯ 'दीन !⋯⋯दीन !'–इत्याकारकः, आपूरयामास च तत् सहसा साहसेन ।

'दीन !⋯⋯दीन !'–व्यानञ्ज तत् स्वमावेशमसकृत् उद्गतेन रणघोषेण ।

जयतु सोमनाथः !'—समुद्बभूव सहसा तमुपमृद्नन्निवावेशेन द्विगुणितेन घर्घरस्वरः अन्यः रणघोषः ।

समाकर्ण्य तं किंचिच्चलितोऽपि……संतुष्ठ इव प्रवृद्धोत्साहः नेता तस्य व्यापारयामास स्वे लोचने सर्वतः,……अवलोकयामास (—अथवा तर्कयामास इत्येव उचितं वक्तुं, अवलोकनं हि तस्मिन् संतमसि समीपस्थस्यापि वस्तुनः आसीत् अशक्यप्रायमेव—) आत्मानं ससैन्यं परिव्रियमाणं असंख्यैः समुद्रादिवोत्थितैः सह अन्धकारधाराभिः गगनतलादिव निपतितैः मंत्रबलादिवाविर्भूतैः द्विपेभ्य इवागणितेभ्यः पर्यंतवर्तिभ्यः निःसृतैः क्षुद्रतरनौकासमारुढैः कैश्चिद्धनुर्धरैः कैचिचत् सकृपाणैः सर्वैरपि लक्ष्यीकृत्य तमेव मध्यवर्तिनं वेगेन तीव्रेण समुपसर्पद्भिः जाटैः ।

अवलोक्य तान्—'अनेनैव भाव्यं प्रधानस्थानेन प्रत्यर्थिनो धूर्तस्य । संरक्षणेच्छया हि अस्यैव परित्यक्तस्वपूर्वकल्पितरणव्यूहा एते……एवं प्रदर्शित स्वोपस्थितयः……समुपसर्पन्ति कृतनिश्चया इवावरोद्धुमस्मान् आक्रमणात् अस्य द्वीपस्य'—इति संजातप्रत्ययश्चादिदेश तारेण स्वरेण स्वाम् सैनिकान् विभाजयितुमात्मानमसंख्येषु आकारक्षुद्रेष्वपि संचलननिपुणतरेषु दलेषु, लक्ष्यीकर्तुं समीपतरवर्ति प्रत्यर्थिदलमेकैकशः, आक्रमितुं तदावेशेन, विनाशयितुं च तन्निरपवादम् ।

तदादेशानुपदमेव जगर्ज कुतश्चित् अन्य एव आदेशः……आक्रमणव्यूहं तेन सद्य आदिष्टं विफलीकर्तुं बद्धपरिकर इव……जाटभाषायामपभ्रष्टायां उच्चारितः ।

आकर्ण्य तं जहास उच्चैः विस्फारितलोचनः यवनेश्वरः । स हि आदेशः न केवलां व्यानञ्ज उपस्थितिं परबले तन्नेतुः,……अपि तु तस्य यवनभाषानिपुणतामपि……तस्य स्वसेनासंचालनक्षतामपि ।……अदात् यावन्यां अरेबिक्भाषायां नूतनमादेशं आशासनः दुर्ज्ञेयत्वं तस्याः कृतेः प्रतिपक्षनेतुः तुरुष्कभाषाकोविदस्यापि ।……समाश्वस्तश्च तस्याः तत्वेऽनाकर्ण्य तत्प्रतिरोधक्षममादेशान्तरं,…एकदेशेन चित्तस्य लक्ष्यीचकार प्रथमस्यादेशस्योद्गमस्थान, अन्येन च एकस्य परसैनिकदलस्य समुद्दिश्य तदवस्थितिं जवेनोपसर्पणम् ।

बभूव चानुपदमेव व्यापृतः सर्वात्मना घोरे, कथमपि प्रज्वाल्यमानैरला-

तशतैः शनैः शनैः प्रकाश्यमाने समुद्भवदलातशतधूमधूमिले समुत्पतत्सामुद्र-तुषारपटलाऽऽव्रियमाणविशेषे आस्कंदने ।

इयत् लोमहर्षकं नूनम् आसीत् तद्दृश्यं तस्यासाधारणस्य, रणक्षेत्रस्य क्रोशार्द्धविस्तृतस्य, कम्प्यमाननौकासहस्राकुलाकुलस्य, अनन्तेन नैशेन तिमिरेण परितः परिवृतस्य, परमाक्रमतां जयघोषैः आत्मानं रक्षतामपशब्दैः खड्गाखड्गि युद्धमानानां रणघोषैः आहन्यमानानां चीत्कारैः हन्यमानानां परिदेवनैः अधःपततां हाहाकारैः निनादितस्य अनश्वस्यागजस्य·····यत् व्यासक्तचित्तः अवलोकने तस्य·····उपरराम·····उच्छलनात् स्वाभाविकात् आन्दोलितनौकासहस्रमथ्यमानजलोऽपि जलनिधिः,·····ईरणात् सान्द्रस्य धूमपटलस्य ईरणोऽपि समीरणः,···स्वस्वस्थानपरिवर्तनात् नियतिनिर्दिष्टोऽपि नक्षत्रगणः,·····किं बहुना—स्वात् अनन्तात् प्रवासात् नित्यप्रवासी कालपुरुषोऽपि ।

व्यासक्तचिन्ततयैव तथाविधया सर्वेषां·····न कोऽपि सैनिकः—यावनो भारतीयो वा—पर्यलक्षयत·····कुण्डलीकृत्य सर्वतः दूरतश्व तद्रणक्षेत्रमद्भुतं सजवं निःशब्दं समुपसर्यत् एकं महत् रणावेशस्फुरद्बाहुबलं बलं यावनम् ।

न कोऽपि·····अर्थाद्ऋते यवनराजस्य ।

न केवलं पर्यलक्षयत·····अपि तु प्राप समश्वासमपि परमं अवलोक्य तत् तदाज्ञानुसारं समापतत्,·····प्रत्यक्षीकृत्याननुभूतपूर्वसदृशं परपराक्रमं विचलिताहंभावः ।

जगर्ज च सहसा समुल्लसितचित्तः·····उद्धृत्य सद्यःनिहतपरसैनिकरुधिरस्नातं भीषणं स्वं खड्गं—'अल्लाहो अकबर !' इति सकृत् ।

'अल्लाहो अकबर !·····अल्लाहो अकबर !'—जगर्ज चासकृत् तदनुपदमेव सहसा प्रत्यभिज्ञाततत्स्वरं तदावेशाविष्टं तत् समासन्नप्रायं नवीनं तद्बलम् ।

निशम्य ता गर्जनाः स्वमध्यात् स्वपरितश्च समुद्गच्छतीः ते द्वे अपि परस्परसंहारव्यापृते बले विरम्य स्वचेष्टाया यावदवलोकयतः दिशि तासां गर्जनानां सत्तमसगर्भादिव समुद्गच्छन्तीनां····तावच्च प्रज्वाल्य स्वमलातशतं परिववार ते विस्मयनिष्क्रिये । आरभत चाक्रमितुं जाटसैनिकान् ।

इयान् अनुत्प्रेक्षित आसीत् सः रणव्यूहः कृते तेषां प्रत्यर्थिनां (—अर्थात्

यवनराजेनानागतविधात्रा दूरदर्शिना स्वयम् आदितः समादिष्टः–)······ यत् ते सर्वेऽपि जाटसैनिकाः······शूरा अपि······पणीकृत्य प्राणान् स्वं पौरुषं रक्षितुं कृतप्रतिज्ञा अपि······बभूवुः विस्मयस्तिमिताः,······न साक्षाच्चक्रुः कतिपयक्षणपर्यन्तं चात्मानं हन्यमानं सद्य आगतेन परबलेन ।

'जयतु सोमनाथः !'–प्रायतत जागरयितुं तान् तस्याः कालमूर्च्छायाः एकलः तीव्रः रणघोषः ।······न शशाक परंतु पूरियितुं मनोरथं तदुद्घोषकस्य ।······शशाक परंतु पूरयितुं तं तद्विपक्षिणः ।

अहो विधिविधानम् ।

यदि हि न तत् अशक्ष्यत्·········न तद्युद्धं तर्हि विजये आक्रामकस्य पर्यणंस्यत ।······यदि हि वा–

अथवा–किमनया 'यदि······तर्हि'–भाषया ?····अनयाऽभूतभावनया ?

भूतमेवानुसरामः,·····तदेव हि हितकरं कृतेऽस्माकम् ।······भूतकालिकीस्त्रुटीः आत्मशिशिक्षिषया तत्र तत्र पर्यालोचयताम् ।

शशाक–तर्हि–एकलः सः तीव्रः रणघोषः सुस्पष्टं दर्शयितुं यवनराजायावस्थितिं तदानींतनीं नेतुस्तस्य परबलस्य······महता चातुर्येण तेनासकृत् परिवर्त्यमानाम् ।

क्षणार्द्धमात्रे कृतनिश्चयः ग्रहीतुमधिकतमं लाभं तस्य अवसरस्य स्वभाग्यप्रदत्तस्य यवनराजः······अथ······ न केवलं प्रावर्तत हनने परसैनिकानां कथंचित् आयोधने प्रवृत्तानां कुण्डलीकृत्य तं हन्तुं प्रयतमानानां पञ्चषाणां द्विगुणितेनावेशेन,······अपि तु–समुपसर्पणेऽपि सन्निधौ तेषां नेतुः जिघांसया तस्य सर्वजनसमक्षम् ।····न केवलं अनेकभारतीयाभियानजनितं ज्ञानं यत्'–हते नेतरि सर्वेऽपि तदनुयायिनः भारतीयाः भवन्ति हता विनैव खड्गप्रहारं प्रोत्साहयामास तं समुपसतुं तद्दिशि, अपि तु औत्सुक्यमपि······कौतूहलमपि ······तोलयितुमद्वितीयत्वेन तावत्कालपर्यन्तमनुभूतं स्वं शौर्यं सह शौर्येण तस्य ।

प्रोत्साहितश्च तथा······स आज्ञापपयामास स्वं नाविकप्रमुखं नेतुं स्वां नौकां तत्समीपम् ।

तुमुलयुद्धसंकुले संततनिपतद्हताहतसैनिकरक्तारक्तेऽसंख्यनौकामथ्यमानजले तस्मिन् सामुद्रे रणक्षेत्रे मन्दं मन्दमेव गन्तुं शक्तां स्वां नौकां

वीक्ष्य······अधीरः चिन्तयामास च क्षणैकं हातुं पिपीलिकागतिं तां समुपसर्तुं च परकीयां संतीर्यैवान्तरालवर्ति जलम् ।

चिन्तयत एव एवं तस्य······वेगेन बभूव सा परकीया नौकाऽन्तर्धापिता ······अन्तरालेऽकस्मात् उपसृतया जयघोषमुखरया द्विपत्सैनिकबहुलया एकयाऽन्यया नौकया······प्रयतमानया रक्षितुं स्वं नेतारं क्रमशः संकुलतरीभवन्त्याः यवननौकाकुण्डलनायाः ।

इयान् समुत्तेजितो बभूव सः तेनाकस्मिकेन प्रत्यवायेन यत् अकृत्वा योग्यायोग्यविचारं कृत्वा रणघोषं सः······अहात् स्वां नौकां, अतरत् अन्तरालवर्ति जलक्षेत्रं, आरोहत् तां प्रत्यवायीभूतां परनौकां, अहनत् अधिकतमान् तदधिरुढान् सैनिकान् कतिपयेष्वेव क्षणेषु······आविष्ट इव कयाचित् अमानुष्या शक्त्या,······अक्षिपत् स्वामुदग्रां दृष्टिं वांछितायाः नौकायाः अपश्यत् समीपतरतः तमेव वीरं पञ्चषैः तन्नौकालातैः प्रकाश्यमानवपुषं, पूर्ववदेवायोधनव्यापृतं, रक्तारक्तशरीरं, प्रवृद्धश्मश्रुजालम्, क्षामतरमिव भासमानं, व्यापारयित्वा स्वां तीक्ष्णां दृष्टिं सर्वत्रायोधनसमकालमेव रणस्थितिं सततं निरीक्षमाणं, अविगणय्य तत्संनिधिं रणगर्जनैः स्वैः भारतीयान् सैनिकान् उत्तंभयन्तं,······प्रायतत च······प्रभावितः तस्य साधारणवेषस्यापि अप्रत्याख्येयेन स्वतः संवेद्येन साहजिकेन गौरवेण, पराभिभवनक्षमेण च नेतृत्वेन······समाक्रष्टुं तस्यावधानं दिशि आत्मनः, निगडय्य तस्मिन् स्वां दृष्टिमपलकाम् ।

अहो प्रभावः भावसंवेगस्य······दृक्मात्रेण संक्रामितस्य !

वभूव हि सः समर्थः कर्तुं यथाभीप्सितं······क्षणान्तरे एव ।

शशाक च क्षणमात्रं मज्जयितुं स्वां तीक्ष्णां सर्वंकषां पारदर्शिनीं मर्मभेदिनीं अभिमानिनीं दृष्टिं दृष्टौ तीक्ष्णायां पारदर्शिन्यां मर्माहतायां म्लानाभिमानायां तस्य ।

वयसा तुल्ययोरपि रुपेणात्यन्तं विभिन्नयोः, तेजस्वितया समानयोरपि स्वभावेनात्यंतमसमानयोः, महाकुलीनत्वेन परस्परसदृशयोरपि संस्कार संम्पदाऽत्यंतं विषमयोः, शौर्येण तुल्यबलयोरपि भाग्येन वैषम्यं चरममवस्थायाः जीवनस्य प्रापितयोः तयोः द्वयोः वीरयोः······महत्वाकांक्षा-निरन्तर वैफल्यभावनाभ्यामहर्निशं ज्वलनीयाभ्यां प्रौढावस्थायामेव वार्धकं लिप्सोः,

महमूदधर्मपालयोः (–आम्! ......धर्मपाल एवासीत् स नेता जाटानां...... भगवत्सोमनाथापमन्तारं प्राणवियोगेन दण्डयितुं प्राणाम् वा स्वान् समुत्स्त्रष्टुं कृतनिश्चयः–) एतावान् आसीत् दृढः सः दृष्टिबंधः......दृढः मूकमुखरः अतीतसमस्तजीवनपटप्रदर्शकश्च यत् बद्धौ तेन तौ......तस्मिन् परां काष्ठां भीषणतायाः प्राप्ते संगरेऽपि......अवतस्थतुः कतिपयक्षणपर्यन्तं मनसा विस्मृतबाह्यविश्वौ......शरीरेण व्यापारयन्तावपि स्वं स्वमायुधम्।

तदवस्थयोरेव तयोः द्वयोः......उपससर्प धर्मपालं......सरीसृप इव निःशब्दः, हन्तुं तं प्रयतमानानां यवनसैनिकानामन्यतमः एकः कपटकुटिलः जलार्द्रवेषः प्रत्यग्रक्षतप्रस्त्रवत्क्षतजक्लिन्नवामभुजः विकृतस्मितभीषणश्मश्रुलमुखमुद्रः यवनसैनिकः साधारणः......आयोधनव्यापृतं......पृष्ठतः।

चिन्तयन्येव च तत्काण्डदर्शिनि राजनि तस्य नियन्तुं तं तस्मात् कूटाक्रमणात् (–बहु हि इयेष सः बंदीकर्तुं तं स्वप्रतिपक्षनेतारं जीवितं, परीक्षितुं च तस्य सत्वं मरणयातनाभ्योऽपि घोरतरा दत्वा यातनाः स्वराजधान्यां–) सहसा जघान तं धर्मपालं ग्रीवायाम्।

अपरराध परंतु स्यात् लक्ष्यात्,......हनन् तं......न ग्रीवायां,......अपि तु–दक्षिणे भुजे, तेन नियतिवशात् संमुखीनमन्यं यवनसैनिकं प्रहर्तुं तत्क्षणमेव उद्धृते।

इयान् तीव्रः आसीत् स तस्याघातः......न केवलः कूर्परतः विच्छिन्नस्तस्य तस्य सः भुजः......तद्वेगप्रेरितः......उत्प्लुत्य पपात दूरे जले जलनिधेः सखड्गः,......अपि तु–स्वयं धर्मपालोऽपि......ह्रातसंतुलनः।

इयान् क्षिप्तः आसीत् स तस्याघातः यत् न शशाक सः किंचिदेव दूरावस्थितोऽपि यवनराजः लक्षयितुं तत्पातं तद्हस्तविच्छेदं तदुत्प्लवनं भुजस्य पतनं च धर्मपालस्य......क्रमशः घटितमपि क्षणे एकस्मिमेव घटितमिव दृष्टं निकटतमवर्तिभिः स्तंभितैरुभयपक्षीयैः सैनिकैः।

अशक्तिश्च सा तस्यावर्द्धताधिकतरमेव क्षणान्तरे एव घटितया घटनयाऽन्यया।

सहसा हि चुक्रोश तस्य पृष्ठवर्ती......छायेव तमनुसरन्......तस्य सः मूकबधिरः परिचारकः......मर्मणि आहत इव केनचित् दूरात् क्षिप्तेनाऽऽयुधेन,......पपात च तत्क्षण एव नौकातः रक्तमांसवसामिश्रणकलुषिते

सागरजले ।

बभूव इयान् व्यापृतः प्रतिकारे परितो वर्तमानानां जाटसैनिकानां······ अवलोक्य स्वं नेतारं तथा निहतमुदग्रतराणां, 'कृत्वा रणगर्जनाः सहसा तमेव नौकाप्रदेशं समुद्दिश्य नौका विविधाकाराः एकसमयावच्छेदेन प्रेरयमाणानां······यत् नापि क्षणमपि अवकाशं विचारयितुं आदेष्टुं च स्वं सैनिकं समीपतमवर्तिनमपि गहितुं आसंमन्तिकं सामुद्रं जलप्रदेशं, अन्वेषयितुं तदन्यतरमपि शरीरं, उपस्थापयितुं च तत् तत्पुरतः सप्राणं······ निष्प्राणं वा ।

इयत् तीव्रमासीत् आक्रमणं तेषां प्रतिशोधेच्छोदग्राणां यत्—जीवनेयुद्धबहुले स्वे प्रथमत एव बभूव सः व्यग्रचित्तः स्वसंरक्षणे······तदपि प्रहरपर्यन्तम् ।······आप चावकाशं (—शरीरेण संधिषु दूयमानेन, श्रान्तेन—) अन्तिमे प्रहरे तस्याः कालराज्याः······रक्तस्नातः रक्ताक्षहताहतानेकपरवीरसैनिककलेवराऽऽपूरितनौकः······विरन्तुं शस्त्रचालनात् स्वयं,······संचालयितुं च स्वं बलं······क्षतविक्षतमपि युद्धविजयोल्लसितं······अन्वेषणे कृन्तनेऽवशिष्टानां परसैनिकानाम् ।

पपात······अथ······तथा कुर्वाणस्य तस्य दृष्टिः······आसमन्तिकस्य रणस्थलस्य उपरि,······आपूरयामास च तं विस्मयेनानुभूतपूर्वसदृशेन ।

अगणितानि खलु रणस्थलानि अवलोकितानि आसन् तया तस्य दृष्ट्या,······अवलोकितानि आसन् आ कौमार्यादेव,······दृष्ट्या बालिशकौतूहलोत्फुल्लया,······दृष्ट्वा नवयौवनोद्धतया,······दृष्ट्याऽभूतपूर्वसदृशसाम्राज्यसंस्थापनस्वप्नतंद्रिलया,······दृष्ट्या शनैः शनैः व्यावहारिकं तैक्ष्णमुपगतया,······दृष्ट्याऽश्रुतपदक्षेपमागतया ज्वरया समाक्रान्तया,······ दृष्ट्या निरंतरज्वरोत्तापितया,······दृष्ट्या गृहराज्यचिन्तामलिनया,······ दृष्ट्याऽनागतभयभीतया,······दृष्ट्या सदैव रक्तपिपासातुरया,······दृष्ट्याऽऽदितएवानुद्विजन्त्या मरणस्यातिबीभत्सस्यापि दर्शनात्,······दृष्ट्या स्वप्रासादारामेष्विव युद्धक्षेत्रेषु विचरणस्याभ्यस्तया,······आम् ! अगणितानि रणस्थलानि,······कानिचित् नक्षत्रालोकालोकितानि दुग्धधवलानि प्रबलशीतवातप्रकम्पितानि पाषाणकठोरतुहिनपटलाच्छन्नानि,······कानिचित् निबिडविपिनसमाच्छन्नानि असूर्यंपश्यानि दुर्गमाणि दिवाऽपि अन्धकारि-

तानि,······कानिचित् प्रखरतापतपनदाहकानि दुरालोकानि मरुप्रायाणि,······कानिचित् दिगन्तप्रसृतानि करतलसमतलानि निरुद्भिदानि,······कानिचित् उत्तुंगप्रासादपरंपरानिवद्धपर्यन्तानि जनसंकुलानि संकीर्णानि,······कानिचित् निःशब्दानि मन्दपूजादीपदीपितानि पूजापुष्पसुगंधितानि देवतायतनाभ्यन्तरवर्तीनि,······कानिचित् जलापूरितपरिखाऽऽवृतदुर्गबहिर्वर्तीनि संततनिपातितोपलांकितभूतलानि,······कानिचित् भस्मावशिष्टराजकुलदारामात्रसनाथाभ्यन्तराणि दुर्गान्तर्वर्तीनि,······अगणितानि रणस्थलानि ।

परंतु······न खलु तथाविधं एकमपि ।

तैस्तैर्दृष्टिकोणैरतिशयानमवलोकितपूर्वाणि रणक्षेत्राणि······तत् रणक्षेत्रं······परितः मर्यादितं घनेन सूचिभेद्येन अन्धतमःपटलेन अदृश्यप्रायाणि दिगन्तानि यावत् प्रसृतेन, निगलितुं तदपि स्वयमवसरं प्रतीक्षमाणेन, मन्दीभूते एवालाते कस्मिंश्चिदपि प्रयतमानेनेव साकारयितुं स्वमुद्देशं,······समाचकर्ष तस्य चित्तं······सर्वप्रथमतः—स्वैरसंख्यैरालातैः यवनसैनिकविधृतैः······कैश्चित् संधुक्षितनारकीयवन्हिज्वालानिकरैरिव प्रज्जलद्भिः अपरैः धूममेवाधिकं वमद्भिः, कैश्चित् निवातस्थिरैः अपरैः नैशसमीरप्रवाहप्रकम्पितैः कैश्चिन्मुमूर्षुभिरिव मन्दप्रकाशैरपरैः सद्यःप्राप्ततैलधारैः उज्जिजीविषुभिरिव तीव्रतरीभवत्प्रकाशैः, कैश्चित् परसैनिकान्वेषणव्यग्राणां यवनसैनिकानां साहाय्यं कुर्वद्भिरपरैः शून्यतायामेव प्रकाशं स्वं वृथा व्ययीकुर्वद्भिः, तदनु तत्सैनिकैः······कैश्चित् मुमूर्षु-स्वनौकातलशायित-स्वसुहृत्शुश्रूषाव्यग्रैरपरैः कालापह्लतस्वसुहृद्भिः कलेवराण्येव तेषां अवलोकयद्भिः, कैश्चित् स्वानि क्षतानि लवणोदकेनाशुद्धेनापि अवसरे तस्मिन् सहजोपलभ्येन प्रधावद्भिरपरैः तत्कर्तॄन् परसैनकान् निःशब्दं दूषयद्भिः,कैश्चित् आयोधनरभसभग्नानि स्वानि स्वानि आयुधानि अवलोकयद्भिः अपरैः तानि तथाविधानि प्रक्षिप्य् सनिःश्वासं सामुद्रे जले तदावश्यकतामतिक्रान्तानां स्वसुहृदां तानि गृह्णद्भिः कैश्चित्-कैश्चिदेव-अपरिपृप्तयुयुत्सैः परसैनिकगवेषणाव्यग्रैरपरैश्च नौकायामेव स्वकीयायां सनिर्वेदमुपविष्टैः गवेषणाव्यापृतान् स्वसहयोद्धॄन् शून्यशून्यया दृष्ट्याऽवलोकयद्भिः······सर्वैरपि श्रान्तैः······सर्वैरपि निःशब्दैः ······सर्वैरप्याहतैः······सर्वैरपि अनुल्लासैः······सर्वैरपि रक्तस्नातैः······तदनु च कलेवरैः······असंख्यैः कलेवरैः······कैश्चित् कृत्तमस्तकैरपरैः कबंधमात्रा-

वशिष्टैः, कैश्चित् अक्षतकबंधैरपरैः लूनहस्तपादैः, कैश्चित् विस्फारित-लोचनैरपरैः मुद्रितनयनैः, कैश्चित् प्रारंभे एव समरस्य हतैः वाताध्मात-शरीरैः सागरजले प्लवमानैर परैरन्तिमे चरणे तस्य हतैः सागरांभसि निमग्न-प्रायैः, कैश्चित् चुक्रुक्षाविवृतमुखबिलैरपरैः दृढबद्धौष्ठपुटैः, कैश्चित् उद्धृत-शस्त्रमेव मृतैरपरैः निःशस्त्रैः,······सर्वैरपि विकृतमुखमुद्रैः······सर्वैरपि परितःप्लवमानपाठीनपरस्परसंघर्षचंचलैः····असकृत् चाल्यमानैरिव कृतान्तेन कौतूहलवशात्······सर्वैरपि बीभत्सदर्शनैः ।

कथमपि व्यावर्त्य दृष्टिं स्वामारक्तां तस्मात् अनवलोकितपूर्वसदृशात् रणस्थलात्······अथ······आबबंध तां स यवनाधीशः उत्तरस्यां दिशि एकच्छत्रं चकासमानस्य नक्षत्रस्योपरि······विचारमग्नः ।

उज्जगाद च चिरात्······'कालेन एतावता पाठीनैः······गभीरतरात् सागरजलात् गंधेन मांसस्य समाकृष्टैः······उभावपि तौ नूनमप्रत्याभिज्ञेय-कंकालमात्रशेषामवस्थां प्रापितौ स्याताम् !'

निःश्वस्य च दीर्घं······व्यापारयामासात्मानं······दुःखितोऽपि हान्या स्वसेवकस्य, नातिसमयपूर्वं तस्य सेवायां प्रविष्टस्यापि पमरविश्वासपात्रतां प्राप्तस्य, मूकबधिरस्यापि तद्भावनोहनपरमनिपुणस्य, तमहर्निशमनुसरतः, ······मुषितंमन्योऽपि उज्जासनेन स्वरेषणस्य चिरात् खलु समाधिगतस्य, अननुभूतपराक्रमस्यापि अतुलनीयेन तत्प्रभावेण तं प्रभावितवतः, कथमपि पुरातनस्य पांचनदस्य नरेशस्य वृद्धस्य जयपालस्य स्मृतिं तन्मनसि पुनरुज्जी-वयतः······समाकर्षणे स्वबलस्य तस्मात् रणस्थलात् प्रेरणे च तस्य दिशि शंखधरद्वीपस्य प्रस्फुटत्प्राभातिकप्रभाप्रकाश्यमानस्य····निगूहितमनोव्यथः ।

अवततार स्वयं सर्वप्रथमं तीरे तस्य प्रहरार्द्धमात्रानन्तरं रोचिषि वेगेन प्रबलतरीभवति नवीनस्य दिवसस्य ।

व्यापारयामास च स्वां श्रान्तामपि सावधानां दृष्टिं······विवेद च तत् अनतिविस्तृतं विभिन्नपरिमाणैः विभिन्नाकारकैः उपलैः खचितं निर्वृक्षप्रायं ······अवलोक्य तमागतं निरुद्धश्वासमिवावसन्नगात्रमिव निश्चलम् ।

उत्प्रेक्ष्य तत् निर्जनं······क्षणमेकं······अपरीक्ष्यैव तत् ततो निवर्तितु-मिच्छतस्तस्य मनसि सहसा समुदभवत् कोऽपि विचारः (—स्यान्नाम—'भवेयुः अत्रापि परसैनिकाः निलीनाः······ मूषका इव निलीनाः······छिद्रेष्वस्य····

विभाव्यात्मानं निर्नेतृकं गलितगात्राः······प्रतिनिवर्तमानान् अस्मान् कूटा-क्रमणेन हठात् विनाशयितुं कांक्षन्तो वा'–इत्याकारकः,······'भवेत् नूनं विगतरात्रौ अस्माभिरुज्जासितानां तेषां जाटानां कोऽपि निधिः गूढं स्थापितः अत्रत्येषु भूमिविवरेषु बृहद्भिः एभिरुपलैः गूहितप्रवेशद्वारेषु'–इत्याकारको वा–), प्रेरयामास च तं क्षणमात्रानन्तरं आदेष्टुं स्वसैनिकान् कुण्डलीकर्तुं तत् समस्तं द्वीपं आ तीरात्, परीक्षितुं तत्प्रदेशं सूक्ष्मेक्षिकया, सर्तुं चाग्रे शनैः शनैः समुद्दिश्य तस्य मध्यबिन्दुम् ।

सैनिका अपि तस्य······अकथितेनापि ज्ञातेन तद्विचारेण प्रभाविताः ······अन्वतिष्ठन् तस्यादेशमविलंबमेव ।

तथा गवेषयन्तः तत् द्वीपं प्रतिपदक्षेपं······ते श्रान्ता अपि······दूयमान-क्षता अपि······क्षुत्पिपासापीड्यमाना अपि······धनाशया दुर्निवार्यया प्रेर्यमाणाः······न मनसि चक्रुः ईषदपि स्वां श्रान्तिं······स्वां वेदनां······स्वां दैहिकीमावश्यकतां अपि तु- अधिष्ठिता इव कयाऽपि पिशाचिकया दूरिचक्रुः प्रत्येकं शिलाखण्डं, अनुप्रविविशुः प्रत्येकं विवरं, आरुरुहुः प्रत्येकं महावृक्षं ······आरंभे तस्य दिवसस्य प्रशैत्यकम्प्यमानगात्राः, मध्ये तस्य समुद्भवत्-प्रस्वेदबिंदुकलंकितभालपट्टाः, अन्त दूयमानसर्वांगाः······विरमुः तस्मात् मरीचिकानुसरणात् प्रथमप्रहरे कालनेमिक्रमेणागतायाः निशायाः······ निराशाः क्रुद्धाः मिलिता मध्यभागे तस्य द्वीपस्य सरीसृपवृश्चिकबहुले······ अवलोकयामासुश्च मुखं स्वनेतुः······स्वयं तेषां नेतृत्वं कुर्वाणस्य······कयापि अपेक्षया ।

विज्ञाय तामनिवेदितामपि, विभाव्य तेषां मनोवस्थामगदितामपि······ अदात् तेभ्यः स्वामनुमतिं प्रशमयितुं स्वं अपेक्षाभंगसंतापं विनाश्य पुरोवर्तिनं महान्तमपि वृक्षैः प्राचीनैः सर्वतः आवृतमलक्ष्यप्रायं जीर्णमेकं निर्जनं शून्य-शून्यं रिक्तरिक्तं प्रासादं······स्यान्नामाभूतकल्पस्य कस्यचित् जाटाधिपस्य ।

लब्ध्वा च तां तस्मात् सहसोत्साहपूर्णस्ते चिक्षिपुः दिशि तस्य अद्वि-तीयस्थापत्यकलाविलासस्य······राजकीयशस्त्रागारात् महत्या सावधान-तयाऽऽनीतान्, अनुपलभ्यावसरं योग्यं तदुपयोगस्य तस्मिन् समुद्रे समरेऽ-परीक्षितप्रभावान्, अनिक्षिप्तान्, (सतः) मृतपिण्डानिव दृश्यमानान्, निक्षिप्तान् (सतः) सहसा दहनं प्रसरणशीलं वमतः अयोगोलकान्, ताव-

त्कालपर्यन्तं गूहितान्,······ननर्तुश्चानिशान्तं कतिपयक्षणेष्वेव सचट-चटात्कारं दहतः तस्य परितः उत्क्षिप्योत्क्षिप्य स्वं स्वं कृपाणं स्वं स्वं भल्लं स्वं स्वं खड्गम्······उन्मत्ता इवाट्टहासं कुर्वन्तः, जयजयकारं स्वनेतुः घोषन्तः, कालनिगलितं द्वेषणमुपहसन्तः, होलिकोत्सवमिव तस्य विडंब-यन्तः ।

(विकृत–) समुल्लासापूरिते महति तस्मिन् सैन्यसमवाये······एक एवासीत् योद्धा······विषण्णमुखमुद्रः ······एक एव,······साक्षात् यवनेश्वरः ।

स खलु किंचिद्विदूरे एवावस्थितस्तस्मात् नृत्यस्थलात्······एकाकी ······पदातिः······यापयामास तां समग्रामपि निशां······सविषादमवलोक-यन्नेव दहनं तं प्रचण्डं······पिस्पृक्षुमिव ज्वालाजिह्वाभिः तारामण्डलं दिदृक्षया तस्य लोमहर्षणस्य दृश्यस्य गगनांगणे कृतसंमर्दं······अन्यमनस्कः ।

किं······किं पृच्छन्ति भवन्तः ?

किमासीत् तस्य····कृतार्थस्य···विजयिनः······विषादस्यकारणमिति ?

न विद्मः ।

स्यान्नाम-तस्य मानसं······परमविश्वासास्पदीभूतस्य, सदाऽधोमुख-स्यापि गूढभावनया दृष्ट्या तमवसरेषु तेषु तेषु अवलोकमानस्य, तत्प्रिय-स्यापि······क्षणेषु केषुचित् तदुद्वेगकरस्येव प्रतीयमानस्य, मूकबधिरस्यापि तदावश्यकतानुमितिकुशलस्य,······पश्यत एव तस्य कालेन तथापहृतस्य स्मृत्या, हठादपसारितयाऽपि पुनः पुनरुद्भवंत्या······अदूयत निष्क्रियस्य–,

अथवा–अर्हतस्यापि हितस्येव तेन सदा चिंतितस्य, चिरात् खलु विधात्रा तत्पुरत उपस्थापितस्य, तेनैवातर्क्यगतिना तत्पुरतस्तथाऽपसारित-स्य, अदृष्टपूर्वस्यापि सदा दृष्टस्येव प्रतीयमानस्य, निकृष्टतमामवस्थां जीवनस्य दैवहतकेन प्रापितस्यापि महाकुलीनस्येव राजकुलीनस्येव दृश्य-मानस्य, तेन सह युयुत्सोः, परंतु अनुपशान्तयुयुत्सस्यैव कालेन स्वयं ग्रस्त-स्य······तस्य द्वेषणस्य स्मृत्याऽपीड्यत ।

अथवा-अतप्यत प्राग्भावनया अन्तस्य भारतीयायाभियानपरंपरायाः सांवत्सरिक्याः सर्वदा सर्वत्र विजये निष्कलंके विजये-पर्यवसितायाः, वंश-परंपरागतं क्षुद्रं बर्बरप्रायं पैतृकं राज्यं विशाले संपन्ने सुसंस्कृते तौरुष्कि-साम्राज्ये वर्द्धितवत्याः, अपारं धनराशिं तस्मै दापयन्त्याः, नाम तस्य

सद्धर्मप्रचारकनामावलीषु स्वर्णाक्षरैः लेखयन्त्याः, यशोगाथां तस्याभूतपूर्व-सदृशसाम्राज्यसंस्थापकप्रशस्तिसमलंकृतायां मानवेतिहायशिलायां टंकेन उट्टंकितवत्याः, तं सूदूरेषु सुरम्येषु समृद्धेषु, केषुचित् समशीतोष्णेषु, केषुचित् समशीतोष्णेषु केषुचित् अत्युष्णेषु, केषुचित् मरुप्रायेषु, केषुचित् अनूपप्रायेषु भूभागेषु नयंत्याः, तस्मै विभिन्नवेषभूषान् विचित्रवृत्तान्तान् विलक्षणव्यवहारान् मानवान् दर्शयन्त्याः ।

अन्ते एव च तस्याः निशायाः······आदिदेश स्वान् सैनिकान् प्रस्थातुं समुद्दिश्य गृहराज्यं स्वकीयम् ।

परं खलु विस्मयमवापुस्ते आकर्ण्य तस्य तमादेशम् ।······ते हि सम-भावयन्त तस्य सर्वथा तद्विपरीतमादेशं······तान् समुद्दिश्य सुदूराणि दाक्षिणात्यानि पौर्वाणि वा संपन्नतराणि भारतीयानि राज्यान्तराणि चलितुं प्रेरयन्तम् ।······न खलु अवापुः विस्मयमेव ।······अपि तु विषादमपि······ 'किं खलु वदिष्यन्ति अस्माकं कौटुंबिका जनाः प्रतिवेशिनश्च दृष्ट्वाऽस्मान् रिक्तहस्तमेव प्रत्यागतान् ?' इति विचिन्त्य ।······ न परन्तु दधृषुः स्वं विस्मयमपि······किं पुनः विषादं ?······प्रदर्शयितुं स्वमुखमुद्रायामपि······ सुष्ठु जानन्तः फलं वैमत्यस्य प्रकटनस्य ।······अपि तु—अनुसस्रुस्तं······ क्षामक्षाममपि, प्रतिसार्य त्वरेणाक्रम्यमाणमपि, कफलमपि, अनादृत्य परा-मर्शं लंबधवलकूर्चस्य राजवैद्यस्य पूर्ववत् आरुह्य स्वमश्वं बलं स्वं स्वयं नयन्तं, पूर्ववत् गुप्तचरैरानीतान् संदेशान् स्वयं आकर्शयन्तं, पूर्ववत् कृत-यौवनप्रवेशमपि भारतीयपरिस्थितिभिः परिचितमपि सैन्यसंचालनातुरातुर-मपि स्वं ज्येष्ठं पुत्रं मसूदं उपेक्षमाणं, पूर्ववत् अहंमन्यं, परंतु अयथापूर्वं विषण्णं, अयथापूर्वं भारतीयं इन्द्रनीलनीलं गगनं मरकताभं भूभागं······किं किं बहुना······भारतीयनिसर्गसौंदर्यं निखिलमेव साकांक्षया······'कदा नु खलु भवेम वयं समर्थाः द्रष्टुमेतत् सर्वं पुनः ?' इत्याकांक्षाकुलयेव दृष्ट्या पिबन्तम् ।

यत्तु—स विषादस्तस्य···साधारणेनापि तत्सैनिकेन लक्षितः······नासीत् परम्परासंबंधेनापि तन्मूकबधिरसेवकमरणाशंकया जनितः तत् स्पष्टी-बभूव तृतीय एव विश्रामस्थले प्रतिनिवर्तमानस्य तत्सैन्यस्य ।······ तत्रहि दिनमेकं क्लृप्तसंनिवेशः, स्वपटप्रासादविश्रामकक्षे विश्रान्तः सः······अनुभवन्

प्राथमिकानि चिह्नानि दैनिकस्य ज्वराक्रमणस्य······यापयंश्च कथमपि सायंसमयं······सहसाऽक्षिलक्ष्यीचकार तमेव मूकबधिरं सेवकं······अल्तमशं अतिक्षामं मलिनवस्त्रं प्रवृद्धश्मश्रुधवलचिबुकमाबद्धवामकूर्परं प्रविशन्तं तस्य कक्षे मन्दं मन्दं प्रविशन्तम्।······सत्यम्!······दृष्ट्वा तं तस्य तेजोहीना दृष्टिः······रक्षापटलावृतांगारकल्पा······क्षणमेकं जज्वाल यथापूर्वं।······ तस्य मुखमुद्रा······खेदाभ्रमलिना······क्षणमेकं स्मितोद्भासिता यथापूर्वं। ······वाणी च······औदासीन्यजडा······क्षणमेकं बभूव समुत्सुका यथापूर्वम्।

परंतु······क्षणमेकमेव।

विज्ञाय हि तस्मात्, विनष्टकल्पात् लोकान्तरादिवागतान्, प्रणम्य तं तत्पादसमीपे समुपविष्टात्, दीर्घदीर्घं श्वसतः इंगितैरभिप्रायं स्वं विशदीकुर्वतः, तस्य समग्रं वृत्तान्तं '······कथं खलु सः······तस्मिन् तुमुले नैशे समयेऽवस्थाय स्वामिनः पृष्ठभागे रक्षितुं तं कपटाक्रमणात् यथाशक्ति······ प्रयतमानः······अकस्मात् अहन्यत वामे भुजे केनापि वीरंमन्येन मूर्तिपूजकापसदेन भल्लेन दीर्घदीर्घेण,······कथं सहसा भग्नसंतुलनः सः पपात समुद्रे जले,······कथं तत्सौभाग्यवशात् अलक्षितः कैश्चिदपि हिंस्त्रैः जलचरैः पाठीनादिभिः शशाक नेतुमात्मानं प्रस्रवद्रुधिरक्षीणक्षीणोऽपि उपतीरं महता कष्टेन,······कथं तत्राक्राम्यत क्षणमात्रानन्तरं घोरया मूर्च्छया,······ कथं संभवतः द्वित्रैर्दिनैः प्रकृतिमापन्नः शशाक चलितुं तस्मात् स्वनिलयस्थानात् दिशि स्वामिना गृहीतायां,······कथं च बभूव समर्थः पुनर्लब्धुं विनष्टप्रायं आश्रयं स्वामिचरणयोः महता प्रयासेन'—इत्येतत् सर्वं सविस्तरं वर्णयन्तं,······किंचिदुत्तेजितोऽपि, पुनरुपलभ्य तं स्वं प्रियं सेवकं किंचिदाश्वस्तोऽपि,······सः······पुनरपि आक्रम्यत एव विषादेन।

तथाऽऽक्रान्तश्च······न शशाक लक्षयितुं दुर्बलतां वा वृत्तान्तस्य इंगितभाषायां तेन निवेदितस्य,······दृष्टिं वा तन्निवेदकस्य तस्य परिचारकस्य मध्ये एवाकस्मात् तस्य मुखं तैक्ष्ण्येनासाहजिकेन निरीक्षमाणां,······आतुरतां वा तस्या सामान्यां तमुपसेवितुं,······न शशाक लक्षयितुम् अस्वस्तिभावनां प्रतिनिवर्तनमार्गे तत्रतत्र तद्दर्शनार्थमुपस्थितानां महार्होपहारपाणीनां विनम्राणामधोनयनानामपि अलक्ष्यप्रायेण कटाक्षेण तद्विषादाभ्रमवलोकयतां, तत्कारणं स्वस्वबुध्यनुसारं ऊहमानानां तन्नियुक्तानां प्रादेगिकाधिकारिणां,

······प्रयत्नेन गोपायितां मनःप्रसन्नतां वा स्वस्वनरेशराज्यसीमावर्तिषु तन्नि-
वर्तनमार्गपतितेषु स्थलेषु स्वनरेशाज्ञानुसारं समुपस्थितानां, भयप्रकंप्यमान-
मानसानामपि भयं स्वं चाटूक्तिभिः कृत्रिमस्मितैः निगूहमानानां, नियता-
धिकं करद्रव्यं समर्पयितुं तस्मै आतुराणां, अवलोक्य तस्य ज्वरजराजर्जरि-
तामवस्थां अनुमाय तस्य निरुत्साहामिव विषण्णामिव खिन्नामिव मनः-
स्थितिं समाश्वस्तानां, वार्त्तां तस्यास्वस्थतायाः स्वस्वनरेशेभ्यः कथयितुम-
धीराणां मांडलिकराजपुरुषाणाम् ।



## पंचदशः परिच्छेदः

हठात् धूत इव केनापि दुःस्वप्नेन·····सहसा जजागार तस्या विभीषिकायाः ज्वरतंद्राया·····अथ·····यवनराजः, स्वराजप्रासादविश्रामकक्षशय्यायां विस्तृतायां मशकहरीपर्यावृत्तायां मग्नः प्रदीर्घसंततततीव्रकफलज्वरक्षामक्षामः अस्थिपंजरमात्रावशिष्टः उद्घाटयामास स्वे आरक्ते नयने बलात्, ······व्यापारयामास ते भीतभीत इव कक्षान्तः कथमपि अर्द्धोत्थितः, दीर्घदीर्घं तावतापि परिश्रमेण,·····साक्षाच्चकार आत्मानं नितान्तमेकाकिनं तस्मिन् श्वसन् निशामुखतिमिरेण वेगेनापूर्यमाणे बृहति कक्षे,··उवाच च घर्घरस्वरं— 'परित्यक्ताः स्म·····एवं·····सर्वैरपि·····कृतघ्नैः·····एकाकिनः·····रुग्णाः ······असहमानैरिव सांनिध्यं आस्माकीनम् ।·····परित्यक्ताः स्मः·····मृता इव !·····हं·····प्रदर्शयिष्यामः अकृतज्ञेभ्यः अनुपदमेव—न वयं तौरुष्किकपारसीकसाम्राज्यस्यास्य संस्थापकाः·····तेजस्विनः·····विषहामहे एतादृशीं उपेक्षावृत्तिम्····न विषहामहे दीर्घदीर्घेण रोगेण परावलंबितां प्रापिता अपि । ······प्रदर्शयिष्यामः·····वदंश्चैवं·····अर्द्धोत्थित एव····प्रसारयामास स्वं कम्पमानं दक्षिणं हस्तं·····जग्राह स्वर्णचषकं रत्नखचितं शय्यायाः समीपे एव परिचारकेण केनापि स्थापितं,·····रेचयामास सतिरस्कारं औषधं····· राजवैद्येन प्रयत्नपूर्वकं साधितं·····भूमौ,·····चिक्षेप·····प्रायतत वा क्षेप्तुं ······तं दिशि अनतिदूरावस्थितायाः स्वर्णघंटिकायाः अभ्याजिघांसया तस्याः ······परिचारकाजूहूषाव्याकुलमानसः,·····भीतभीत इव एकान्तवासात् ।··· न परंतु अलभत साफल्यं क्षुद्रेऽपि तस्मिन् प्रयत्ने स्वदौर्बल्यात्·····मध्य एव निपतितः भूमौ महार्हाऽऽस्तारणावृताया·····स हि चषकः शशाक भंक्तुं तां निःशब्दतां, यवनराजं कण्ठोपमर्दं मर्दयन्तीं, केवलेन 'थड्' इति ध्वनिना,··· तेनापि,·····तस्मिन्नेव क्षणे प्रार्थनामंदिरात् सहसा समुद्गतेन दीर्घदीर्घेण करुणकरुणेन प्रार्थनास्वरेण निगीर्णप्रायेण ।

'आ जन्मनः अभिनयं शिक्षिताः·····जाल्माः·····उत्सहन्ते प्रार्थयितुं

जगन्नियन्तारं कृतेऽस्माकं·····उदासते च शुश्रूषायामस्माकं·····एव'—सकुत्ससस्मितं जगाद सः·····विषण्णया दृष्ट्याऽवलोकमानः भूमिपतितं तं चषकं·····सांध्येऽधकारेऽपि असकृत् चकासमानः·····उपहसन्तमिव तदीयं दौर्बल्यम् ।

अवलोकमानस्यैवं तं तस्य·····आरभत शनैः शनैः समीपे तस्योपसर्तुं कक्षान्तरतः एकः·····आदौ क्षीणः क्षीणः·····तदनंतरं प्रखरतामधिकां भजमानः·····एकः दीपप्रकाशः,·····व्यावर्तयितुं च तस्य विचारप्रवाहं कुल्यायां नितान्तं भिन्नायाम् ।

'हं !'—आरभत चिन्तयितुं सः—'कः खल्वयं·····उपैति अस्मान्·····आहूत इव घंटारवेण ?·····अल्तमश एव ।·····सदा मामनुचरन्·····सदा मदीयामिच्छां अनुच्चारितामपि पूरयन् अल्तमश एव । (अवलोक्य तं समीपतरमागच्छन्तं, आगत्य नियते कक्षकोणे तं रत्नदीपं स्थापयन्तं, भूमिपतितं तं चषकमुत्थापयन्तं, क्षणैकं तत्पर्यंकदिशि तर्कयंत्या इव किंचिद्दृशाऽवलोकयन्तं, अनुमाय तं यथापूर्वं सुप्तं किंचिदविचारयन्तं क्षणमात्रानन्तरं ततः प्रतिनिवर्तमानं, कक्षद्वारे उपविशन्तं, तत्प्रतिबोधं च प्रतिपालयन्तं)···कियान् क्षामतरः संजातोऽयं एभिः द्वित्रैर्वर्षैः !·····क्षाम आदित एव अयं·····मन्यामहे·····तस्मात् सोमनाथाभियानात्·····अथवाऽतिमात् तस्मात् शंखधरद्वीपाभियानात्·····प्रभृति क्षामतर एव संजातः लक्ष्यते ।·····अन्तर्गूढघनव्यथेन' केनचित् तीव्रेण शोकेन दन्दह्यमान इव च' ।

'(सवितर्कम्) अपि नाम स्यात् अस्माकं प्रतिदिनं क्षीणतामधिकाधिकां उपगच्छत् स्वास्थ्यमत्र कारणम् ?·····अथवा—कौटुम्बिकं किंचिद्दुःखम् ?···मन्यामहे—अस्माकं अस्वास्थ्यमेव ।·····(सहसा स्मृत्वा) अनेकदा हि—अवलोकितोऽयमस्माभिः अस्मान् गूढभावनया निश्चलया दृशाऽवलोकमानः!·····यन्तु एतादृशेष्ववसरेषु अयमकस्मात् व्यावर्तयामास स्वां दृशमन्यत्र···ज्ञातापराध इव·····तन्मन्यामहे—संकोचशीलत्वात् स्वभावस्यास्य । (शून्यशून्यया दृष्ट्या दीपशिखामवलोकयन्तं तं क्षणमेकं दृष्ट्वा सहसाऽर्द्रभावनः) एतावती स्वामिभक्तिः दुर्लभैव नूनं·····दुर्लभैव वंशपरंपरागतेष्वपि·····आ जन्मनः परिचितेष्वपि·····स्वामिभक्ति स्वां साडंबरं प्रदर्शयत्स्वपि अन्येषु सेवकेषु !'

'(सकुत्सं)·····तेषां खलु आत्मंभरिणां·····आत्मभक्तिरेव सर्वतः

गरीयसी ।......अत एव ते...कृतेऽस्माकं प्राणान् स्वान् त्यक्तुं संनद्धमात्मान-महमहमिकया प्रदर्शयन्तोऽपि......(आकर्ण्य सहसा पुनः सर्वतः प्रसरन्तीं प्रार्थनाध्वनिलहरीं कटुहृदयः) कृतेऽस्माकं आरोग्यस्य परमेश्वरं परवरदिगारं प्रार्थयमाना अपि......स्वर्गं गतेष्वपि अस्मासु स्वां स्थितिं शासनयंत्रे अक्षितु-कामाः......तामुच्चतरां कर्तुं वा कामयमानाः......जीवत्स्वेवास्मासु स्वानु-कूलस्यास्मदुत्तराधिकारिणः विचारणे, विचारितस्य च तस्य पृष्ठोपोद्बलने च नोदासते ।'

'नोत्सहन्ते च । क्षणमेकमपि विचारयितुं भवितव्यमस्य साम्राज्यस्य ......अस्माभिः संस्थापितस्य......मसूदादपि प्रियतरस्य...स्वविचारितोत्तरा-धिकारिहस्तपतितस्य ।'

'(स्मारित इव दृढबद्धमूलायाः अहर्निशं तं पीडयन्त्याः, दुश्चिन्तायाः) ......न......न खलु......भवितव्यमस्य सद्यः अंकुरितस्यास्माकं साम्राज्यस्य भवितव्यं आश्वासप्रदं......तदन्यतरगतस्य ।'

'(सविषण्णस्मितं)......सहजौ, सहसंवर्द्धितौ, सहशिक्षितावपि नितान्तं विसदृशौ परस्परतः......एतौ......मसूदमुहम्मदौ......भजतः एकं सादृश्यं निःसंशयं......अयोग्यतारूपम् ।'

'(गणयन्निवानेकवारं गणितान् तयोः गुणावगुणान्)......अयं मसूदः ......प्रचण्डशरीरः......(सासूयमिव) शीतोष्णादिद्वंद्वसहनेऽस्मभ्योऽपि सम-र्थतरः......युद्धकलापारंगतः......अनुभवसंपन्नः......शरीरेण समर्थतरः वोढुं भारं साम्राज्यस्य मुहम्मदापेक्षया ।......अतश्च योग्यतरः द्वयोर्मध्ये रक्षितुं एतत् अस्माकं साम्राज्यं संकटघनघटायाः......दिवंगतेष्वेवास्मासु उपर्यस्य वर्षितुकामायाः आन्तरिकबाह्यविप्लवाक्रमणरूपेण ।......(सनिःश्वासं) परंतु —अस्येयं योग्यता......शारीरिकी योग्यता......ग्रस्ता मया दृष्टा......योग्या-योग्यविचारणाऽसामर्थ्येण......निर्द्धारिता च अन्ते......अपायकारिणीति । ......असमर्थो विचार्य पृथक्कर्तुं एकं शत्रुमन्यस्मात्,......प्रबलं दुर्बलात्... प्रच्छन्नं स्वतःस्पष्टात्......आसन्नं विदूरस्थात्......अत्यधिकापायकारिणं तद्भिन्नात्......अजय्यं जय्यात्,......वर्तितुं च योग्येनोपायेन तेन सह ।...... अयं......बलोन्मत्तो बलीवर्द इव...यस्य कस्यापि शत्रोः आक्रमणे उत्सहते । ......स्वयं विचारणासमर्थः......अहंमन्यः......न केवलं न बहुमन्यते परामर्शं

साम्राज्यहितैषिणां बृद्धानां राजपुरुषाणां प्रधानामात्यसदृशानाम्,······अपि तु—अवमन्यते तं······सर्वजनसमक्षम् ।······आत्मानमेव बहुमन्यमानः······न मनः कुरुते परामर्शेऽस्मदीयेऽपि ।······न केवलमेतदेव।······तस्यायं अहंभावः ······तस्यात्यधिकः आत्मविश्वासः······शारीरिकबलप्रकर्षमात्रोद्भूतः······ समुपस्थिते एवाकस्मिके, सर्वथाऽनपेक्षिते, संकटे, सहसा विपरिणममान एव निरीक्षितोऽस्माभिः आत्मन्यविश्वासे सर्वानर्थमूले ।······शारीरिकबलप्रकर्ष-मात्रोद्भवस्य तत्तुल्यबौद्धिकबलविरहितस्याऽऽत्मविश्वासस्येयमेव गतिः । ······एतच्च वैशिष्ट्यं तस्य विधत्ते तं उत्तमं सैनिकं······परंतु निकृष्टं सेना-पतिम् ।······(सनिः श्वासं) एतच्चास्माकं साम्राज्यं······दिवंगतेषु अस्मासु ······अपेक्षिष्यते सेनापतिं······दूरदर्शिनं समुपस्थितेष्वपि अप्रत्याशितेषु संकटेषु अविचलितं सेनापतिं,······न तु—उपस्थितमात्रदर्शिनं आकस्मिकेषु संकटेषु क्षीयमाणसाहसं, वशीभवाऽऽतंकस्य यत्किंचित्कारिणं साधारणं सैनिकम् ।

'अस्माकं अपर आत्मजः (—कथमिवायमस्माकं आत्मजः?—)मुहम्मदः ······उत्कृष्टतरः निकृष्टतरो वा मसूदात् दृष्टिकोणेनानेन—एतत्तु वयं नैव शक्नुमः निर्द्धारयितुं प्रयतमाना अपि एभिर्द्वित्रैर्वर्षैः ।······(सहसा कठोरमुख-मुद्राः) अथवा—निकृष्टतर एव । न हि वयं एकदापि शेकिम अवतारयितुं तं साक्षद्रणांगणे···आदौ मृदुभिः तत्पश्चात् तीक्ष्णैः वचोभिः तं प्रेरयन्तो-ऽपि तदर्थम् ।······(सकुत्सं) स्त्रीकोमलेन, आपाततः सरलेन, वस्तुतः कुटिलेन, स्वभावेनोपेतः······अयं मुहम्मदः······हीनः······न केवलेन बौद्धि-केन बलेन,······अपि तु शारीरिकेण सामर्थ्येनापि ।······अत एवायं······ आत्मानं प्रशासनकलायामधिकरुचिं प्रदर्शयन्, नोदसहत एकदापि रणांगणे पुरुषोचितेऽवतरितुम् ।······मन्यामहे—अस्येयं प्रशासनाभिरुचिरपि न वास्त-विकी ।······न हि अस्माभिः······विन्यस्य साम्राज्यप्रशासनभारं तस्मिन् प्रतिसंवत्सरं प्रवसद्भिः······एकवारकपि अवलोकितोऽयं प्रशासनकलाया-मात्मनः पथप्रदर्शकं प्रधानामात्यमतिशयानः कस्यांचिदपि प्रशासनकलायाम् । ······अतः शंकामहे—इयमस्य तवाकथिता प्रशासनाभिरुचिः आवरणमात्रं स्वदौर्बल्यस्याऽऽवृतं अनेन······मसूदायासूयमानेन ।'

एतयोः एतानि दौर्बल्यस्थलानि विभाव्यैव प्रायः विभिन्नपदाधिरुढान्

सेनाधिकारिणः (–विहाय कांश्चित् द्रव्येणोच्चतरपदाश्वासनेन वा क्रीतान्–), मसूदपक्षपातिनः मसूदस्याहंभावेन चण्डस्वभावेन चाहृताः नागरा अधिकारिणः मुहम्मदपक्षधराः ।

'पृथग्भावोऽयं······एवं विभाजयन् साम्राज्यस्य सेवकान् आ निम्नतरस्तरं,······स्वभावेनैवाहितकरः कृतेऽस्माकं एतस्य साम्राज्यस्य······सद्यः प्रस्थापितस्य·····नातिदृढबद्धमूलस्य······आन्तरिकबाह्यप्रच्छन्नाहितसंकुलस्य ······भव्यभाविकालस्वप्नमात्राऽऽबद्धप्रजाजनस्य······अविकसितव्यक्तिमत्वस्य,······आदौ प्रच्छन्नः······शंखधरद्वीपाभियानात् प्रत्यागतैस्तदनंतरं अनेन ज्वरापसदेन ग्रस्तैरस्माभिरवलोकितः वेगेन तीव्रतरतामधिगच्छन् एभिः द्वित्रैर्वर्षैः' ।

'अत्र च कारणं–द्वयोरेतयोः राजपुत्रयोः (–'राजपुत्रौ' एव एतौ······ आहार्यसायथ्यौं !–), आत्मानमस्माकमस्य विशालस्य साम्राज्यस्य भाविनं योग्यतरं शासकं अतुलितवैभवस्य कोषागारस्य भाविनं मन्यमानयोः······ क्षुद्रवैयक्तिक स्वार्थमात्रप्रेर्यमाणयोः······साम्राज्यस्य हितं मनसि लेशतोऽपि अकुर्वाणयोः······प्रतिदिनं वर्द्धमाना आघातप्रत्याघातदुःसहा सर्वविदिता (–परन्तु अस्मभ्यः (–व्यर्थमेव–) सप्रयत्नं जुगुप्सिता–) स्पर्द्धा एव' ।

'(सकटुस्मितम्) अवलोकितमस्माभिश्चारनेत्रैरस्मत् परिवारगता घटनाः निरीक्षमाणैः विगते एव सप्ताहे-यत् इयमनयोः आध्मातशिरसोः प्रतिस्पर्द्धा आधिकारिस्कतरं संपूर्णं दूषयित्वा·····आरभतेऽधुना दूषयितुं पारस्परिकसंबंधं अस्माकं पौत्राणामपि ।

'(चालयन् स्वं राजमुद्रांकितमंगुलीयकं·····शिथिलतरं स्वतर्जन्यामस्थिमात्रावशिष्टायां) यदि हि वयं······काश्मीराभियानात् प्रभृति असकृत् पीड्यमाना अपि तेन तेन रोगेण स्वकार्यकरणक्षमाः······नाभविष्याम एतावन्तः असहायाः एतस्य, क्षेत्रीयस्येव प्रतीयमानस्य, अविगणय्य औषधियोजनाः देशदेशान्तरादाहूतानां ख्यातनाम्नां यवनानां मूर्तिपूजकानां च वैद्यानां प्रवर्द्धमानस्येव दृश्यमानस्य कफज्यरस्य प्रभावेण·····तर्हि······ एतयोरियं प्रतिस्पर्द्धा······आ बाल्यात् बद्धमूलाऽपि·····तारुण्ये वृद्धिंगताऽपि ······नाभविष्यत् एतावती तीव्रा·····एतावती अपायकारिणी······।'

'(सतृष्णमिव) यदि नाम वयमलप्स्याम एकमेव पुत्रं·····अथवा ज्येष्ठं

······अथवा गुणैरावश्यकैरूपेतं······तर्हि तमेव वयं अस्मदुत्तराधिकारित्वेना-घोषयिष्याम······यदि नाम वयं नालप्स्याम एकमपि पुत्रं······तर्हि अभविष्याम समर्थाः यं कंचिदपि शारीरिकेण बौद्धिकेन च बलेनोपेतं युवानमुद्घोषयितुं तत्वेन······पुरातनानां सुगृहीतनामधेयानां अलप्तिगीना-दीनानां पद्धतिमनुसरन्तः······परंतु······पुत्रद्वयेन······तेनापि समवयस्केन ······तेनापि अवगुणदूषितेन······अलंकृताः परवरदिगारेण······न उप्सहेम किमपि तथा कर्तुम् ।

'(सासूयं) कथमिव ते पुत्राः······तस्यानंदपालस्य पांचनदस्य······द्वित्राधिका अपि······भिन्नगुणावगुणा अवर्तन्त ऐकमत्येन तेषु संकटक्षणेषु ······मिन्नन्नि अवयवा इवावयविनः—इत्येतत् असकृद्विचारयन्तोऽपि न शक्नुमः निश्चेतुं किमपि ।'

'(सचिन्तं) यदि नाम तत्तुल्या विपत् काचित् आक्रमेत् अस्माकं साम्राज्यमेतत् (—खुदा खैर करे—)······जीवत्सु एवं······दिवंगतेषु वाऽस्मासु······अपि नाम पुत्रौ अस्माकं एतौ वर्तेतां तथा······?······उत—।'

भीत इव पर्यायस्य······चिन्ततस्यापि प्रस्वेदकस्य······चिन्तनात्······सहसा परित्यज्य तां वितर्कधारां दीर्घं दीर्घं निशश्वास स बृद्धः ।

इयान् दीर्घ आसीत् तस्य सः निःश्वासः दुश्चिन्तया पीड्यमानस्य यत् अनुममौ तं मशकहरीकंपनेन तस्य सः······कक्षद्वारे समुपविश्य निश्चलया विषण्णया (किमिवासीत् तस्य विषादस्य कारणं—विसिष्मिये यवनराजः—) दृशा दीपशिखामवलोकमानः मूकबधिरः सेवकोऽपि ।

विचलित इव च तेन······समुदतिष्ठत् स्वस्थानात्,······उपससार पर्यंकं स्वस्वामिनः । अपसार्य च किंचित् मशकहरीं निभालयामास (—स-कौतूहलमिव—) कतिपमक्षणपर्यन्तं तस्य मुखं वलितं निस्स्तेजस्कं धवल-श्मश्रुजालं निश्चलया मूकमुखरया सास्रयेव दृशाश्रान्तया तमेवावलोकमानं, ······जग्राह समीपस्थं अन्यं चषकमौषधान्तरपरिपूर्णं,······अदाच्च तं तस्मै सहानुभूतिपूर्वकमिव ।

प्रभावित इव तेन तस्य सहानुभूतिप्रदर्शनेन······यवनराजः जग्राह तं निष्प्रतिरोधं कम्पमानेन दुर्बलेन हस्तेन,······अपिबत् तदौषधं बालकवत्,··· निमीलयामास नेत्रे स्वे निःश्वस्य दीर्घदीर्घं······बभूव च वशः निद्राया ···· कतिपयक्षणानन्तरमेव ।

इयती प्रगाढाऽऽसीत् तस्य सा निद्रा·····यत् स न विवेद परिचारकं तं·····शनैः शनैस्ततः अपसरन्तं·····यापयित्वाऽर्द्धप्रहरं कक्षद्वारे तत्पर्यंकं पुनरुपसर्पन्तं,·····क्षणमेकं निश्चलं तिष्ठन्तं·····सर्वमपि प्रासादं प्रगाढनिद्रा-मग्नमवलोक्य पुनः मशकहरीं किंचिद्दूरीकुर्वन्तं·····शवमिव निश्चलं यवनराजमवलोकयन्तं·····हस्तं स्वं दक्षिणं स्वकटिबद्धकरवालिकामुद्दिश्य प्रसारयन्तं·····क्षणान्तरमेव विचार्य इव किंचित् कटु हसन्तं·····करवालि-कामुष्टेः स्वं हस्तमपसारयन्तं·····अथ चापसरन्तं (चिरात्स्फुटित–) प्रसन्नस्मितोज्वलेनापि कठोरेण मुखेन ।

इयती प्रगाढाऽऽसीत् तस्य सा निद्रा·····यत् यदा खलु जजागार सः अपरेद्युः·····अवलोकयामास च सूर्यं गगनमध्यगतं·····तदाऽस्मयत किंचित् प्रसन्नः·····अनुबभूव चात्मानं रोगमुक्तमिव·····सबलमिव·····व्यपगत-चिन्तमिव ।

अनुभवंश्च तथा चिन्तयामासात्मानं मुक्तमिव उत्तराधिकारसदृशात् पंकिलात् प्रश्नात् ।

'वयं खलु·····निर्द्धारितपूर्वां नीतिमनुसरन्तः·····योक्ष्यामः द्वावपि एतौ अस्माकं पुत्रौ·····परमेश्वरप्रदत्तौ·····सेवायामस्य साम्राज्यस्य,····· तथा योक्ष्यामः·····यथा न केवलंमनुभविष्यतः तौ आत्मानं सफलमनोरथं, ·····अपि तु-आचरिष्यतः साम्राज्यहितसंवर्द्धनानुरुपं·····ऐकमत्यं प्राप्तौ ।

साम्राज्यसंरक्षणवर्द्धनोत्तरदायित्वं वयं (–सस्मितं–) न्यसिष्यामः विक्रान्तचरिते मसूदे,·····प्रशासनोत्तरदायित्वं च मुहम्मदे शांतप्रियस्वभावे, ·····एवं यथायोग्यं विभक्तयोः उत्तरदायित्वयोः·····(सोत्साहं) साम्रज्य-मेतदस्माकं तथा श्रीवृद्धिं प्राप्स्यति·····यथा स्वर्गादवलोकयन्तो वयमुप-हसिष्यामः एवंप्रकारकं दुश्चिंताभ्रं स्नेहातिरेकमात्रोद्भूतमिति ।

'अपि नाम वयं इमां नीतिं·····भाविकालसंबद्धां व्यवस्थां·····विवेक-पूर्णां·····अकथयाम मसूदाय·····एकवारमपि ?·····(सुचिरं विचार्य) न ·····न·····एकवारमपि·····हं ! उपस्थितः·····मन्यामहे·····तदुचितः कालः,·····(सोत्साहं) प्रेषितः दूतः अतीते मासे शमयितुमांतरिकमुपद्रव-मकस्मात् उद्भूतं पौरस्त्येषु भागेषु साम्राज्यस्य, (विमनायते स्म परं सः इह राजधान्यां····अलभमानः अवसरं स्वबलोपयोगाय–)सः प्रत्यागमिष्यति

राजधानीं नूनम्······अन्तेऽस्य सप्ताहस्य······(सविश्वासं) निःसंशयं कृतार्थः······प्रत्यागत एव चोपस्थास्यति सेवायामस्माकं सविनयनिवेदनायात्मनः साफल्यस्य,······तदा वयं······आत्मानं उत्सुकोत्सुकं न्यस्तुं तरुणस्कंधयोः स्वकार्यभारं दर्शयन्तः······स्वयमेवोद्घाटयिष्यामः विषयमिमं ······प्रकटयिष्यामश्च स्वं संकल्पम् ।'

'कियान् हृष्टो भविष्यति सः···ज्ञात्वाऽऽत्मानमस्माभिः तादृशमहत्तरोत्तरदायित्वेन संमानितम् !······आदौ तावत् स अभ्यर्थयिष्यति अस्मान् वोढुं यथापूर्वं समस्तं कार्यभारमितःपरमपि······दृढमाशासानः अस्माकं दीर्घमायुः ।······साग्रहमादिष्ट एव चास्माभिः······अंगीकरिष्यति उत्तरदायित्वमस्माभिः प्रदीयमानं······अनिच्छन्नेव ।'

'मुहम्मदस्तु······ज्ञात्वाऽऽनुकूल्यं मसूदस्यास्माभिः पृष्टोऽपि······प्रदर्शयिष्यति स्वमानुकूल्यं तत्क्षणमेव ।······(सविश्वासं) नास्त्येव तस्मिन् साहसं प्रतिरोद्धुं नः विचारम् ।'

'तत्······कथंकारं तावत् प्रकटितव्यं स्वं मनोगतं पुरस्तात् मसूदस्ये—त्येव तावद्विचारणीयम् ।······अनायासमिव······प्रसंगवशादिव—मन्यामहे ।······स हि······तीक्ष्णमतिः······क्षुद्रेणापि इंगितेनानुमास्यति चातुर्यमस्माकं वचःप्रबंधस्य,······अनुभवेच्चात्मानं······साक्षादात्मजं······ अवमानितमस्माभिः ।······अनुभवंश्च तथा······किं कुर्यात् प्रक्षुब्धः'—इत्युत्प्रेक्षमाणानमपि अस्माकं प्रकम्पते चेतः ।'

'अतीव मनस्वी सः······अवमाननासहिष्णुः······प्रक्षुब्धासु च भावनासु अविमृश्यकारी ।···(सकौतुकं) मनस्विनां बलिष्ठानां स्वभाव एव एतादृशः ।'

स्मरन्नेवेत्थ वैशिष्ट्यानि तानि तानि स्वाग्रजस्य(—सर्वाण्यपि अतीतायामेव निशायां दूषणीयत्वेन गणितानि—इत्यहो चंचलता मानवमनसः !—) सः वृद्धः तदनंतरमुदतिष्ठत् सोत्साहं स्वशय्यायाः व्यपगतजीर्णज्वर इव आरोग्यं पूर्वतनं लंभित इव कयाऽपि दैव्या शक्त्या, स्वयमन्वतिष्ठत् दैनिकीः सर्वाः क्रिया अवधार्य भालदर्शिनः सेवकगणस्य साहाय्यम्-अवलोक्य स्वामिनः स्फूर्तिं परं खलु हर्षमवाप स सेवकगणः, न परंतु वैद्यगणः अनुभवविचक्षणः, स तु······विजानन्निवाल्पकालिकतां तस्याः स्फूर्तेः······ उत्प्रेक्षमाण इव कतिपयदिवसानन्तरमवश्यंभाविनीं प्रतिक्रियां······बभूवा-

धिकमेव चिन्तामग्नः······अकथयंश्च रोगिणे स्वचिन्ताकारणं, प्रोत्साहयंश्च तं कृतकाभिनंदनैः······बभूव व्यापृतः रहसि परिकल्पनायां औषधस्य योग्यस्य समुपस्थितायां तस्यां परिस्थित्यां देयस्य ।

स्फूर्तिः परंतु सा रोगिणः न केवलं नावाप स्वल्पमपि क्षयं कतिपय-दिवसानन्तरं······, अपि तु प्राप वृद्धिमेव निशम्य वार्ताः प्रतिदिनं पौर्वा-त्येभ्यः भागेभ्यस्तस्य सेवायां उपतिष्ठद्भ्यः प्रजविभ्यः अश्वारूढेभ्यः दूतेभ्यः स्वपुत्रस्य विजयस्य, ततः गृहं प्रतिनिवर्तनस्य, क्रमशः राजधानीदिशि समुप-सर्पणस्य,······अधिजगाम च परां काष्ठां उन्नतेः अन्तिमे दिने तस्य पक्षस्याऽऽपूर्यतम् आशया स्वविजयिपुत्रदर्शनस्य ।

अवाप परंतु सहसा तीव्रां क्षतिं उपान्त्ये प्रहरे तस्य दिनस्य······ आकर्ण्य वार्त्तां विजयिनः स्वपुत्रस्य राजधानीप्रवेशस्य······स्वप्रासादगमन-स्य च ।

कथं······कथं नोपस्थितः मसूदः······प्रत्यागत एवाभियानात्······ सेवायामस्माकं सविनयनिवेदनाय आत्मनः साफल्यस्य······अद्य······अतीतेषु अनेकेषु प्रसंगेष्विव ?'—चक्रन्द हि तस्य······यवनसम्राजः······अद्वितीय-वीरस्य······तौरुष्किकपारसीकसाम्राज्यसंस्थापकस्य,······मनः······वार्धक-पीडितस्य साधारणसत्वस्य पितुरिवाशंकापरिपीड्यमानस्य······मर्माहतमिव च संवेदनाशक्तिहीनं······न शशाक श्रोतुमग्रिमं भागं तस्याः वार्त्तायाः······ आनन्दोत्फुल्लमुखमुद्रेण विश्रामकक्षे कृतसंमर्देन सेवकजनेन श्रूयमाणायाः··· स्वयमर्जितविनयेनेव साभिमानेन दूतेन एकेन······न केवलं स्वामिमनोवस्था-नभिज्ञेन, अपितु तस्मात् पारतोषिकं प्रसंगोचितमपेक्षमाणेन कथ्यमानायाः ।

चिरात्तु लब्धसंज्ञः······आहार्यस्मितोत्फुल्लमुखमुद्रः अथ प्रबभूवात्मनः, ······विसर्जयामास च कथमपि तं निवेदितनिवेदनीयम्, अपेक्षयेव कयाचित् तन्मुखं निरीक्षमाणं, अवलोक्य तस्यावस्थां किंचिद्विस्मयमानं, अनुमाय तां मोदातिरेकजनितां आश्वासं लभमानं दूतं······प्रदाय तस्मै स्वं रत्नचषकं समीपवर्तिनम्,,······अन्वजानात् स्वं सेवकवृन्दं मानयितुं तं विजयमहोत्सवं यथेच्छं,······उपासरच्च स्वां शय्यां शनैः शनैः······अजानन् आत्मानं अश्रुतत-दादेशेनेव तत् अनपगतेन विश्रामकक्षकपाटतिरोहितदेहेन मूकबधिरेण तेनाल्तमशेन······एभिर्दिनैः कयिपयैः खिन्नेन, अवलोक्यास्वस्थतां स्वामि-

चित्तस्य प्रसादमिव सहसोपगतेन······निश्चलया विलक्षणया दृशाऽवलोक्यमानम् ।

'कथं नोपस्थितः मसूदः······प्रत्यागत एव······सेवायामस्माकम् ?–' पुनरारभत क्रन्दितुं मनस्तस्य···शय्यागतस्य······निमील्य नेत्रे सहसा श्रान्ते पर्यवस्थापयितुमात्मानं प्रयतमानस्य ।

बहु खलु प्रायतत सः······अपेक्षाभंगदुःखात् उद्धर्तुमात्मानम् ।

प्रायतत सः कथयितुं तत्–'कदाचित् मसूदः तस्य स्यादाहतः विजय-पर्यवसितेऽपि तस्मिन् घोरे समरे,······अतश्चासमर्थः आगमनक्षण एव तत्-सेवायां परंपरानुसारं सविनयमुपस्थातुं स्वीकर्तुं च तस्मात् सबहुमानं पारितोषिकं सर्वजनसमक्षम्।'······परंतु······तत् न स्वीचकार तत् कथनं······सूचयत् तत्कालमेव 'यदि स आहतः अभविष्यत्······(–शस्त्रविद्यानिष्णा-तस्य बलिष्ठस्य कठिनतमेऽपि भारतीयेऽभियाने प्रदर्शितरणकौशलस्य तस्याऽऽहतिरेव तादृशे साधारणे बर्बरजनविप्लवे वस्तुतः तस्मै तस्य दूताः नूनमकथयिष्यन्–इति ।

प्रत्युत–आरभत विडंबयितुं तं कथयित्वा उच्चैः······तन्मात्रश्राव्यैः शब्दैरुपहासदुःसहैः–'न बहुमन्यतेऽधुना तव पुत्रः······यौवनमध्यारुढः तव पारितोषिकं इतःपरं,······अपत्रपतेऽधुनाऽनुसरणात् कुमारोचितायाः तस्याः परंपरायाः,······मन्यतेऽधुनाऽऽत्मानं प्रौढं······सर्वकार्यकरणसमर्थं······योग्यं तव सम्राजः पदस्य······स्वामिनं अस्य विशालस्य······तस्यैव सततं वर्द्धमानस्य······साम्राज्यस्य······भाग्याविधातारं चास्यागाधस्यामाय विशालेषु कोषागारेषु बहिरुत्प्लवमानस्य स्वर्णरत्नराशेः,······किं बहुना ?······तवापि ······तवापि ज्वरजराविकलस्य शय्याग्रस्तस्य !–' इति ।

तां तस्य विडंबनामविच्छिन्नाम् अरुंतुदां अप्रत्याख्येयां······आदौ प्रायतत सः प्रत्युत्तरयितुं तर्कैस्तैस्तैः,······असफलस्तस्मिन् विस्मर्तुं तां व्यापारयित्वाऽऽत्मानं कार्यान्तरेषु प्रतिदिनं वर्द्धमानेषु,······निष्फलस्तस्मि-न्नपि······सोढुं निःशब्दम्······सहनमपि परंतु तत् तस्याः क्रमशो बभूव दुष्करतरं कृते तस्य······प्रतिदिनं······प्रतिप्रहरं सेवायां तस्योपतिष्ठद्भ्यः सकौतुकं स्मयमानेभ्यः हर्षं तस्यापेक्षमाणेभ्यः तत्तदधिकारिभ्यः श्रुत्वा वार्ताः तास्ताः······वर्णयतीः मसूदस्य गतागतानि आहोपुरुषिकया ।

तावति विशाले उच्चावचसैनिकनागरिकराजपुरुषसंदोहेऽहर्निशं परिवृत्य तं वर्तमाने न एकमपि स अवलोकयामास समर्थं ऊहितुं भावनास्तस्य······ मनःपीडास्तस्य······चिन्तास्तस्य,······न एकमपि······अर्थात् ऋते तस्मात् अकिंचित्करात् साधारणात् परिचारकात्······अल्तमशात्······तदन्तस्तलावगाहनक्षमया विलक्षणभावया नम्रयाऽपि अनभिनंदनीययेव सहानुभूतिपूर्णयाऽपि तमुपहसत्येव प्रतीयमानया दृशाऽहर्निशं तं······तमेव एकलं······ अवलोकमानात् ।

तस्य च (–विशिष्य तस्यैव–) उपस्थितिं न स सर्वात्मना ववाञ्छ क्षणमेकमपि स्वसंनिधौ······किं पुनः सहानुभूतिम् ?

असंतुष्टा इव तं तथा पीडयित्वा एकं सप्ताहं यावत्······वार्ताः ताः युवराजविषयिण्यः······अथ······आरभत ग्रहीतुं चिन्ताजनकं रूपं······ सूचयन्तीस्तत्पुत्रयोःतीव्रं सशस्त्रं पारस्परिकं संघर्षं प्रतिदिनं समीपतरं समापतन्तं······संघर्षं प्रच्छन्नमपि अवश्यंभाविप्रस्फोटम्, प्रेरयितुं च तं चिन्तायां योग्यस्यावसरस्य तद्हस्तक्षेपानुकूलस्य ।

यावत् परंतु स आतंकितो वृद्धश्चिन्तयति अनुकूलमवसरं······ आकांक्षितमपि आपाततः अकस्मादुपनतमिव दृश्यमानं)······तावत् चिरात् समुपजातसहानुभूतिरिव नियतिः स्वयमेवोपस्थापयामास तं तत्पुरतः सूचयित्वा तं वार्तां सर्वथाऽनपेक्षितां एकस्मिन् सर्वैरपि यवनैः सोत्साहं बहुमानिते पर्वदिने तदभिवंदनार्थमागच्छतस्तत्पुत्रस्य मसूदस्य ।

अवलोक्य तमवसरं तथोपस्थितं क्षणमेकं विस्मितः क्षणमेकं संदिहानस्तत्सत्यत्वे क्षणमेकं किंकर्तव्यताविमूढः······प्रसह्य खलु सः संनिययाम आत्मानं आतुरातुर, उदतिष्ठत् स्वशय्यायाः सोत्साहं, जुगूह ज्वरजराजनितं स्वं वैक्लव्यं, उपाविशत् महार्हे सुखासने विश्रामकक्षवलभ्यभिमुखं स्थापिते, संववार आत्मनो भावोद्रेकं, जग्रहं दक्षिणेन हस्तेन एकं संदेशपत्रं (चिरात् (खलूपेक्षितं), आरभत पठितुमिव तत् ददर्श तत् कम्पमानं स्वे हस्ते, तत्याज तत् सत्वरं, न दधर्ष ततःपरं धर्तुं किमपि स्वहस्ते, अतिष्ठच्च किमपि अकुर्वन्······चिन्तामग्न इव, सुदूरप्रसृतराजधानीशोभां पौर्वाह्णिकीमवलोकयन्निव,······नितान्तशान्तहृदय इव,······उत्प्रेक्षमाणः ससाध्वसं पदरवं स्वाग्रजस्य !

श्रुत्वैव तं······चिरपचितमपि अपूर्वात्मविश्वासभरितत्वाद्वा दर्पोद्रेकदुःखसहत्वाद्वा परबिभीषाप्रेरितत्वाद्वा तस्यापरिचितमिव भासमानं···क्षणमेकं समभावयत् अन्यमेव आगतं सः।······क्रोधेन परिविवृत्सुरेव परंतु शुश्राव अन्यस्मिन्नेव क्षणे यौवनघर्घरमपि सहजप्रत्यभिज्ञेयं स्वरं स्वसुतस्य···स्वाग्रजस्य······चिरादाकांक्षितदर्शनस्य······चिराच्चिन्तितस्य······मसूदस्य······'आदाब अब्बाजान !'—इत्येताभ्यां द्वाभ्यामपि अनुध्वननवशात् अनन्ताभ्यामिव प्रतीयमानाभ्यां······शब्दाभ्यां संपूर्णं विश्रामकक्षं····समस्तं प्रासादं······आपूरयतः मसूदस्य !

पर्यवर्तत च सहसा······अवलोकयितुं मुखं तस्य।

अवलोकयामास च तत् अन्तःप्रविशद्रविकरसंस्पृश्यमानश्मश्रुपाशं······तमेव एकाग्रया दृष्ट्याऽवलोकयत्।······बभूव च स्तब्धः······अर्द्धोत्थापितकरद्वयः······अभिमंत्रित इव।

'अयमस्माकं पुत्रः ?······मसूदः ? मासद्वयपूर्वमेव 'अनुभवतु स्वं विमनायमानं शस्त्रकौशलं'—इति विचार्य इतः प्रेषितो दण्डयितुं प्रजाजनान् यथेच्छं वर्तमानान् पौरस्त्येषु भागेषु साम्राज्यस्य ?'—व्यस्मयत च कतिपयक्षणपर्यन्तम्।······'आम् !······सैव महाप्रमाणा बलिष्ठा शरीरयष्टिः अस्य,······सैव गर्वगुर्वी वीक्षणशैली, सैव च उपहसन्तीव, समस्तं जगत् व्यवहारपद्धतिः !······तत् किमिति······किमिति प्रतिभाति मेऽयं अपरिचित इव।

प्राप च प्रत्युत्तरं स्वयक्षप्रश्नस्य स्वयमेव······'ज्ञातम् !······आत्मप्रत्ययस्यैवायं प्रभावः सर्वः !······एताभ्यां मासाभ्यां सहसोदित अयमेव करोतीमं आजन्मनः परिचितमपि अपरिचितमेव,······ददाति च अस्मै दुष्प्रतिरोध्यं प्रभावम्।······आध्मातोऽनेनैव नायमागतः अयं स्वीकर्तुं अस्माकं प्रसादचिह्नं राजधानीं प्रत्यागतोऽपि।······अवर्तत एतद्दिनपर्यन्तं······अकलंकित इव मर्यादातिक्रमणदोषेण,······निःशंकः,······निराकुलः,······आजगाम चाद्य······इतरेतरजनवत्······बहुमानयितुं नाम एतं पर्वदिवसम्।······(सहसा आकुञ्चितनयनः) परंतु······परंतु······दृष्टिरस्येयं······कापट्यमदृष्टपूर्वं उपेता······सविनयाऽपि स्फुटपरिलक्ष्यमाणौद्धत्योद्रेका······व्यनक्ति नूनं······इमं······अन्वेषयन्तमिव कौतूहलेन मानसमस्माकम् !···(सवितर्कं)

किमिवान्वेषयति अयमस्मासु एवम् ?······हं !······नूनं चिह्नं······क्षुद्रमपि चिह्नं······संसूचकमस्मद्विक्रियायाः······अस्मन्मनोवस्थायाः······एतावता कालेन गुप्तचरैरस्य, अस्मत्सेवामिषेण परितः अस्माकं वर्तमानैः, ध्रुवं अस्मै निवेदितायाः !'

सविषादं स्मयमानश्च मनसि कृत्वा वैचित्र्यं परिस्थितेः······साक्षात् पितापुत्रौ तादृशीं कापट्यपूर्णां नीतिमनुसर्तुं प्रेरयन्त्याः······जगूहाऽऽत्मनो भावनां,······प्रायतत वा तथा कर्तुं,······उत्थापयामासार्द्धोत्थापितं स्वं करद्वयं। बहुमानयन् च तं आशीर्वचनैः (हार्दिकभावनावशाद्वा मुखान्निर्गच्छद्भिः,······अभ्यासवशाद्वा निःसरद्भिः–इत्येतत् तु न विद्मः–) उवाच–'खुदा तुम्हें सलामत रखें' इति······संनियंत्रितेनापि कम्पमानेन तीक्ष्णेन क़फलघर्घरेण स्वरेण।

सहसा लज्जित इव स्वस्वरस्य,······सहसा श्रान्त इव तन्मात्रेण परिश्रमेण चादिदेश तं स्वीकर्तुमासनं स्वसमीपस्थं······व्यग्रत्वात् चित्तस्यावलोकयन्नपि अनवलोकयन् तं तस्मिन् आसने······तदादेशात् पूर्वमेव······उपविष्टम्।······परिहरंश्च दृष्टिमेलनं यावच्छक्यमास्त सह तेन कथाः तास्ताः क्षुद्रविषयसंबद्धाः कुर्वन्······अधृष्णुवन् स्प्रष्टुं परंपरासंबंधेनापि चिरसंकल्पितं विषयम्।

कथासु तासु अनायासमेव सहभागित्वमकुर्वत तत्पुत्रः······दृष्ट्या स्थिरयाऽऽननं स्वजनकस्यावलोकयन्······प्रयत्नान् दुर्बलान् तस्य परिहर्तुमभीप्सितं विषयं उपहसन्।

तं तस्योपहासं······निःशब्दतयाऽरुंतुदतरं······सोढुमधिकतरमसमर्थ इव······अन्ते······स वृद्धः······अकस्मात् स्मारिते इव विस्मृतप्रायस्य (–वस्तुतः प्रतिक्षणं स्मर्यमाणस्य–) गौणस्य (–वस्तुतः प्रधानतमस्य–) विषयस्य······सहसा उज्जगाद।

'या इब्नी !'

न प्राप किमपि प्रत्युत्तरं······परंतु स्वपुत्रात् सहसा सावधानात्।

'कल्पयामः······एभिर्दिनैः······अस्माकं स्वर्गारोहणकालमासन्नकल्पं······वयं······देशदेशान्तरेभ्यः आगतैः भिषग्वर्यैः उपचर्यमाणा अपि'–पूरयामास स्वं वाक्यम्।

न परंतु प्राप किमपि प्रत्युत्तरं स्वपुत्रात् मार्जारदृष्ट्या तं निरीक्षमाणात् ।

खिन्न इव चाप्राप्य किमपि प्रतिवादवचनमिव······सान्त्वनाप्रदमिव··· प्रयुत्तरं तस्मात्······अग्रे जगाद······प्रतिहतगतिरिव शनैः शनैः–'अपि नाम ······आयुष्मता किंचिच्चिन्तितं विषये (हस्तेन कंपमानेन विनिर्दिश्य विहंगमं दृश्यं बाह्यम्) अस्याऽस्माकीनस्य साम्राज्यस्य···दिवंगतेषु अस्मासु ?'

'नान्यत् किंचिदपि चिन्तितम्'–सहसा प्रतिरुरोध तस्य पृच्छां क्षिप्रकठोरमुत्तरम् ।

'इयदासीत् तदुत्तरं अनुत्प्रेक्षितं······स्पष्टं······सहजमिव च प्रदत्तं······ यत् श्रुत्वा तत् बभूव स वृद्धः······अविस्मेरशीलत्वेन विख्यातः······प्रत्युत्पन्नमतिः यवनराजोऽपि सहसा विस्मितः······हतप्रभः,······आस्त च कतिपयक्षणपर्यन्तं विलुप्तवाक्······विस्फारिताभ्यां लोचनाभ्यां पुत्रमुखमेवावलोकमानः······ईषद्विवृतमुखबिलः ।

हठाच्च प्रकृतिमापादितः सहसोदितयाऽऽशंकया······रहस्यभेदिनां उपस्थितिं सूचयन्त्या,······व्यापारयामास दृष्टिं स्वां आसमन्तात्,······नापारयत द्रष्टुं कमपि सेवकब्रुवं श्रोतुं तयोः प्रेमस्निग्धं (!) संभाषणं अभितस्तौ केनापि मिषेण विचरन्तं,······न शशाक परंतु मोचयितुमात्मानं आशंकायाः तस्याः पाशात् ।

बलादाकृष्ट इव च स्वसंमुखीनस्य दृष्ट्या स्थिरया······भावनाक्षोभं तस्यावलोकयन्त्या, आशंकां तस्योपहसन्त्या······बभूव अन्ते तदभिमुखः, पप्रच्छ च मन्द्रतरेण स्वरेण 'किं नाम चिन्तितम् ?'

'एतदेव यत्······संचाल्यमानं कुशलतराभ्यां, संरक्ष्यमाणं सबलतराभ्यां हस्ताभ्यां······कियत् उन्नततरं शिखरं वैभवस्य सामर्थ्यस्यचाऽऽरुढं एतद्भवेत्–इति'–अधिजगाम च निर्दयमुत्तरं एतत् तस्मिन्नेव क्षणे ।

'त्वद्हस्त सदृशाभ्यां ?' पप्रच्छ सकुत्सं यवनराजः······मर्माहतः ।

'मद्हस्ताभ्यां'–प्राप च निःसंकोचं प्रत्युत्तरम् ।

'हं !'–कतिपयक्षणपर्यन्तं मुषितवाक् उवाच सः······आकुंचितलोचनः फेनिलमुखबिलः,······विस्मरन् क्रोधावेशवशात् आत्मनैव पूर्वनिर्द्धारितं संभाषणव्यूहम् ।······'हं !······मन्ये तर्हि त्वं सर्वमेतत्···अस्माकं साम्राज्यं

······हस्तयोस्तवैव पतिष्यति इति ?'

'कस्य तर्हि······अन्यथा ?'–शुश्राव च तदुत्तरम् ।

श्रुत्वा तत् हतबुद्धिः······वृद्धः क्षणमेकं व्यस्मयत–'अपि एतत् सर्वं······दुःस्वप्नं······मां प्रतिनिशं पीड्यतामन्यतमम् ?–इति ।

अवलोक्य परंतु वातायनात् पार्श्ववर्तिनः अतिदूरं वर्तमानं यवनप्रार्थना-मन्दिरशिखरं स्वर्णमण्डितं माध्यन्दिने आतपे चकासमानं, निशम्य वाद्यः-प्रसृतायाः राजधान्याः······तस्य राजधान्याः······उद्गच्छन्तं, समुल्लसदु-ल्लोलफेनिलसागरघोषमनुकुर्वाणं, स्वस्वकार्यसंलग्ननागरिकजनकोलाहलं व्यपगतशंकः······व्यापारयामास बलादिव स्वां दृष्टिं कक्षान्तः······अवश इव च निगडयामास तामानने संमुखीनस्य पुरुषस्य···आत्मानं तदात्मजत्वेन ख्यापयतः,······पप्रच्छ च–'तर्हि······तर्हि न त्वं मन्यसे स्वभ्रातरं······स्व-सहजं······मुहम्मदं······तदर्द्धभागिनम् ?

'अपि नाम कोऽपि अमन्यत स्वसहोदरं······तथा ?'–शुश्राव च प्रतिप्रश्नम् ।

परंतु······परंतु······न्यायोचितं तु तदेव !'–प्रायतत सः विवदितुम् ।

'अपि नाम कोऽपि आद्रियेत न्यायोचितं परिस्थितिषु एतासु ?'–विर-राम सः प्रयत्नात् तस्मात् आकर्ण्य एतदुत्तरम् ।

आदरः न्यायोचितस्यावश्यं करणीयः···त्वया'–प्रायतत स उद्बोधयितुं गभीरेण (अर्थात् आहृतगांभीर्येण) स्वरेण ।

'अपि नाम······भवता स्वयं कृतः ?'–बभूव च सहसा निरुद्धवचनः आकर्ण्य इमं प्रतिप्रश्नम् ।

इयान् तीव्रःसमुदभवत् क्षोभः भावनानां मनसि प्रश्नं प्रतिप्रश्नं पृच्छतोः तयोः······अनुपदमेव······यत् व्याप सः निर्द्वंद्वः वातावरणं तस्य कक्षस्य कतिपयक्षणपर्यन्तम्···स्खलयन् हृदयस्पन्दितानि न केवलयोस्तयोः प्रकटयोः ······अपि तु–कर्णागतप्राणानां तदनुचराणामपि अप्रकटानाम् ।

'लप्स्यसे,······लप्स्यसे······फलमस्यौद्धत्यस्य'–कण्ठोपमर्दं निष्पीड्यमान इव घर्घरस्वरमस्फुटाक्षरं जगाद······चिरात्······यवनराजः ।

'कथं नाम'–अनुपदमेव चाकर्णयामास पृच्छाम् ।

'दास्यामि !······दास्यामि सर्वमपि साम्राज्यं······मुहम्मदाय !'–

चुक्रोश च उच्चैः स्वरं······श्रावयन्निव तस्य प्रजाजनान् ।

बभाज परंतु मूकतां क्षणान्तर एव······हृतबुद्धिः······निशम्य····'पिताऽपि भवतः······स्मरामि किंचित् किंचित्······अदात् तस्य राज्यं भवतः सोदराय ईसाईलाय ।······न किम् ?' इति सोपहासां पृच्छाम् ।

अनुत्तरयंश्च तां (—नासीदेव हि तस्य समीपे किमप्युत्तरं तस्याः—)····दहन्निव तमंगारोपमया दृष्ट्या पप्रच्छ—'तत्······त्वम् एतत् सर्वं लप्स्यसे······शस्त्रबलेन !'

'लप्स्ये स्वयोग्यताप्रभावेण !'

'सेनाऽस्माकं नैव ग्रहीष्यति तव पक्षम् !'

'सेनाऽस्माकं ग्रहीष्यति मम पक्षम् !'

'किमिति ?'

'वीरः वीरं हि आद्रियते ।······(क्षणमेकं विरम्य) नूनं भवानेव एतत सत्यं मह्यं अनेकदा अकथयः ।'

'परंतु—आज्ञामस्माकं मनसि कुर्वाणा नैव उत्सहिष्यते कर्तुं तथा ।'

'मृतस्य स्वामिनः अपेक्षया जीवितस्य तस्याज्ञायाः परिपालनमधिकतरे श्रेयसे—इति सनातनं सत्यं मनसि कुर्वाणा······निःसंशयं उत्सहिष्यते कर्तुं तथा ।'

'तर्हि······मन्यसे त्वं······मृतेषु अस्मासु······सेनाऽस्माकमवधीरयिष्यति अस्माकमादेशं लिपिबद्धम् ?······दृढं मन्यसे ?······आम्—दृढं मन्यसे !····(सहसाऽऽकुञ्चितनयनः) कुतः खलु एतद्दाढ्र्यम् ?······कुतः खलु ?······(सहसा उन्मत्त इव विहस्य)······आः ज्ञातम् ! (सहसा क्रोधावेशवशात् तर्जयन् स्वसंमुखीनं कम्पमानया तर्जन्या)······त्वया······त्वया······अभियानात् सद्य आगतेन······तिरस्कृत्य जनापवादभयं वशीभूय च दुर्दमनीयायाः राज्यलिप्सायाः······दूषिताऽस्माकं सेना उपजापविषेण ।······अरे नीच !······यं खलु अपायं सेनाया मम······अस्माकं······अस्मत्प्रत्यर्थिनोऽपि······ते मूर्तिपूजका अपि······कर्तुं न शेकुः······तत्यजुश्चासंभवनीयमिति······तं······त्वं······साक्षादस्माकं पुत्रः······अस्माभिः उत्साहेन महता शस्त्रकलायां गूढनीतौ च दीक्षितः शिक्षितः······कर्तुं दधर्षिथ !······नरा/धम !······दण्डयिष्यामि त्वामहं प्राणदण्डेन······घातयिष्यामि त्वाम् अहं सैनिकैरेव

मदीयैः मदाज्ञानुसारं पाषाणखण्डान् निरंतरं वर्षद्भिः ।'

'न भवान् करिष्यति किमपि तथा !'

'किमिति ?'

'भवान् मम पिता—इति।······न खलु बहु मन्येत सेना काऽपि प्रियं स्वं नेतारं······एवम् आदिशन्तम्—इति च ।'

'अपसर !····अपसर अस्मत् पुरतः, नराधम !'—उच्चैश्चुक्रोश स वृद्धः आरभत चापशब्दवर्षां कदाचिदपि तस्य मुखात् न प्रत्याशिताम् ।

इयान् तीव्र आसीत् तस्य क्रोधावेशः विविधभावनाकल्लोलसंकुलः यत् वशीभूतस्तस्य स वृद्धः न मनसि चकार संमुखीनस्याविचलितस्य वाक्यं—'आदाब अब्बाजान !' इति तत्प्रस्थानसंसूचकं, न वाऽक्षिलक्ष्यीचकार तस्य कक्षात् तस्मात् दृढपदैः प्रस्थानाम्······अवातिष्ठत् कतिपयक्षणपर्यन्तं······दूषयन् रिक्तरिक्तं तं कक्षमपशब्ददुर्गंधेन ।······अन्ते तस्य सः परिचारकः ······अलृतमशः······(निर्विकारमुखमुद्रः—) तत् समीपे उपससार···अनयच्च तं श्रान्तं······सहसा विलुप्तावेशं······सहसा विगलितधैर्यं······शय्यासमीपं धृत्वा दण्डे ।

शायितस्तेन तस्यां······अपिबत् सः निष्प्रतिरोधं मदिरासमं किमपि पेयं (—स्यान्नाम औषधं किमपि वैद्यवर्यैः प्रदत्तम् !—) तेन परिचारकेण प्रदत्तं,······शनैः शनैश्च ममज्ज दीर्घायामपि नातिमनःशान्तिप्रदायां तंद्रायां दुःस्वप्नबहुलायां प्रहरमेकं······तस्मिन् पर्वंदिवसेऽपि अस्नातः······अनलंकृतः अनाहारः ।

कियन्तं कालं यावत् स एवं अवास्थास्यत······जीवन्मृत इव······यदि हि तस्य स एव सेवकः (नान्यः कोऽपि सेवकः हि दधर्ष उपसर्तुं तं तन्मनोवस्थं तस्मिन् दिवसे—) न तत्समीपे उपासरिष्यत्,······न तं दीर्घदीर्घं अवालोकिष्यत, असूचयिष्यत च तं चेष्टितभाषया आगमनं तस्य प्रासादे राजकुमारस्यान्यस्य······मुहम्मदस्य······इत्येतत् नूनं कठिनं वक्तुम् ।

प्राप्य तां सूचनां तस्मात्······आदौ विस्मितोऽपि अवलोक्यात्मानं स्वे विश्रामकक्षे तथा शयानं, ततः उदासीनोऽपि साक्षात्कृत्य वास्तविकीः परिस्थितीः, ततश्च 'अस्याः जागरणावस्थायाः अपेक्षया तु इष्टा आसीत् सा, आदौ दुःस्वप्नबहुलाऽपि पश्चात् शनैः शनैः विन्यस्य प्रशासनभारं संपूर्णं

मुहम्मदे, सह मसूदेनाज्ञापालनतत्परेण पौरस्त्यानां वंगादीनां भारतवर्ष-भागानां नराधिपानां पराजयं कुर्वन्तं मां दर्शयित्वा सुखं दातुं प्रवृत्ता, सा निश्चितं तंद्रावस्था एव'–इति विचार्य खिन्नोऽपि······सः······कृताकारगूहनः ······अन्वजानात् आगमनम् अपरस्याऽऽत्मजस्य······शय्यागत एव ।

'हं !······स्यान्नाम तत्······आपाततः······पर्वदिवसेऽस्मिन् अस्मत्-सेवायां स्वप्रणामसर्पणरूपं सामान्यम् !······' सावज्ञं तर्कयामास सः······ 'वास्तविकं प्रयोजनं तु स्यात् अन्यदेव,······(सकुत्सं)······अस्मन्मनःस्थिति-पर्याकलनमेव ।'

'परिचारकेषु आस्माकीनेषु तेन तेन व्यपदेशेन प्रवेशितानां स्वगूढ-पुरुषाणां माध्यमेनाधिगम्य समाचारं (–विषण्णं विहस्य–) एतावता कालेन सार्वजनिकं, अद्यतनस्य प्रातःकालिकस्य पितापुत्रसंभाषणस्य समुपजात कौतूहलः······आगच्छति नूनं सः शृगालधूर्तः······ज्ञातुमस्माकमिदानींतनीं मनोवस्थां, कर्तुं च तां स्वानुकूलाम् । (अवज्ञादुःसहं) आगच्छतु क्षुद्रः तर्हि······करोतु च प्रयत्नं यावच्छक्यम्······वयन्तु-यदेव हितकरं कृतेऽस्य साम्राज्यस्य······तदेव करिष्यामः ।'

'परंतु······एतत् 'हितकरं' किं स्यात् ?······शिथिलं प्रशासनम् ? उत निरन्तरयुद्धव्यापाराकुलाकुलं दैनंदिनं जीवनम् ?–इत्येतदेव तु विनिश्चेतुं न शक्नुमः······यदि नाम'–इति विचारसंप्रवृत्त एव च शुश्राव पदरवं स्व-सुतस्यः······श्रुत्वैव तं चिरपरिचितं, आत्मविश्वासाभावपीड्यमानमिवा-स्पष्टास्पष्टं, औत्सुक्यातिरेकत्वर्यमाणं, क्षणमेकमनुबभूव जुगुप्साभावं तीव्रम् ······स्मारितः हठात् अन्यस्य पदरवस्य······तस्यैव दिवसस्य प्रारंभे श्रुतस्या-पूर्वात्मविश्वाभरितस्य दर्पोद्रेकदुःसहस्य परिबिभीषाप्रेरितस्य······तोलयामास तं तेन······नुद्यमानश्च सहसा समुद्भूतेन 'नायं······नायं पदरवः उचितः कृतेऽधीश्वरस्यास्य यवनसाम्रज्यस्य'–इत्याक्रोशेन स्वमनसः प्रावर्तत निषेद्धुं तत्प्रवेशं कक्षान्तः······निमित्तीकृत्यास्वास्थ्यमात्मनः अतिदुर्बलस्यः······न तु शशाक कर्तुं तथा······निवारित इव तत्क्षणमेव कर्णपथे समापतितेन स्त्रीकोमलेन तत्प्रीणनातुरेण स्वरेणाऽऽगन्तुकस्य······'आदाब अब्बाजान ! ······आदाब अब्बाजान । इति प्रणामान् स्वान् तत्सेवायां समर्पयतः ।

न शशाक परंतु······बहु मानयितुमपि प्रणामान् तस्यागन्तुकस्य कतिपय-

क्षणपर्यन्तं……समुद्घाट्य स्वेऽनुभूतविश्रान्तिसुखेऽपि पुनर्निमीलनातुरे आतप्ते इवारक्ते नेत्रेऽवलोकमानोऽपि आननं तस्य,……मनसि कुर्वाणः वैसादृश्यं तस्य प्राक्तनात् आगन्तुकात्–'यावान् भिन्नः पदरवः अस्य पदरवात् तस्य……तावानेव स्वरः……तावानेव व्यवहारः, तावानेव च प्रभावः,…… आत्मविश्वासभावपीड्यमानः आत्मविश्वासभरितात्, स्त्रीकोमलः पौरुष-दुःसहात्, पर प्रीणनातुरः परतर्जनात्, परहृदयजिगीषोत्सुकः परोपमर्दकात् ।

बलाद्वशीकृत्य च स्वं एवंविधतुलनानिष्ठुरं मानसं, स्वीकृत्य तस्याभिवादनं कथमप्युत्थाप्य स्वं हस्तं……स आदिदेश तं……अवनमय्य स्वं मस्तकं तदादेशं प्रतिपालयन्तं, ग्रहीतुमासनं, तत्सोदरेण कतिपयप्रहरपूर्वमेव गृहीतं,……मीलयामास च स्वां दृष्टिं, तावता कालेन निस्तंद्रां, सह तस्य दृष्ट्या तावत्कालपर्यन्तं छद्मना तन्मुखभावस्व निरीक्षणे व्यग्रया, धूर्तया मिलनक्षण एव (–स्यान्नाम स्वमनोभावप्रकटनभीतया !–(नम्रीभूतया ।

आरभत च……कर्तुं तास्ताः कथाः……क्षुद्रविषयान्तरसंबद्धाः…… अनिच्छन् स्प्रष्टुं परंपरासंबंधेनापि चिरसंकल्पितं विषयम् ।

कथासु तासु सायासमेव सहभागित्वमकुर्वत तत्पुत्रश्च……दृष्ट्या चंचलयाऽऽननं स्वजनकस्यावलोकयत्……तम् अभीप्सितस्य बिषयस्य चर्चायां आतुरेण हृदयेन वाञ्छन् ।

तत् तस्यावलोकनं……निःशब्दामपि मुखरां……सोढुं अधिकतरं असमर्थ इव……अन्ते……स वृद्धः……अकस्मात् स्मारित इव विस्मृत-प्रायस्य(–वस्तुतः प्रतिक्षणं स्मर्यमाणस्य–) गौणस्य (वस्तुतः प्रधान-तमस्य–) विषस्य……सहसा उज्जगाद–

'या इब्नी !'

न प्राय किमपि प्रत्युत्तरं स्वपुत्रात्……सहसा परां काष्ठामातुरताया आरूढात् ।

'कल्पयामः एभिर्दिनैः……अस्माकं स्वर्गारोहणकालमासन्नकल्पं…… वयं……देशदेशान्तरेभ्य आगतैर्भिषग्वर्यैरुपचर्यमाणा अपि'–पूरयामास च स्वं वाक्यम् ।

'खुदा न करें !'–सहसा उन्नमय्य स्वौ सुकोमलौ अबलोचितौ आरक्त-तलौ करौ……कम्पमानेनेव स्वरेण सहसाऽऽह तत्पुत्रः……अर्द्धमीलितनेत्रः ।

तिरस्कुर्वन्निव तत् आहार्यं सांत्वनाप्रबंं तदीयं·····अग्रे जगाद यवन-राजः·····अप्रतिहतगतिरिव···'अपि त्वया किंचिच्चिन्तितं विषये (—हस्तेन कम्पमानेन विनिर्दिश्य विहंगमं दृश्यं सायंतपनतापोद्भास्यमानं बाह्यं) अस्यास्माकीनस्य साम्राज्यस्य·····परिस्थौ तस्याम् ?'

'कथं·····कथमिव सत्सु तातपादेषु उत्सहेय कर्तुमेवं ?'—सहसा प्रति-रुन्धन् इव तस्य पृच्छां आह सविनयं तस्य सः तनयः ।

इयदासीत् तस्य तदुत्तरं कृत्रिमं·····परपिप्रीषातुरातुरं·····यत् श्रुततत् बभूव सः वृद्धः (—नितान्तं परिचितः तस्य राज्यप्राप्तिसमुत्सुकस्य प्रयत्नै-र्गूढैः—) चाटुप्रियत्वेन विख्यातः सः यवनराजोऽपि···घृणातिरेककटुमुखास्वादः ···आस्त कतिपयक्षणपर्यन्तं स्तब्धः·····विलुप्तवाक्···प्रयतमानः नियन्तु-मात्मानमपसारणात् तस्य स्वपुरतः सेवकहस्तैः ।

बलात् प्रेरित इव च जिज्ञासया इयत्तायाः स्वसंमुखीनस्याधोमुखस्य परवंचनाचातुर्याः, अन्ते नियमामात्मानं, पप्रच्छ च सानुकंपेनेव स्वरेण—'न बुद्धिपुरःसरं,·····न सप्रयासम् ।·····परंतु·····प्रसंगवशात्·····अजानताऽपि अनिच्छताऽपि तातेन·····चिन्तितमेव स्यात् !···तत् किमिव चिन्तितम् ?'

'एतदेव यत्—संचाल्यमानं तातपादप्रदर्शितया रीत्या·····स्थास्यति शिखरे वैभवस्य·····इदानींतनस्य'—अधिजगाम च मन्द्रतरमुत्तरं तस्मात्··· चिरादिव ।

'हं !'—अवलोकयन् सतिरस्कारं तस्य प्रस्वेदबिन्दुतारकितमिवाऽऽ-रक्तगौरं कज्जलकृष्णमृदुलश्मश्रुपाशमनोहरं मुखं,·····पप्रच्छ च पुनः—'संचाल्यमानं केन ?'

'उत्तराधिकारिणा तातपादानां' प्रापास्फुटास्फुटमुत्तरम् ।

'केन उत्तराधिकारिणा ?'

'तातपादैः नियुक्तेन—'

'हं?·····मन्यते तर्हि तातः·····अस्माभिः नियुक्त एवोत्तराधिकारी··· संचालयिष्यति सर्वमेतत् इति ?'

'अथ किम् ?'

'न शंकते तत्र·····लेशतोऽपि ?

'न ।'

'नोत्प्रेक्षते तातः……यत् नियुक्तोऽपि अस्माभिः…अस्माकम् उत्तराधिकारी……दिवंगतेष्वेवास्मासु……कदाचित् स्थानात् प्रसह्य दूरीक्रियेतान्येन–?'

'कथं……कथं खलु शक्यमेतत्……सत्सु तत्र बलेषु तातपादादेशविज्ञेषु ?'–असंभवनीयदुरुत्प्रेक्षाचकित इव उज्जगाद तस्य पुत्रः……सहसा उन्नमय्य स्वशिरः।

'हं !……सत्यमेव अयं वराकः न जानाति सनातनं स्पष्टतमं सत्यं… अस्य साक्षात्सोदरेणाद्यैव प्रातः प्रोक्तं–'मृतस्य स्वामिनः अपेक्षया जीवितस्य तस्याज्ञायाः परिपालनं अधिकतरे श्रेयसे मन्यते बलम्'–इति,–समुदभवत् मनसि तस्य……लोचमानस्य चिरात् खलु तन्नेत्रनिगडितयोः तस्य नेत्रयोर्भावं आश्चर्यस्य दुःशंकातिमिरस्य च घनस्य।

अवाञ्छन्निव तमधिकतरं उद्वेजयितुं–परिवर्तयामास च विषयम्–'आम् !……बलानि अस्माकं आदेशं बहु मानयन्ति नूनं विनाशयिष्यन्ति संभावनां तादृशीम् !'

उद्विजत च मनसि–दृष्ट्वाऽऽश्वासं तन्नयनयोराविर्भवन्तं–'कियान् मृत्पिण्डबुद्धिरयं……अर्भकमतिश्च'–इति चिन्तयन्।

'न उत्प्रेक्षते तातः……यदस्य साम्राज्यस्याहिताः……पुनरुत्थापयिष्यन्ति स्वां फणां……दिवंगतेष्वेवास्मासु इति ?'–पप्रच्छ च कतिपयक्षणानन्तरं……अवलोकयन् वा तायनाद्बहिः…रथ्यासु दीर्घदीर्घासु क्रमशः आविर्भवन्तीं दीपमालाम्।

'तथा दण्डिताः……तथा मर्दितास्तातपादैः न धर्षिष्यन्ति कर्तुं किमपि तादृशं कुचेष्टितं कदापि'–शुश्राव च सगर्वमिव तदुत्तरम्।

'न साक्षात्करोति यत्–'अहितास्तथा दण्डितास्तथा मर्दिता अपि तातपादैः' अवश्यं धर्षिष्यन्ति कर्तुं तादृशं……ततोऽपि भीषणतरं……कुचेष्टितं, ……तदपि संवत्सराभ्यन्तरमेव'–चिन्तयामास सः……शनैः शनैस्तस्मादुद्विजमानः।

'किमाह विशेषणं समुद्दिश्यैनं……अपरः……अद्यैव प्रातः ?' प्रायतत च स्मर्तुम्।……'आम् !……'स्तनंधय' इति।……सत्यमेवायं स्तनंधयः।

'यदि नाम मन्यते तातः……साम्राज्यमेतद्विशालं बलाढ्यं समृद्धं

चाहितेभ्यः······तर्हि······किमिव कुर्यात् अस्माकं उत्तराधिकारी उपकर्तु-मेतत्'—पप्रच्छ च सकौतूहलम्

'तातपादैः प्रदर्शितया रीत्या एतत् प्रशासन्,······तातपादैः प्रदर्शितया पद्धत्याऽस्य प्रजाजनान् शिक्षयन्,······विनिर्दिष्टया दिशा विद्वद्रत्नसंग्रहं कुर्वन्······तातपादैः संसूचितया—'

'न तु तातपादैरसकृदनुसृतया रीत्या दिग्विजयं कुर्वन् ?'—सकुत्सं पप्रच्छ सहसा यवनराजः,···असहमान इव तां 'तातपाद'—परंपरामनन्ताम् । ······अवलोकयामास चोपहासक्रूरं······वदनकमलं (—सत्यमेवासीत् तद्-वदनं कमलकोमलं तस्यैतस्य पुत्रस्य !—) संमुखीनस्य······निरुत्तरं······ हठात् व्यगतप्रभमिव निःश्रीकं······म्लानम्लानम् ।

असहमान इव चाधिकतरं सोढुमुपस्थितिं तस्य स्वपुरतः अन्वजानात् तं प्रासादं स्वं निर्वर्तितुं हस्तेंगितमात्रेण ।······अपश्यच्च तं······मुक्तमिवा-ग्निपरीक्षायाः सत्वरमुत्थाय स्वादासनात्, प्रणम्य तं कथमपि, अपसृत्य तत्समीपतः अपराङ्मुखमेव······अदर्शनं गच्छन्तं······'दर्शनं तातपादानाम-भीष्टसिद्धये भविष्यति, न वा' इत्यनुमातुमसमर्थं,······अधोनिगडितनेत्रम् ।

'तत्र गच्छति······(सविषण्णस्मितं) औरसः पुत्रः···अस्माकं साम्राज्य-मेतत् उत्तराधिकारत्वेन कामयमानः······स्वसोदर इव नितान्तं तदर्थम-योग्यः ! कियान् भिन्नोऽयं स्वसोदरात् !······स खलु अत्यधिकशारीरिक-बलप्रमत्तः अयं चाबलानिर्बलः······स खलु अविमृश्यकारी, अयं च विमर्श-मात्रकारी······स खलु साम्राज्यं निखिलं प्रसह्य परिवर्तयितुं परिवर्द्धयितु-मातुरातुरः, अयं च यथास्थितिसंतुष्टः,······स खलु सैनिकैरुच्चावचैः प्रकटं बहुमानितः, अयं च 'स्त्रीकोमल' इति गूढमुपहसितः,······स खलु प्रसह्यकारी इति साशंकं नागरिकैरधिकारिभिरवलोकितः, अयं च सस्नेहप्रशासन इति प्रशंसितः ।'

'कुत इवाऽऽगतं स्यात् इयद्वैलक्षण्यं मध्येऽनयोः भ्रात्रोः सममेव जा-तयोः ?'—व्यस्मयत सा······उत्थाय सनिःश्वासं स्वशय्यायाः नातिस्थिरैः पदक्षेपैर्गच्छन् दिशि वलभ्याः······सद्यरानीतसायंदीपप्रकाशिताभ्यन्तरस्य तस्य कक्षस्य······अधिजिगमिषुरिव उत्तरस्यास्य प्रश्नस्य तारकापुञ्जात् तेजस्विनः पौरस्त्ये नैशे क्षितिजे कज्जलकृष्णे सद्य उदितात् ।

चिरं खलु स अस्थास्यत् वलभ्यां······व्यापारयन् स्वां श्रान्तां ज्वरोत्तप्तां दृशम् उपरि आ दिगन्तमधःप्रसृतायाः असंख्यदीपालोकालोकितायाः स्वस्वकार्यव्यापृतायाःराजधान्याः······यदि तस्य सः परिचारकः······अल्तमशः······निःशब्दमुपसृत्य तं, निरीक्ष्य तस्य मुखं क्षणमेकं······न तम् इंगितैरसूचयिष्यत् आगमनं एकस्य गूढपुरुषस्य भारतवर्षात् ।······सूचितस्तु तथा······स······व्यपगतदौर्बल्य इव सत्वरं प्रतिन्यवर्तत कक्षाभ्यन्तरे,······ आदिदेश च तं निवेदयितुं स्वं संदेशम् ।······श्रुत्वा परंतु तं पाञ्चनदप्रदेशाधिकृतेन तत्प्रतिनिधिना संप्रेषितं तत्रत्यविद्रोहस्फोटसंभावनासंसूचकं······ सहसा आक्रम्यत दौर्बल्येन द्विगुणितेन······दुर्ललित-बालक इव सदैवाशान्ततृष्णः······अधिकाधिकं भागं तस्य विशालस्य समृद्धस्य देशस्य (–अविगणय्य स्वं सामर्थ्यं–) लुण्ठितुमातुरातुरः······स अपेक्षते स्म तदनुकूलं कमपि समाचारम् । निशम्य परंतु तद्विपरीतं सहसा खिन्नः······आरभत अनुभवितुं न केवलं दौर्बल्यमधिकतरं,······अपि तु संतापमपि······'कर्णोपकर्णिकया आकर्ण्यैव वार्तां अस्माकमस्वास्थ्यस्य उद्वृत्तान् पांचनदान् इमान् ······(सकृत्सस्मितं)······उपेक्षते एकः विजितानिति ईहते च जेतुमन्यानपि, ······मन्यते च द्वितीयः हतोत्साहान् शोष्यानिति च,'–अतप्यत सः विचारेण अनेन ।

असंतुष्ट इव दत्वा तस्मै तावतीः मानसिकीः यातनाः······सः पर्वदिवसः सर्वैरपि यवनैः निरपवादं सोत्साहं बहु मानितः,······समाप्तप्रायोऽपि सोत्साह इव······समुत्थापयामास तत्सेवायां नवीनतरां यातनासामग्रीः······तदनुपदमेव ।······आनयामास तत्पुरतः निशीथे गूढपुरुषमन्यं उद्वृत्तसेल्जूकपरिपीड्यमानात् पैतृकराज्यभागादागतम्······विज्ञाय हि तस्मात् समाचारान् यथेच्छाचरणस्य······तेन स्वयमसकृद्दण्डितानामपि अशान्तानां, प्राप्ते एवावसरे तदाधिपत्यमविगणयतां, निर्दोशान् प्रजाजनान् तदीयान् लुण्ठतां, अन्यानपि उद्दण्डान् तथा कर्तुं प्रोत्साहयतां......सेल्जूकानां ······तथा बभूव हतोत्साहः······यथा समुत्सृज्य तं श्रावितसमाचारं हस्तेंगितमात्रेण,······चिरमतिष्ठत् मूर्तिवन्निश्चलः······दीपशिखानिगडितनेत्रः ।

अन्तिमे प्रहरे च तन्निशायाः उत्थाप्य तदासनात् नीयमानः दिशि शय्यायास्तेनाल्तमशेन······आरभत प्रकटयितुं स्वां मनोवेदनामस्फुटप्रायैं

कफघर्घरैः शब्दैः……'हं !……अस्माभिः खलु……बहोः कालात् प्राक्……
एते सेल्जूका……बर्बरा अपि, चञ्चलस्वभावा अपि, निरन्तरभ्रमणशीला
अपि, प्रकृत्या उद्वर्तना अपि……'तुरुष्का' इति महत्याऽऽस्थया आनीताः
पर्यवस्थापिताश्चासन् अस्माकं पैतृकराज्यस्य……'शनै शनै सभ्यतामुपपन्नाः,
स्थिरीभूतस्वभावाः, संयमितस्वभावाः उपकरिष्यन्ति नूनं वर्धिष्णु अस्माकं
साम्राज्यं प्रयच्छ शूरान् निर्भीकान्'– इति चिन्तयद्भिः……न तदा
लेशतोऽपि उत्प्रेक्षितमासीदस्माभिः यत्–बहुविधमुपकृता अपि, असकृत्
शिक्षिता अपि, न केवलं न ह्रास्यन्ति स्वं बर्बरत्वं, स्वं चाञ्पल्यं, स्वमुद्वर्त-
नम्……अपि तु पीडयिष्यन्ति अस्मानेव……सामदामोपायान् अस्माकं
दौर्बल्यसंसूचकान् मन्यमानाः……ध्रुवं मन्यामहे,……अल्तमश !……ध्रुवं
मन्यामहे–एते खलु विनैवाधिकतरं विलम्बं उन्मूलनीयाः समूलं निरपवाद-
ञ्च……अन्यथा……अन्यथा……एते स्यमेवोन्मूलयिष्यन्ति,……धत्तुरचय
इवाऽऽरामं शोभनम्……एतत् साम्राज्यमस्माकं……लब्ध्वैव तदनुकूलम-
वसरम्'–इत्यादिभिः ।

मनोगतां वेदनां तस्य तां मूकबधिरस्य परिचारकस्य पुरस्तादेवं प्रकट-
यतस्तस्य वृद्धस्य क आसीत् उद्देशः–एतत्तु न विद्मः ।

विद्मः परंतु यत् प्रकटय्य तां……सः निःसंशयमलभत (–स्यान्नाम
आंशिकं,……स्यान्नाम तात्कालिकम्–) उच्छ्वासं चिन्तापूरात् ।

शशाक हि सः निद्रातुं तदनुपदमेव ।

अस्ति केषांचिन्मतं–यत् प्रभाव आसीत् सः शय्यागताय तस्मै तेन
निर्विकारमुखमुद्रेण परिचारकेण प्रदत्तस्यातितीव्रप्रशमनस्वभावस्य अन्ततो-
गत्वाऽपायकरस्यौषधस्य कस्यचित् ।

तत् परंतु मन्यामहे–कुत्साविलसितमेव ।

## षोडशः परिच्छेदः

अथवा—न कुत्सामात्रविसितम् ।

अपरेद्युर्हि······यदा गगनमध्यमारुरुक्षौ दिनमणौ सः जजागार तस्याः निद्रायाः······तदा न शशाक उन्मीलयितुमपि स्वे लौहाच्छादनाच्छादिते इव जडे स्वे नेत्रे कतिपयक्षणपर्यन्तं,······महता प्रयासेन उन्मीलितनेत्रोऽपि न शशाक आकलयितुं याथार्थ्यं स्वपरिस्थितेश्चिरं, कथमपि आकलितपरिस्थिति-याथार्थ्योऽपि नानुबभूव लेशतोऽपि शारीरिकं मानसिकं बौद्धिकं वा उत्साहं चिरविश्रामजन्यम्,······अपि तु जाड्यमेव······निरुत्साहमेव······तत्स्व-भावविरुद्धमपि व्यतीतैः द्वित्रैः संवत्सरैः प्रतिनिशान्तमनुभूयमानं······अधिकमेव······सर्वमपि अतितीव्रप्रशमनस्वभावस्यान्ततो गत्वाऽपायकरस्य पेयस्य कस्यचित् मूर्तिपूजकदेशे एव समुपलभ्य परिणामत्वेन श्रुतचरम् ।

तस्य तत् परंतु जाड्यं······सुखदुःखान्यतरसंवेदनाविलोपकत्वेन' स्यान्नाम तत्कृतेऽभिनंदनीयं······अलुच्यत प्रसह्यापरस्मिन्नेव क्षणे सहसा समुद्भूतया तीव्रया······विषपीडासंवेदनयेवासह्यया······विचारान्तर-विलोपिन्यास्मृत्याऽतीते दिने घटितस्य घटनाचक्रस्य ।

स्मृतिः सा न केवलं पुनरुज्जीवयामास तस्य तद्दुखं तन्नैराश्यं वा······अपि तु—समुद्भावयामास तत्क्षणपर्यन्तमननुभूतां नवीनामेव चिन्ता—घटनाक्रमः सः कथं नु प्रभावयिष्यति तस्य राज्यं······महता प्रायासेन साम्राज्यस्य पदवीं लम्भितम् ?'—इत्याकारका ।

कटु (—मधुरशब्दितमपि तद्वस्तुतः कट्वेवाऽऽसीत्—) संभाषणं तत् तस्य······विविक्ते शयनकक्षे निर्वृत्तमपि असंख्यकर्णं······स्यात्—इत्यत्र स न संदिदेह क्षणमपि,······नास्त्येव किमपि स्थानं परमार्थतो विविक्तं कृते शासनाध्यक्षस्य' इति राजनीतेरादिमं सिद्धान्तं आबाल्यात् न केवलं जानन्······अपि तु स्वयमपि समाचरन् ।

उत्थाय शय्यायाः निःसाच इव समुपविष्टः, अवलोकयन्नपि अनवलोक-

यन् एकां कृष्णपिपीलिकां इतस्ततः निरुद्देशमिव भ्रमन्तीं शून्यशून्यया दृष्ट्या, स्मरन्नपि विस्मरन् राजवैद्यस्य 'अकृताहारस्य मद्यपानमत्यंतं हानिकरम्' इति परामर्शं मद्यपानप्रवृत्तः सः......विचारयन् अतीतं घटनाक्रमं... (आदित एव प्रतिकूलमतिग्रस्तविवेकः) शनैः शनैरारभत निर्धारयितुं स्वमग्रजमेव सर्वानर्थमूलं, चिन्तयितुं च यत् किमपि निमित्तं दूरीकर्तुं तं स्वसांनिध्यात्।

प्राप च तत् अन्त एव सप्ताहान्तरस्य, राजधानीं प्रतिनिवृत्ते एव राजकुमारे मसूदे पुनः यथेच्छं वर्तितुं प्रवृत्तानां, आघ्राय संभावनां राजगृहकलहस्य प्रवृद्धसाहसानां, साक्षाद्राजधानीमेवाऽऽचिक्रंसमानानां सेल्जूकानां वार्त्तायाः रूपेण। निश्चिकाय च तत्क्षणमेवाऽऽदेष्टुं तं तच्छासनाय पुनः प्रचलितुम्।

न तु दधर्ष कर्तुं तथाऽऽह्य तं स्वसमक्षं यथापूर्वम्......आज्ञावमाननसंभावनाशंकाकुलाकुलः,। अपि तु उपयुयोज माध्यमं राजपुरुषेणैकेन लेखयितस्य माध्यमेन च प्रधानामात्यस्य प्रेषयितस्य स्वादेशस्य स्वमुद्रांकितस्य ......सुष्ठु जानानः सर्ववेदितस्य प्रजाहितकरस्य तदादेशस्य उपेक्षां तत्कृतेऽपि असंभाव्याम्।

आरभत च प्रतीक्षितुं तस्य प्रतिक्रियां तत्समीपवर्तिनां स्वगूढपुरुषाणां माध्यमेन।......न त्वलभतास्पष्टामपि तां सप्ताहान्तपर्यन्तम्।......यथा यथा व्यतीयाय तत्प्रतीक्षाकालः......मनस्तस्य....यथाशक्ति जुगुप्सितयाऽपि तस्य चेष्टायां मुखमुद्रायां वार्त्तायां स्फुटं प्रतीयमानया......चिन्तयाऽऽक्रम्यत ......विविधाः आशंकाः समुत्पादयन्त्याः।......सा च चिन्ता परिणनाम आतुरतायां समाकर्ण्य वार्त्तां......तं नवीनाभियानचर्चाव्याजेन तैस्तैः–विशेषतः सैनिकैः–अधिकारिभिः सह रहसि परामर्शे व्यापृतं सूचयन्तीम्।

'......नूनमीहते जाल्मः उपेक्षितुमादेशमस्माकं.....चेष्टते च, जानन् उपेक्षापरिणामं सम्यक्, प्रयोक्तुमस्माकमेव सैनिकं बलमवरोद्धुमस्मान् तदद्दण्डधारणात्।......अन्यथा-किमिव प्रयोजनमस्य गूढस्य परामर्शस्य? नहि किमपि विद्यतेऽस्मदादिष्टेऽभियाने यत् परामर्शं तादृशमपेक्षेत। सर्वविदित अस्माकमादेशः। भाविनः अभियानस्य च मार्गः।......एतावतीं निकृष्टां पदवीमवरुह्यात् स्वार्थसाधनाय नीचः–इत्येतत् अस्माभिरपि नोत्प्रेक्षित-

मासीत् ।·····तत् किं बलं समस्तं·····अस्माभिः निर्मितं, सुतनिर्विशेषं संवर्द्धितं, विविधैरायुधैः सज्जितं, आत्मविश्वासेनाभूतपूर्वसदृशेनाऽऽपूरितं, सामर्थ्यस्य परां काष्ठां लंभितं, अजय्यत्वेन दिगन्तप्रसृतां ख्यातिं प्रापितं··· अपि नाम तत्·····तेनोपजापितं, तेन प्रलोभितं··भवेत् अस्माकं विरुद्धम् ? ·····निक्षिपेत् अस्मान् घोरे कारावासे ?·····अथवा·····अथवा वियोजयेत् अस्मान् प्राणैः ? नहि ।·····नहि ।·····ज्येष्ठतरः भागः नूनं तस्य नोत्सहेत कर्तुं तथा ।·····अपि सः क्षमेत नियन्तुं तदितरं वयोवस्थासादृश्यवशात् जाल्मे तस्मिन् अनुरक्ततरम् ?·····यदि न,·····तर्हि पश्चत्स्वेवास्मासु·····अस्माभिः निर्मितं एतत् समस्तं बलं पारस्परिकलहाग्नौ न ऐवलं न केवलं स्वयं भस्मसात् भवेत्,·····अपि तु विनाशयेन् एतदस्माकं साम्राज्यमपि·····क्रोधान्धं वृषभयुगलमिव शृंगाशृंगि युध्यमानं आराममिव शोभनम् !'–इत्यादि किमपि किमपि सततं चिन्तयत् कथमपि यापयामास सप्ताहमेकम्·····अलभमानः मुक्तिं क्षणिकामपि कुतर्काऽऽवर्तात् ।

अलभत अथ तामेकस्मिन् अपराह्णे तल्पगतः, विश्राममिषेण निषिद्धसर्वप्रवेशः·····श्रुत्वा एकस्मात् गूढपुरुषात् सदाऽनुमतप्रवेशात्, प्रयात्यपि बहु असमर्थात् गूहितुमात्मनः आतुरतां, तत्सेवापलितकेशान् मर्दकवृत्युपजीविनः, चिरप्रतीक्षितं समाचारं सद्यःप्रस्थानस्य युवराजस्य राजधान्याः सह प्रचण्डेन बलेन ।

एतावत् प्रभावितमासीत्·····परंतु·····तस्य मनः·····वयोवस्थाप्रभावाद्वा क्लैव्यकल्पव्याधिदुःखवशाद्वा क्षीणशक्तिकं, विलुप्तनवनवदिग्विजयोत्साहं, अनागताशंकाकुलं, विकृतसंवेदनासामर्थ्यं·····स्वसुतात्····· यौबनस्योत्कृष्टतमामवस्थां प्रविष्टान्, शारीरिकेण सामर्थ्येन सर्वानपि अतिशयानात्, नवनवदिग्विजयोत्साहप्रस्फुरद्बाहुदण्डात्, निर्भीकात्·····अपायस्याशंकया तावता कालेन·····यत्·····तदारभताचिरादेव म्लातुं नवीनाभिराशंकाभिः,·····'किमिति सः प्रस्थितः सह एतावताप्रचण्डेन बलेन ?··· किं खलु चिकीर्षति प्रयुत्य तत् नीत्वा राजधान्याः बहिः ?·····न खलु सेल्जूकानामुपद्रविणां विद्रोहस्य प्रशमनमस्मदाज्ञानुसारम्·····ते खलु विद्युच्चपला अपहृत्य स्वं अभीष्टं नागरिकेभ्यः·····वृका इव स्वबिलेषु···· दुर्गमेषु स्वेषु निलयस्थानेषु क्षणमात्रानन्तरमेवादर्शनं गच्छन्तः चपलैः शैत्यातिशयसहनक्षमैः देशं तं सुनिपुणं जानद्भिरश्ववारैरेव जेतुं शक्याः,···

वस्तुस्थितिमेतां न जानाति सः······इत्यपि न। सुपरिचितो हि सः तेन प्रदेशेनाचरणेन च तद्वासिनाम्,······विशेषतः आयोधनप्रकारेण,······तत् किं एतदभियानमिषेण विप्रकृष्य बलमस्माकं अस्मत्सांनिध्यात् न्यूनीकर्तु-मीहते तस्य स्नेहमस्मासु तैस्तैः प्रवादैः प्रलोभनैर्वा ?······विजिते च तस्य विश्वासे······इच्छति आक्रमितुमस्मान् ?······अथवा–अस्मभ्य एव विमनी-कृतेभ्यः स्वमपायमाशंकमानः विनिर्गत्यास्मत् सानिध्यात् एतदभियानमि-षेण, अवस्थाय दूरस्थिते स्वसंरक्षणदृष्ट्योपयुक्ततरे स्थाने प्रतिपिपालयिषति अवसानमस्माकं,······बलादात्मसात्कर्तुं राज्यमस्माकं बद्धपरिकरः ?······किमिच्छति साधितुमनेन प्रस्थानेन सः–इत्येतत् तु न विद्म, परंतु–न पाल-यितुमस्माकमाज्ञामिति'–इत्याद्याकाराकारकाभिः।

तत्कलुषितचित्तश्चारभत निरीक्षितुं तस्याचरणं चारचक्षुर्भिः,······समुपेक्ष्यान्यत् कार्यजातं अन्यत्, विस्मृत्य राजवैद्यस्य परामर्शं न्यूनीकर्तुं मानसिकीं व्यग्रतां, चिन्तां, असकृत् तं विज्ञापयन्तं, अवगणय्य चाहरहः वर्द्धमानं शारीरिकं दौर्बल्यम्।······नालभत क्षणिकमपि आश्वासं दृष्ट्वा तं सत्यमेवोपद्रवपीडितं प्रदेशमभिलक्ष्य प्रवसन्तम्।······न प्राय स्तोकमपि विश्वासं निरीक्ष्य तं सत्यमेव सेल्जूकानभिभवन्तम्।······नाविन्दत स्वल्प-मपि आनन्दं निशम्य तस्य विजयस्य समाचारम्।······न विशश्वास मौलि-कत्वे तस्य विजयस्यः······अशंकत–'विजयोऽयं······स्वल्पायासलब्धः······नूनं तेन तैः सेल्जूकैः सह कृतस्य तन्मात्रविदितस्य (–निःसंशयमस्मद्विरुद्ध-स्य–) कस्य चित् संधेः फलम्।'······अयतत पर परीक्षितुं सत्यत्वं तस्याः शंकाया,······नालभत सिद्धिं स्वेषु यत्नेषुः······आरभत साशंके प्रतिपालयितुं तस्य विजयमण्डितस्य प्रतिनिवर्तनम्······व्यस्मयतपरं विज्ञाय तं मध्य एव विहाय राजधानीमार्गं प्रादेशिकं मुख्यालयमेकं मार्गपतितं समुद्दिश्य प्रवसन्तम्······बभूव निर्विण्णः विलोक्य तं कल्पयन्तं तत्र स्वं स्थायिनं निवासं सह समस्तेन बलेनः······साक्षाच्चकार च स्वं द्वितीयं वितर्कमेव सत्यम्।

'प्रयत्यादौ उपजापयितुं अस्माकं बलं, भ्रंशयितुं चास्मान् इह राज-धान्यां, लब्ध्वा चासाफल्यं स्वे प्रयत्ने······दृश्यतेऽधुना कृतनिश्चयः प्रति-पालयितुं मरणमस्माकं······अस्मदाज्ञापालनमिषेण गृहीत्वा आत्मना साकं बलमस्माकं इतः ससाधुवादं निर्गतः'-इति विनिश्चित्य प्रत्यपचिकीर्षाव्याकुलः

······विना परंतु स्वं बलं समुत्पाटितदंष्ट्रं कृत्तनखं व्याघ्रमिवात्मानमसमर्थं किमपि कर्तुं मन्यमानः······वंध्यकोपदन्दह्यमानः······आदौ परं प्रत्यतत संनद्धुं नवीनमेव बलमपहृतस्वबलतुल्यबलं,······अलभत परंतु तत्र साफल्यं क्षुद्रमेव······तद्वार्धकप्रभावाद्वा परिस्थितिपार्थक्याद्वा नियतिप्राकूल्याद्वा ······अजहाच्च प्रयत्नं निराशः ।

इयता वेगेनाऽऽचक्राम तद्हृदयं तन्नैराश्यतिमिरं यत् स कतिपयेष्वेव मासेषु आरभत परित्यक्तुं संभाषणं निकटतमैरपि परिजनैः सह,······ उपेक्षितुं राज्यकार्यं महत्वपूर्णमपि, प्रतिषेद्धुं प्रवेशं तद्विश्वासपात्रीभूतानां तद्हितेच्छूनामपि अधिकारिणां, तच्चाटुकारणां महाकविनामपि, भारतवर्ष-संबंधिना तत्प्रियेण स्वैरेण वार्त्तालापेन मनस्तस्य सदा विनोदयतामल्बरुनी-सदृशानामपि, दुर्लभानि बैदेश्यानि वस्तूनि तस्मै प्रदर्शयितुमागतानां वणिजा-मपि, किं बहुना देशविदेशसंबंधिनीः वार्ताः श्रावयितुमुपस्थितानां गुप्तचराणा-मपि······यापयितुं च स्वं······प्रयतमानानामेव देशविदेशेभ्यः प्रधानामात्येना-वलोक्य तन्मनःस्थितिं चिंतातुरेणाऽऽहूतानां यावनानां तदेतराणां च वैद्यानां वेगेन क्षयमधिकाधिकं प्राप्नुवत्······जीवनं······राजप्रासादे एव, तत्रापि स्वे शयनकक्षे एव, तत्रापि तल्पे एव······अर्द्धोन्मीलिताभ्यां तेजोहीनाभ्यां लोक-मानोऽपि अनवलोकमान एव······वातायनाद्बहिः······कदाचिद्गगनभेदिनं, समुपेक्ष्य तस्य यातनाः पूर्ववदेवारुह्य मन्दवातलहरीः पूर्ववदेव नृत्यन्तं, प्रधानतमयवनप्रार्थनामन्दिरस्वर्णशिखरारुढं,······हरित्ध्वजं,······कदाचिदा-विर्भूय नैशे नीलकृष्णे गगनांगणे प्रविश्य वातायनद्वारेणावलोक्य तटस्थया दृष्ट्या कतिपयक्षणपर्यन्तं तमस्थिमात्रावशिष्टं कम्पमानाभ्यां शुष्काभ्या-मोष्ठाभ्यामस्फुटास्फुटं गदन्तमिव किमपि असंबद्धं गगनमध्यमारोहन्तं शशांकं, ······कदाचिच्चाऽऽकर्ण्य तस्य दुरवस्थासमाचारं कौतूहलाक्रान्तानां उपस्थि-तानां तारकाणां घनं चयम् ।

परिवर्तयामास तं साकल्येन ।

चकार च तं······

······न समुत्सुकं छेत्तुं सर्वं 'तमापातरमणीयं पर्यन्तपरितापिनं' मोहपाशं तेनैव प्रस्तुतं, तमेव कण्ठोपमर्दं पीडयन्तं, भवितुं उदासीनं विषये स्वोत्तराधि-कारिणः, उररीकर्तुं च ताटस्थम् मनःस्वास्थ्यप्रदं विषये भवितव्यस्य

स्वसाम्राज्यस्य ।

सुल्तानुस्सलातीने तस्मिन्······समुत्पन्ने तुरुष्कजातौ शारीरिक-सामर्थ्यसंपन्नायामात्मिकसामर्थ्यरिक्तायां, अभिवर्द्धिते संस्कृतौ ऐन्द्रियक-सुखामात्रलुब्धायामैहलोकिकैश्वर्यमात्राकांक्षिण्यां, प्रभाविते‌ऽहर्निशं स्वापुरतो वर्तमानेनाऽऽदर्शेन मूर्तस्य रजोगुणस्य स्वराज्यसंस्थापनार्थमनवरतं प्रयत-मानस्य स्वजनकस्यामीरस्य, भाविते सततं मनोरथैः राज्यं तत् तथा संस्थापितं स्वजनकेन संवर्द्धितं स्वयं साम्राज्येऽभूतपूर्वसदृशे तस्मै दर्शयद्भिः, अनुगृहीते (–अथवा अभिशप्ते !–) नियत्या शारीरिकेण बौद्धकेण च सामर्थ्येन मनोरथांस्तथाविधान् सफलीकर्तुमावश्यकेन, वृते सदा परिस्थिति-भिस्तदननुकूलाभिः, अभिनंदिते निरपवादं मालिकया साफल्यानां स्वेषु प्रयत्नेषु, प्रवंचिते यावच्चंद्रदिवाकरस्थायिन्याः कीर्तेः अर्जिजिषया, एकमात्र-सद्धर्मप्रसाराभिनिवेशाऽऽविष्टे, साफल्यशिखराधिरूढे, स्वप्रतापातंकिता-संख्यनृपवृन्दे, अगणितकविगीयमानस्तुतिगीते······परिवर्तनं तथाविधमशक्य-मेवासीत्······श्रेयस्करमपि कृते तस्य······अन्ततः ।

······अपितु–अन्तरेवाहर्निशं दन्दह्यमानं दहनेन तिरस्कारस्याधिक्षेपस्य कोपस्य······विषयीकृत्य न केवलान् सेल्जूकान्, न केवलं स्वं पुत्रयुगलं, न केवलान् स्वान् अधिकारिणः, अपि तु सर्वानेव तत्प्रजाजनान्, तद्दृष्टौ तज्जीवनदुःखान्तिकाया अन्तिमं अंकं तमातुरेणाऽऽसुरेण कौतुकेना-वलोकमानान् ।

स तस्य दहनः नालभत मार्गं यं कमपि बहिः प्रकटनस्य, ।

अभिमानः (गर्व इत्येव उचिततरं वक्तुम्) हि तस्य रुरोध तं अन्तरेव बभूव च कारणं यातनानामकल्पनीयानाम् ।······अकरोच्च तं असहनं······ कठोरम् ।

परंतु······अहो विचित्रता मानवमनसः !

तथा कठोरतामापदितेऽपि तस्य ज्वरजराग्रस्तस्य कपिलस्य शरीरमपि स्वमुपेक्षमाणस्यास्थिमात्रावशिष्टस्य रुग्णस्य मनसि अविद्यत एव एकः विषयः ······एक एव विषयः······यं खलु विषयीकृत्य विविदिरे······न खलु विविदरे एव······प्रत्युत ववृधिरे प्रत्यहं तस्य सर्वा अपि कोमलाः भावनाः······आतु-रातुराः इवाऽऽत्मरक्षार्थं यं कमपि विषयमवलंब्य तस्य मनसि द्वेषदावाल-

दन्दह्यमाने ।

कश्चासीत् स विषयः ?

तस्य साम्राज्यम् !

आम् ! तस्य......एकलस्य तस्य......साम्राज्यं,......उभयतः नगाधिराजं 'पृथिव्यां मानदण्डमिव' स्थितं......योजनशतप्रसृतं......साम्राज्यं,...... अनेकभाषाभाषिभिः अनेकधर्मावलंबिभिः अनेकवेषधारिभिः जनैः संकुलं साम्राज्यं,......कुत्रचित् शाद्वलं, अन्यत्र हिमधवलं, कुत्रचित् जलप्रायं, अन्यत्र मरुमयं, कुत्रचित् सर्वर्तुसुखदं, अन्यत्र सर्वर्तुदुःखदं साम्राज्यम् ।

आम् !......तस्य एकलस्य साम्राज्यं,......तेन आबाल्यात् संकल्पितं आ यौवनात् प्रयत्य मूर्ततामापादितम्, अविगणय्य विपदस्तिरस्कृत्य शारीरिकीः यातनाः समुपेक्ष्य राजसुखानि दत्वा तिलाञ्जलिं कोमलाभ्यः भावनाभ्यः अवलम्ब्य सूक्तासूक्तं यं कमपि उपायं शनैः शनैः संवर्द्धितं, सादरं समाहूय नृपान्तरसभाभ्यः बलादानीय वा स्थानान्तरेभ्यः स्वराजसभायां स्थापितैः (अधिरोपितैः—इत्येव नूनं वक्तुमुचितम्—) नररत्नैर्भूषितं, भङ्क्त्वा पूजास्थानानि शान्तिप्रियाणां मूर्तिपूजकानामानीतैः महार्हशिलाखण्डैः निर्मापितैः यवनप्रार्थनामन्दिरैः समलंकारितं, अपहृत्य अपाराः संपदः निरपराधानां भारतीयानां साहाय्येन तासां समृद्धिं (—स्यान्नाम आहार्या—) लंभितं...... साम्राज्यम् ।

किं वदथ ?......'तदन्तर्वासिनः जनान् सर्वान् निरपवादं निरंतरं द्विषन् सः परमस्निह्यत् साम्राज्ये'—इत्येतत् तु तर्कदुष्टम्'—इति ?

तर्कदुष्टमासीत् तत् । परंतु......वास्तविकमपि ।

अत एव तु विसिष्मियिमहे वयं विषयीकृत्य वैचित्र्यं मानवमनसः ।

......एकस्मिन् अहर्मुखे......परंतु...आकृष्ट इव बहिः नियत्या तस्याः अनेकमासदीर्घायाः यातनातंद्रायास्तं तथा पीडयन्त्याः......प्रेरित इव स्वप्नेनकेनचित् सद्यः दृष्टेन......अकस्माज्जजागार सः अर्द्धनिद्रायाः,...... उदतिष्ठत् शय्यायाः बलात्......अवलोकयामास नेत्राभ्यामारक्ताभ्यां स्वमभितः अश्रद्दधान इवात्मनस्तथाऽवस्थितो,......विचारयायास कतिपयक्षणपर्यन्तं निश्चलः,......निश्चिकाय किमपि मनस्येव,......ववाञ्छाऽऽदेष्टुंयं कमपि परिचारकं समीपतमवर्तिनं तदभीष्टकार्यकरणार्थं,...न ददर्श कमपि

तस्मिन् कक्षे,······उत्थापयामास मद्यचषकं समीपस्थमन्तःप्रविशद्भास्कर-करोद्भास्यमानं,······चिक्षेप तं प्रयुज्य स्वं शक्तिसर्वस्वं दिशि स्वकक्षद्वार-कपाटस्यार्द्धपिहितस्याक्रष्टुं ध्यानं बहिर्वर्तिनः यस्य कस्यापि,······ददर्श तत्-क्षणमिव द्वारप्रदेशे समुपस्थापितं विस्मयविस्फारितयाऽपि क्षणमात्रानन्तरं विनयावनमितया दृशा तमेवावलोकयन्तं अल्तमशं,······उपेक्षते स्म तस्य हृष्टस्येव प्रणामं,······आज्ञापयामास इंगितेन विशिष्टेन तं समुपस्थापयितुं तत्सेवायां राकीयं लिपिकप्रमुखमविलंबं,······प्रतिपालयामास तदागमनं, तथैव समुपविष्टः शय्यायां, उपेक्षमाणः प्रणामान् स्वपरिचारकाणां प्रासादे तत्र तत्र स्वं स्वं मनः विनोदयतां, श्रुत्वा तत्प्रबोधवार्तां चकितानां, सत्वरं स्वसेवास्थले समुपस्थितानां,······आरभत लेखयितुं तेन ससंभ्रमं तत्पुरत उपस्थितेन निद्रावशेषारक्तलोचनेन एकं लेखं समुद्दिश्य प्रमुखतमं धर्मगुरूं··· तत्पश्चात् कनिष्ठं तदात्मजं मुहम्मदं तदुत्तराधिकारित्वेनाभिनन्दितुं आशी-र्वचनैः तमभ्यर्थयन्तं, उपेक्षमाणः प्रतिक्रियां······आदौ सकौतूहलां ततो विस्मयातुरां ततः प्रतिकूलां······मनसि उत्पन्नां स्वपरिचारकाणां स्वस्वकार्य व्यग्रमिवाऽऽत्मानं प्रदर्शयतामपि तल्लेखमेकाग्रेण चित्तेन शृण्वतां,······ प्रमाणीचकार तं लेखं स्वमुद्रांकनेन,······समादिदेश तं प्रेषयितुं लेखमविलंबं माध्यमेन प्रधानामात्यस्य यवनधर्मगुरुसमीपे,······पातयामास आत्मानं शय्यायां निष्पीडितशक्त्यशेषमिव श्रान्तश्रान्तं······निमीलयामास स्वे नयने व्यपगतभार इव,······आरभत पातुं मद्यं समीपमुपसृतेनाल्तमशेन प्रत्यक्षीकृत-सर्वघटनाक्रमेण सानुकम्पमिवोपस्थापितं,······ममज्ज च वेगेन चिरपरिचिता-यामर्द्धनिद्रायां यातनाबहुलायां पुनः ।

मग्नश्च तथा······न विवेद······प्रधानलिपिकं······कथमपि प्रणम्य तं तथा शयानं कक्षात् तस्मात् सह तेन लेखेन विनिर्गतं,······स्वपरिचारक-वृन्दं······बहिरेव कक्षस्योज्झित्वा स्वस्वकार्यानुष्ठानाभिनयं मिलित्वा च एकत्र लेखं तं पुनः पुनः पठन्तं, 'अन्ते जीवनस्य नूनं विलुप्तविवेकेन सम्राजा समादिष्टोऽयं सर्वविनाशकः आदेशालेखः किं नु विनाश्यः अत्रैव ?' इति कतिपयक्षणपर्यन्तं विचारयन्तं, कर्तुं तथाऽधृष्णुवन्तं······प्रधानामत्यं ······दृष्ट्वा प्रातरेव प्रधानराजलिपिकेन स्वयमानीतं राजमुद्रांकितं लेखं सविस्मयं······पठित्वा तं साशंकं······राजमुद्रासत्यापनाप-

नीतशंकं······किंकर्तव्यतामूढं······'किं नु द्रष्टव्यः सम्राट् प्रागस्य संप्रेषणात् ? अभ्यर्थितव्यश्च विचारयितुं पुनरेकवारवश्यम्भाविनं अस्य परिणामं ?'—इति विचारेणान्दोलितं······विज्ञाय तदाज्ञां प्रतीक्षमाणात् तस्मात् प्रधानलिपिकात् सम्राजं पुनः मद्यपानमग्नं पूर्ववच्च तन्द्रिलं विलीनतद्विचारं······अननुष्ठितादेशस्य क्रोधेन तस्य सुपरिचितं······संप्रार्थ्य परमेश्वरं रक्षणार्थं साम्राज्यस्य लेखं तं विधाय सुगोपायितं आदिष्टं स्थानं प्रेषयन्तं, ······वार्तां च तां तत्कृतस्य स्वोत्तराधिकारिचयनस्य यवनराजपरिचारकसमूहे, तस्मात् प्रासादस्थराजकीयपरिवारजने, तस्मात् प्रासादरक्षकसैनिकगुल्मे, तस्मादुच्चावचराजपुरुषवृन्दे, तस्मात् तत्परिवारजने, अथ समस्ते गजनीमहानगरे, अथ तद्बहिरेव करतलसमभूमौ क्लृप्ते आ दिगन्तं प्रसृते सेनासंनिवेशे, अथ समस्ते वंशपरंपराऽऽगते गजनीराज्ये, अथ संपूर्णे यवनसाम्राज्ये,······अत्यल्पमिदमुच्यते—बहिरपि तस्मात् यावने तद्भिन्ने च संसारे······दावानलवेगेन प्रसरन्तीम् ।

न च विवेद परिणामं तस्याः······महान्तं क्षोभकं विभाजकञ्च ।

त्रिंशदधिकसंवत्सरपर्यन्तं संसारं समस्तं स्वप्रभावेण स्वपराक्रमेण स्वातंकेन संमोहयतः, अन्तिमेंऽके स्वजीवननाटकस्य ज्वरजराग्रस्तस्यापि कंकालशेषस्यापि क्षीणसामर्थ्यस्यापि जनमात्रसंपर्कासहनस्यापि······तस्य······जनसामान्यमानसे प्रौढस्य, सर्वविधसमर्थ्यातिशयमण्तिस्य यवनराजोचितमण्डलमण्डितस्य, राजसभायां बहुविधसभारत्नविभूषितायां काव्यरसस्य युद्धभूमौ च विपरीततमास्यपि परिस्थितिषु वीररसस्याऽऽस्वादने रममाणस्य, प्रतिनिवृत्य, तेभ्यस्तेभ्यः भारतीयाभियानेभ्यः सफलेभ्यः प्रजास्वाः तत्प्रत्यागमनं—बालकाः तज्जनकप्रत्यागमनमिव—सौत्सुक्यं प्रतीक्षमाणा आनीतेन (—स्यान्नाम लुण्ठितेन—) अपारेण धनेनोपकुर्वतः, धर्मं यावनमननुसरतः दण्डयतः, तं धर्मं पालयतः बहु मानयतः, तस्य प्रसारार्थं तत्र तत्र प्रार्थनामन्दिराणि शिक्षासंस्थानानि च संस्थापयतः, काव्यशास्त्रेतिहाससदृशानां तुरुष्कैरश्रुतपूर्वाणां रसग्रहणं कुर्वतः, (—स्यान्नाम बलादानीतैः दर्शयित्वा वा प्रलोभनानि समाकृष्टैः—) विद्वद्रत्नैः सभां स्वां मण्डयतः······अभूतपूर्वसदृशतुरुष्कराजरूपेणैव प्रतिबिंबितस्य······उत्तराधिकारिविषये महदासीत् औत्सुक्यं संपूर्णे तात्कालिके सभ्ये जगतीतले ।

औत्सुक्यम् ।······वैमत्यं च ।

आम् !······वैमत्यम्,–न 'तेन तत्पुत्रयोरन्यतरेणैव भाव्यम्'–इत्यत्र, ······अपि तु–'तयोर्मध्ये केन'–इत्यत्र,······'कः खलु योग्यः'–इत्यत्र ।

विभाव्य तस्य रोगं क्षेत्रियकल्पं, परिकलय्य तस्य जीवनं समाप्तप्रायं, आदित एव तदुत्तराधिकारिणं समुत्प्रेक्षितुं चिरात् प्रवृत्ता······शनैः शनैः योग्यस्य तदुत्तराधिकारिणो विषये स्वस्वमनोवस्थानुसारं कृतस्वस्वमनोग्रहा ······स्वाभिमतस्य समर्थने पराभिमतस्य खण्डने समयं स्वं स्वं रिक्तं यापयन्ती······प्रजा तस्य······न तस्य प्रजैव, अपि तु तदितरा विदेशस्थिता प्रजा अपि······यदाऽऽकर्णयामास तामुत्तराधिकारिचयनवार्तां······तदा बभूव विभक्ता द्वयोर्भागयोः राजकुमारान्यतरपक्षसमर्थकयोः वेगेनानुत्प्रेक्षितपूर्वेण विभेदः सः क्रमशः कटुतरीभवन् । न केवलं चकार तयोर्वाक्युद्धं चिरस्य प्रवृत्तं तीव्रतरम्······अपि तु–नुनोद तौ अभिव्यक्तुं स्वं वैमत्यं माध्यमेन श्मश्रुपाशापाशिनो युद्धस्य !

शान्तिप्रियास्तदीयाः प्रजाः एवं कटुतया दूषयतस्तस्य वैमत्यस्य प्रभावः ······तदीयासु सेनासु प्रसृतः······तु विलक्षण एवासीत्······तन्निर्धारितोत्तराधिकारिप्रतिकूलश्च ।······प्रेरयामास च ताः,······अपारसामर्थ्याः······ दिगन्तविश्रुतपराक्रमाः······युवराजस्य मसूदस्य नेतृत्वे सद्यः समाप्तिं नीतेन दण्डाभियानेनासंतुष्टाः······अनुपलभ्य चिरादवसरं परधनलुण्ठनस्य दुर्मनायमानाः·····सम्राजं स्वमस्तंगतकल्पं मन्यमानाः······'युवराजो मसूदः पराक्रमेण स्वजनकमपि अतिशयानः नः भावी नेता'–इति दृढं श्रद्दधानाः······ तन्नेतृत्वे भाविनामसंख्यानां भारतीयानामाक्रमणानां दिवास्वप्नानि अवलोकमानाः,······कर्तुं शस्त्रपरिग्रहं जिघांसया स्वांगीभूतानामेव कतिपयानां सम्राजा साम्राज्ये तत्र तत्र व्यवस्थाशान्तिरक्षणार्थं चिरात् संस्थापितानां अनवलोकितरणांगणानां स्वयं शान्तिप्रियाणां शान्तिप्रियराजकुमारमुहम्मदपक्षपातिनीनां सेनानामाकर्ण्य नितान्तमनपेक्षितां तच्चयनवार्तां हृष्टानाम् ।

यन्तु विविधधर्मानुयायिन्यः दूरस्थाः प्रजाः स्वभावत एव ज्वलनशीलाः सेनाश्च ताः······तथा वैमत्यविदीर्णा अपि······तथाक्षुब्धा अपि······तथा समुत्तेजिता अपि······न दधर्षुः साक्षात् कर्तुं किंचिदपि शान्तिभंजकं कृत्यं

······तद्विलसितमेव चिरात् शयनगतस्यापि ज्वरजराग्रस्तस्यापि मृतकल्पस्यापि जनप्रियस्य सम्राजः प्रभावस्य ।

एवमन्तर्ज्वलतः प्रस्फोटनातुरस्य ज्वालामुखस्येव तस्य विशालस्य साम्राज्यस्याधिपत्यं कुर्वाणस्य, तात्कालिकपरिस्थित्यनभिज्ञस्य यातनातंद्रानिमग्नस्य शहंशाहस्य तस्य······व्यतीयुः कतिपयाः मासाः······तद्दुःखभारमन्थरगतय इव······शनैः शनैः ।

इत्थं व्यतीतेषु तेषु युगकल्पेषु······तदनुगमनोद्यते च मासान्तरे······एकदा······(–न विद्मः कथंकारं–) जजागार स्वयमेव शहंशाहः निद्रायाः ।

उन्ममज्ज वा यातनातंद्रायाः ।

उन्मीलयामास स्वे लोचने, व्यापारयामास ते स्वमभितः, साक्षाच्चकार प्रकाशे उद्गच्छतः दिनकरस्यात्मानं तल्पे नातिधवले आश्यानमदिराबिंदुतारकिते मशकहरीपरिवृते शयानं, महार्हकम्बलाऽऽच्छादितवपुषं,······ववाञ्छोत्थितुं तल्पात् झटिति अनुभवन् आत्मानं विगतज्वरमिव विलीनजरमिव विनष्टदौर्बल्यमिव, प्रसन्नचित्तः, मनस्यकुर्वन् मालिन्यं स्वतल्पस्य कर्तव्यानादरं वा स्वपरिजनस्य तमेकाकिनं विहाय शून्यशून्ये तस्मिन् विशाले शयनकक्षेऽन्यत्र निःशंकं गतस्य,······किंचित्तिरोहितचित्तप्रसादः ।

प्रयतमानस्यैव तस्याथ समीपे आविर्बभूव······अपेक्षमाण इव तज्जागरणं समाहूत इव मर्मरध्वनिना तत्कंबलस्य······अल्तमशः,······यथापूर्वं विनीतयाऽपि कथमपि तं समुद्वेजयन्त्या हृष्टयाऽपि तं गूढमुपहसन्त्येव प्रतीयमानया दृष्ट्याऽवलोकमानः,······प्रावर्तत चानादिष्ट एवापसारयितुं मशकहरीं अपनेतुं कम्बलं उत्थापयितुं च तं महता मार्दवेन······मातेव बालकं चिररुग्णम् ।

उत्थापितश्च तेन······सूचयामास सः······आत्मानं रोगमुक्तं परिकल्प्य हृष्यच्चित्तः, क्षणमपि अविस्मयमानः विषयीकृत्यात्मनस्तं पुनर्लाभं आकस्मिकं स्वास्थ्यस्य, क्षणमपि अनुत्प्रेक्षमाणः तेनाल्तमशेनातीते निशामुखे प्रदत्तं सुस्वादु पेयं तत्कारणत्वेन······तैस्तैरिंगितैः स्वामिच्छां मुखप्रक्षालनस्य,······सोत्साहेनेव सत्वरं प्रधावितेन तेनानीतेन कदुष्णेन सुगांधिना स्वच्छेन उदकेन प्रक्षालितमुखबिलश्च व्यानञ्ज स्वामभिलाषां आस्वादयितुं प्राचीनतमां मदिरां, परिधातुं नवीनानि राजसभोचितानि महार्हाणि वस्त्राणि, गन्तुं च

भव्यं राजकीयं कोषागारं तत्प्रासादैकदेशावस्थितं आरुह्य शिबिकां कौतुकेन महता भारतवर्षात् आनायितां, यापयितुं च प्रहरमेकं तत्र अवलोकने तत्र संगृहीतानां भारतीयेषु तेषु तेषु अभियानेषु लुण्ठितानां स्वां राजधानीं आनीतानां महताऽभिमानेन विस्फारितलोचनेभ्यः विस्मयस्तब्धेभ्यः स्वप्रजा-जनेभ्यः प्रदर्शितानां तैः बहु मानितानां महार्हाणां रत्नानां सौवर्णानामा-भूषणानां राजतानां भाण्डानां हास्तिदन्तानां च तेषां तेषां दुर्लभानां असंख्यानां वस्तूनां·····अतिविशालेषु लौहपेटेषु संस्थापितानां अहर्निशं सशरास्त्रैः रक्षकसैनिकैः संरक्ष्यमाणानाम् ।

परिदधानस्यैव तस्य नवीनानि महार्हाणि वस्त्राणि सेवायां उप-तस्थौ तत्समादिष्टा सा शिबिका, तामनु स्तोमः·····विज्ञायोदन्तं तस्या-रोग्यलाभस्य·····हृष्टानां लज्जावनतमुखानां तत्परिचारकाणां······विस्मि-तानामाशंक्य तं क्षणिकं भाव्यशुभतरसंसूचकं चिंतातुराणां व्यावर्तयितुं तन्मनस्तादृशपपरिश्रमकरणादिच्छतामपि भयवशात् तथा कर्तुमपारयतां किंकर्तव्यतामूढानां विनयावनतैः नयनैः तच्चेष्टितानि अवलोकयतां आबद्ध-हस्तयुगलानां वैद्योत्तमानां च ।

एवमवलोकयतामेव तेषां सर्वेषां कक्षाद्बहिःकृतसंमर्दानां·····अथ······ उपविवेश सः विविधाभरणभूषितः शिबिकायां, आदिदेश च तद्वाहकान्··· कज्जलकृष्णान् स्थूलाधरोष्ठान् पुरुषाधिकप्रमाणान् अन्धदेश्यान् बाल्ये एव बलम् क्लीबीकृतान् दासान् भावशून्यया निष्प्राणयेव दृशा घटनाक्रमं सर्वं तं लोकमानान्·····प्रस्थातुम् ।

ततः प्रस्थितः·····द्वित्रैरल्तमशप्रमुखैस्तदनुमतैः मद्यपात्रादिव्यापृत-हस्तैः वैयक्तिकैः परिचारकैरनुगतः·····निर्जगाम कक्षान्तरेभ्यः विशालेभ्यः समुपेक्ष्यमाणेभ्य इव तत्सेवकैः नातिस्वच्छेभ्यः,·····आरभत च गन्तुं दिशि प्रासादभागस्य राजकीयकोषागाराधिष्ठितस्य ।

इयान् समुत्सुक आसीत् सः द्रष्टुं तानि तानि दुर्लभानि बहुमूल्यानि तदीयानि अभियानानि अतीतगर्तलुप्तानि स्मारयन्ति तत्प्रियाणि वस्तूनि, मित्राणीवाभिन्नभावानि·····यत् स मार्गे पतितानि कक्षान्तराणि असंख्यानि तत्परिवारजनाधिष्ठितानि विविधाकाराणि विभिन्नवृत्तान्तानि जनसंकु-लानि अवलोकयन्नपि नैवावलोकयामास,·····प्रणामान् तेषु विद्यमानानां

स्वस्वपौर्वाह्णिककार्यव्यापृतानां परस्परसंलापव्यापृतानां समवलोक्य तमागच्छन्तं क्षणमेकं विस्मयस्तब्धानामथ विस्फारितनयनानां······कासांचित् वृद्धानां उन्नमय्य बाहुद्वयं स्थूलस्थूलं परवरदिगारं कृते तस्य दीर्घं स्वस्थं च जीवितं याचमानानाँ, कासांचित् यौवनपुष्टदेहानां, झटिति अवगुंठिताननानां विनयावनतानां······सर्वासामपि तन्मार्गात् अपसृतानां, सर्वासामपि वार्त्ता तदवलोकनस्य निवेदयितुमन्याभ्यः अन्तःपुरवासिनीभ्य आतुराणां, सर्वासामपि नेत्रप्रान्तेन तस्य क्षीणक्षीणां शरीरावस्थां पश्यन्तीनां, सर्वासामपि अवस्थाय मूर्तिवन्निश्चलं तं अवलोकमानान् स्वस्वबालकान् तदभिवादनार्थं नुदन्तीनां······स्वीकुर्वन्नपि नैव स्वीचकार,······महता मार्दवेन प्रवेशितश्च शिबिकावाहकैः राजप्रासादमध्यवर्तिनि विस्तृते तत्तत्कार्यकरणव्यापृतोच्चावचराजपुरुषसंकुले प्रांगणे, अतितीव्रप्रभाकरप्रभादीपितलोचनः, प्रासादरक्षाधिकृतान् स्वसैनिकान् समुपेक्ष्य स्वं कर्तव्यं विन्यस्य स्वस्वशस्त्राणि दूरे (तस्य उत्तराधिकारिण- विपये–स्यान्नाम) उच्चैर्विवदमानान् दृष्ट्वा कुप्यन्नपि न रुरोध स्वां शिबिकां तद्भर्त्सनेच्छया ।

उपस्थापितश्च पुरस्तात् मुख्यस्य द्वारस्य······पुरुषत्रयाधिकोन्नतस्य लोहकीलकखचितदृढकपाटस्य······कोषागारस्य······प्रासादैकभागावस्थितस्यापि निषिद्धजनसामान्यप्रवेशतया पृथगवस्थितस्येव भासमानस्य, सशस्त्रैराकर्ण्य वार्त्तां तदागमनस्याधिकारिभ्यः अधिकमेव दक्षमात्मानं प्रदर्शयद्भिः रक्षकसैनिकैरुद्ग्रमुखैः रक्ष्यमाणस्य,······शनैः शनैः निर्जगाम शिबिकायाः धृत्वा हस्तावलंबं हस्तस्य आदित एव तत्र समुपस्थितस्य तदागमनमुद्ग्रीवं प्रतिपालयतः विनयान्वितस्य प्रधानस्य कोषपालस्य सत्वरमग्रे उपसृतस्य ।

प्रविवेश च कोषागारप्रांगणेऽपावृतेन महाद्वारेण······प्रयतमानः उन्नमयितुं ज्वरजरावनतं स्वमुत्तमांगं,······प्रयतमानः संयन्तुमात्मनश्चरणकंपं,··· उपेक्षमाणः प्रणामान् प्रांगणस्यैकदेशे कृतसंमर्दानां तत्रत्यानामुच्चावचाधिकारिणाम् ।

कृतप्रवेशश्च कतिपयक्षणानन्तरं कोषागारभवने, कोषपालेन स्वयं उद्घाटितद्वारेऽपनीय प्रचण्डं तालं, पाषाणभित्तिकतया दुर्भेद्ये, निर्वातायनतया दिवाऽपि अन्धकारिते । निर्वाततया उग्रगंधे (–सत्यपि तथा तत्सुखकरे !–)······न शशाक आदौ द्रष्टुं किंचिदपि ।

शनैः शनैरभ्यस्तनेत्रश्चास्पष्टमलोकयामासाऽऽत्मानं कृतप्रथमपदक्षेपं प्रथमे कक्षेऽतिविशालेऽपि अतिबृहत्लोहपेटपरंपरासमाच्छादितभित्तिकतयाऽन्यथा भासमाने, संकीर्णमार्गे ।

ववाञ्छ चादेष्टुं कोषपालं अलातानयनार्थम् ।

वाञ्छत एव तस्य⋯⋯सहसा उपातिष्ठत् द्वारप्रदेशे कक्षस्य एकः सेवकः सद्यःप्रज्वालितालातहस्तः, उपासर्पत् सविनयं समीपे, अदात् तमलातमल्तमशाय, अगच्छच्चादर्शनं⋯⋯आविर्भूय तिरोभूत इव तमसि कक्षव्यापिनि ।

प्रशंसमानः (–अर्थात् मनस्येव,–नहि स कदापि प्रशशंस स्वं सेवकं प्रकाशम् !–) अनागतविधातृत्वं तत् कोषपालस्य⋯⋯अथ⋯⋯उपासर्पत् समीपतम् पेटं⋯⋯स्वतालद्वयप्रतिफलदलातप्रकाशनिमेषोन्मेषमिषेण तमवलोकयन्तमिव साकूतं,⋯⋯न्यधात् स्वं वामं हस्तं कृशमुपरि तस्य,⋯⋯ अक्षिपच्च स्वां दृष्टिमातुरातुरां अन्तस्तस्य ।

तावन्मात्रेणानुमिततदिच्छेन कोषपालेन तत्क्षणमुद्घाटितान् तस्मात् परंतु अपासरत् सहसा⋯⋯दीपितनेत्रः ।

इयती तीव्राऽऽसीत् प्रभा⋯⋯विभिन्नाकारेषु विभिन्नप्रयोजनेषु विभिन्नविधेषु लुण्ठितानीतेषु व्यतीतेष्वपि अनेकेषु संवत्सरेषु किंचिदपि अन्यूनीभूताभेषु भाण्डेषु सौवर्णेषु तदन्तःप्रक्षिप्तेषु⋯⋯अलातस्य⋯⋯प्रतिफलिता !

शनैः शनैरभ्यस्तनेत्रश्चारभतावलोकयितुं तानि भाण्डानि, अनेकदाऽवलोकितपूर्वाण्यपि प्रथमत इव तेनावलोक्यमानानि, तद्विस्मयं तदानंदं समुद्भावयन्ति, तत्संबद्धाः विभिन्ना अपि निरपवादं सुखदाः स्मृतीराविर्भावयन्ति ।

'कुत्र⋯⋯कुत्र⋯⋯तद्धूपपात्रं सौवर्णं⋯⋯अस्माभिः⋯⋯(सकौतुकं) कैशोर्ये एव तस्मात् वृद्धात् नरेशात्⋯⋯हं⋯⋯जयपालात्⋯⋯सदाऽस्माभिः पराजितात्⋯⋯शरणागतात्⋯⋯महता हठेनारुध्य तातं⋯⋯बलादधिगतम् ?'–सहसा निर्जगाम पृच्छा मुखात् तस्यैवमवलोकयतस्तानि स्मृतिचिह्नानि ।

'अत्र⋯⋯राजाधिराज !'–तत्क्षणं प्रत्युवाच सकौतुकं कोषपालः, उद्धृत्य एकं प्रणामावनतसेवकसमुद्धृतकरतलाकारं पात्रं,–सुष्ठु परिचितेन राजाधिराजस्य तद्विषकेण स्नेहातिशयेन तेन सर्वेषां पात्राणामुपरि आदित

एव विन्यस्तम् ।

'आम् !......एतदेव तत् !......एतदेव तत् !'–तत्क्षणमवोचत् शह्-शाहः......विनष्टोपलब्धक्रीडनक बालक इव सहसा प्रमुदितः।......'एतदेव तत् !......पश्य......पश्य !......अल्तमश, कियता मनोयोगेन निर्मितोऽस्ति अयं सेवकः कलाकारेण !......स्वपितामहस्मृतिचिह्नमेकमात्रं अवशिष्टं इति कृत्वा कियान् उत्सुक आसीत् सः पांचनदः रक्षितुं एतत् नः !......तस्य तदौत्सुक्यमेव वीक्ष्य हठः अस्माकं दृढतरीभूत आसीत् तदा'–इत्याद्यस्फुटास्फुटं जल्पन् इयान् व्यापृतो बभूव स वृद्धः अवलोकने तस्य स्वकैशोर्यहठचिह्नस्य यत् न स शशाक श्रोतुं निःश्वासं मुखात् अल्तमशस्य तत्पश्चादेव समुद्धृतालातं तिष्ठतः निर्गतम् ।

'अहो !......लब्धः......लब्धः......अयं घण्टाताडः......काश्मीरभूभृता एकवारमपि रणांगणेऽस्माकं सामुख्यं कर्तुमघृष्णुवता, स्वयं (–अर्थात् दूत-माध्यमेन–) उपायनीकृतः,–क्षणमात्रानन्तरमेव परित्यज्य तद्धूपपात्रं......अन्यत् सौवर्णं वस्तु उद्धरन् पेटागर्भात् जगाद स उच्चैः । बहुमन्यमानश्चैवं तानि तानि सौवर्णानि वस्तूनि, पुनरनुभवन्निव स्वं तारुण्यं पराक्रमं स्वं गौरवं स्वमावेशं (–सर्वमपि अतीतेऽपुनरागमनाय विलुप्तं–) नैवानुबभूव यानं प्रहरस्य एकस्य......कक्षे तस्मिन् तेनाविदितक्षणंयापितस्य ।

अनुबभूव परंतु दौर्बल्यं स्वपादयोः......विश्रामातुरयोः ।

न स्वीचकार तथापि अभ्यर्थनां कोषपालस्य (–स्वयं श्रान्तस्य !–) यापयितुं समयं......प्रहरार्द्धं......उपविश्यासने......अनुमाय तस्य दौर्बल्यं तेन स्वयमानीते । अपि तु ससार दिशि कक्षान्तरस्य तत्संलग्नस्य तदति-परिचितस्य रत्नाभरणपेटपरंपरासंकुलितस्य ।

कृतप्रवेशश्च तत्र गत्या औत्सुक्यत्वर्यमाणयाऽपि दौर्बल्यमन्दीकृतया......अनुपदिष्टमार्ग एव......स्वयमेव......उपजगाम कक्षकोणस्थापितं पेटमेकं महान्तं,......व्यानञ्ज च स्वामिच्छां तदन्तःस्थितरत्नावलोकनस्य दृष्टिक्षेप-मात्रेण ।

'अत्र विराजते सुहृदयं अस्माकं !' जगाद चोच्चैः उद्धृत्य तस्मात् समुद्घाटितात् पेटात् एकां हरिद्वर्णां बहुमूल्यां रत्नपेटिकाम्- उद्घाट्य च तां तदन्तः शायिनं पद्मरागमेकं बृहन्तं......प्रकटयन्तमिव स्वं क्रोधं मिषेण

प्रकाशपरंपराणामलातप्रकाशे अनवरतं तस्मान्निर्गच्छन्तीनां,······त्रिनेत्रनेत्र-मिव त्रिभुवनदिधक्षया समुद्घाटितम् ।

'अपि जानीथ······कुतः अयं अधिगतः अस्माभिः ?······हं !······मन्दिरात् गोपीवल्लभस्य······मथुरानगर्यां प्रधानतमात् !······सीमन्तात् (सकुत्सं) तत्सहचर्याः ।······कियान् आसीत् आतंकः आलिखितः मुखे प्रधानतमस्य एतन्मूर्तिपूजकस्य दृष्ट्वाऽस्मान् एतदुत्पाटनेच्छया अग्रे सृतान् ······विस्मयश्च वीक्ष्य नः सफलमनोरथान्······अथ च स्तोकमपि अक्षतान् !······(उच्चैर्विहस्य) अद्यापि सः······स्मृतः······हासयति नः ।······(विमनस्कतया) महती खल्वासीत् अभिलाषा महिष्याः अस्माकं धर्तुमेतं श्रवणकुण्डलरूपेण,······न शशाक परंतु सा पूरयितुं तां······तां······अनुपलब्धेर्द्वितीयस्य पद्मरागस्यैतत्तुल्यस्य देशविदेशेषु अन्विष्टस्यापि सप्रयत्नम् ।

'अत्र च······अस्माकमपरः अनन्यसदृशः सखा'–अस्थिरपदक्षेपमपि सोत्साहं समुपसृत्य पेटान्तरं अनपावृतं जगाद सः······संबोधयन् इवालृतमशं तदभिमुखं विचित्रभावया दृष्ट्या तमवलोकयन्तं,······'न स्यात् त्वया दृष्टपूर्वः······अयं'–गृह्णानः हरिद्वर्णां एकां रत्नपेटिकामभ्यन्तरतः तस्य पेटस्य, ससंभ्रमसुपसृतेन कोषपालेन यवनराज्यस्य कफलं श्रान्तश्रान्तं स्वरं निशम्याऽऽशंकितेनापि कर्तुं किंचिदसमर्थेन उद्घाटितस्य–आह सः साभिमानं,–'तावत् अस्माभिः उत्पाटितः भूषणात् तस्य सोमनाथस्य, मूर्तिपूजकानां त्रैलोक्यनाथस्य, मन्दिरे तन्मूर्तिं अलंकुर्वाणात् ।······'इमं,'–प्रदर्शयन् ताभ्यां (–अवलोकयन् स्वतः इत्येव वस्तुतः वक्तुं युक्ततरम्–) अद्वितीयं मरकतं, सारमिव हरिद्वर्णस्य, 'अस्माकं देवाधिदेवस्य मौक्तिकमालायाः मध्यमणेः स्थाने विराजमानं, मा गृह्णन्तु श्रीमन्तः ।······एतस्य मूल्यं दशकोटिस्वर्णमुद्रानधिकं दास्यामः सद्य एव वयं श्रीमद्दासानुदासाः'–इति सप्रणाममसकृत् प्रार्थयमानानां तत्रत्यानां राजपुरुषाणामनुरोधं नैव स्वीचकार युवयोः शहंशाहः ।······स हि (साभिमानं) स्वर्णमुद्राः कामयमानोऽपि यन्नाम वस्तु अधिगन्तुं करोति निश्चयं वस्तु तत् अधिगच्छत्येव······तृणकल्पं मन्यमानः स्वर्णमुद्राचलमपि तद्विनिमयद्रव्यत्वेन प्रदीयमानम् ।···अयं······अस्माकमतिप्रियः ।······अत एव तु वयं न ददिम एतं अस्मत्-

सुताय……'

वदंश्चैवं सहसा व्यरमत् जल्पनात्,……अकस्मात्……अनिच्छत एव तस्य स्वयं……स्मारितः अतीतस्य तज्जीवने प्रथमस्य कटुतमस्य प्रसंगस्य ……स्मारितः कटुसत्यस्य–'अयमेव कारणं वैमनस्यस्य मसूदस्य, स्वभावतः उद्धतस्यापि तावत्कालपर्यन्तं अस्मदादेशं बहुमन्यमानस्य……तत् आरभ्य एव दूरीकर्तुं अस्मान् सिंहासनात् प्रयतमानस्य–' इत्येतस्य ।……आरभत च शून्यशून्यया दृष्ट्या ध्यातुं तं……पारिवारिककलहबीजं……अतीतस्मृति-गर्तनिपतितः ।

स्मारितश्च हठात् वर्तमानायाः परिस्थितेः चटचटाशब्देनास्फुटेनापि नीरवे तस्मिन् कक्षे तीव्रेणेव भासमानेनालातस्य……विनिर्गमितशतजिह्वं हसत इव लक्ष्यीकृत्य तस्य तद्दुःखं……चिक्षेप एकां क्षणिकां दृष्टिमुपरि मुखयोः स्वसेवकयोः,……ददर्श तौ भूतलविनिगडितलोचनौ निर्विकारमुख-मुद्रौ,……असमर्थः तन्मनोभावोहने च प्रायतत आवरितुं आत्मनः खेदं द्विगुणितेन (–अर्थात् आहार्येण–) उत्साहेन,……चिक्षेप तां अमंगलकरां रत्नपेटिकां तत्रैव,……ससार अग्रे,……आह चान्यतमलोहपेटस्योपरि न्यस्तहस्तः–

'अत्र……परंतु……विराजते……वस्तुतः अद्भुतमाश्चर्यं परवरदिगार-निर्मितस्यास्य संसारस्य……नीलमणियुगलं !……स्थानेश्वरमन्दिरादस्माभिः स्वपराक्रमेणार्जितमेतत्'–गृह्णन् तत्पेटिकायाः नीलनीलायाः बहिः ध्यायंश्च तत् तत्कृशवलितकरतलगतं विस्फार्य लोचने उवाच सः–'मन्दिरे तस्मिन् देवाधिदेवस्य (–सर्वे एव देवाः मूर्तिपूजकानां 'देवाधिदेवाः'–इति तु महदा-श्चर्यम्! –)कस्याश्चित् नर्तकीप्रतिमायाः नेत्रस्थाने विराजमानमासीत् ।…… प्रतिमाऽपि सा स्वर्णकाया अतीव सुरम्या आसीत् निःसंदेहम् ।…… (सनिःश्वासं) कियत् अवाञ्छाम वयं तदाऽपहर्तुं ततः आनेतुं चेह तां प्रतिमामेवाभग्नाम्……बहु अवाञ्छाम……आदिशाम च सैनिकान्, उत्पाटयितुं तां……प्रयत्य दिनत्रयपर्यन्तं न तु शेकिम पूरयितुं स्वां वाञ्छाम् ……तदनंतरं समुत्पाटितनेत्रयुगला सा वराकी एतावतीं दयनीयां दशां अलभत……यत् खिन्नहृदया वयं निरचिनवाम खण्डयितुं तां साकल्येन, गलयितुं तस्याः खण्डान् स्वर्णपिण्डेषु, आनाययितुं तानिह, निर्मापयितुं च

तेभ्यः इह·····प्रासादे·····तत्तुल्यां प्रतिमामन्यां,····स्थापयितुं च तामस्माकं शयनकक्षे । अकरवाम च प्रयत्नं बहुविधं,·····नालभाम परंतु साफल्यम्···असमर्थाः लब्धुमेकमपि मूर्तिकलाविदं तादृशमूर्तिनिर्माणक्षमम् । अकरवाम तदनंतरं प्रयत्नमानाययितुं तं तस्मात् मूर्तिपूजकाद्देशादेव । नाभवाम सफलाः प्रयत्ने तस्मिन्नपि ।

गदंश्चैवं बभूव विषण्णः·····पुनरवलोकयन्निव तां नर्तकीप्रतिमां स्मृतिचक्षुषा ।

बभूव विषण्णः·····परंतु·····क्षणमात्रमेव ।

क्षणान्तरे एव हि हठात् प्रोत्सार्य विषादं·····उपससार पेटान्तरं·····जगाद च उच्चैः कफघर्घरं श्वसन्·····'अपि जानीथ·····अपि जानीथ– किमत्र विराजते ?·····(संतुष्ट इवानुपलभ्य तयोरुत्तरं–) अत्र विराजते (क्षणमेकं विश्रम्य) रत्नानामसंख्यानां विविधवर्णानां विभिन्नाकाराणां विचित्रेतिहासानां चयो महान्! –' वदंश्चैवं तावत् बभ्राम तस्मिन् रत्नकक्षे, समयेन तावता अलातधूमतिको,·····पेटात् पेटान्तरं·····तर्पयन् स्वं वृद्धमपि नवीनमिवातुरातुरं नेत्रयुग्मं मानसं च सदापिपासितं·····यावत् न तस्य पादद्वयं उज्जुघोषात्मानं नितान्तमसमर्थं तदभारवहने, उपावेशयच्च तं बलादासनायां, कोषपालेन, आकस्मिकीमावश्यकतां तादृशीं समुत्प्रेक्ष्याहित एवानाययितायां,·····सत्वरं च समुपसर्पितायाम् ।

परंतु·····इयती तीव्राऽऽसीत् तस्य नियतिप्रेरितेव दिदृक्षा सर्वेषामपि वस्तूनां, तेन स्वेन पराक्रमेण विजितानां स्वदेशे चानादिनः कालादारभ्य दरिद्रे आनीतानां,·····इयती प्रबलाऽऽसीत् तस्येच्छा जीवितुं जीवनमतीतं अभिमानसमृद्धं,·····इयती दृढाऽऽसीत् तस्य वाञ्छा विस्मर्तुं स्वं जीवनं वर्तमानकालिकं निमज्ज्यातीतजीवनस्मृतिषु,-यत् समुदतिष्ठत् आसनायाः सः कतिपयक्षणानन्तरमेव·····पुनरुपलब्धसामर्थ्य इव प्रभावेणौषधस्य निःशब्दे-नाल्तमशेन दत्वाऽलातं कोषपालाय गत्वा बहिः क्षणमात्रं सद्य आनीतस्य ·····निश्चक्राम तस्मात् रत्नकक्षात् अनिच्छद्भिरिव मंदमंदैः पदक्षेपैः,····· प्रविवेश चान्तः कक्षस्य संलग्नस्य, तस्य रत्नकक्षस्येव विशालस्य सुरक्षितस्य ·····न परंतु तस्येव सुनिबद्धपेटमालाभिरेव व्याप्तस्य·····अपि तु तैस्तैः वस्तुभिः·····कैश्चित् उन्नतैः कैश्चित् ह्रस्वैः, कैश्चित् वक्रैः कैश्चित सरलैः

कैश्चित् वस्त्रावगुण्ठितैः, कैश्चिदनावृतैः,······सर्वैरपि पेटान्तः मातुमशक्यैः ······सर्वैरपि विस्मयजनकैः······आकुलाकुलस्य ।

'अत्र विराजन्ते······योग्यान्तरस्थानाभावात्······' सम्बोधयन्निव स्वानुचरौ जगाद सः वृद्धः अस्फुटाक्षरं······'तानि तानि वस्तूनि······न सौवर्णानि······न मणिखचितानि···तथापि मनोहारीणि······अनन्यसदृशानि ······तन्निर्मातृकल्पनातिशयपरिचायकानिः···महता हठेनाधिगतानि एतानि एतत्स्वामिभ्यः,······महता मनोयोगेन,······समुल्लंध्य पर्वतमालाः,······ आनाययितानि अत्र······आम् !······अस्माभिः······तौरुष्किकपारसीकं साम्राज्यं नः (क्षणमेकं विरम्य)······समृद्धं कर्तुमहर्निशं प्रयतमानैः !'

'अपि······अपि······अवलोकितानि तानि आयुधानि······तत्र······ तस्मिन् कोणे कक्षस्य······उपरि तस्य पेटस्य······न्यस्तानि ?······(निक्षिप्य दृष्टिं दिशि कोषपालस्य) धूलिधूसरितस्य पेटस्योपरिन्यस्तानि ?······तानि आयुधानि अपहृतानि अस्माभिः खोकरेभ्यः पराजित्य तान् ! (स्वगतमिव) कियन्तः दुर्दान्ताः······विक्रान्ताः······आसन् ते बर्बरा अपि······अनुपानद्-गूढपादं अनावृतमस्तकमेव तस्मिन् हिमशीतले रणांगणे बलमस्माकं कान्दिशीकं कुर्वाणाः ! (जनान्तिकमिव मन्द्रस्वरं) सत्यं ब्रूमः-यदि हि भागधेयमस्माकमनुकूलं नाभविष्यत् अकस्मात्······तर्हि आयोधनं तत् सर्वथाऽन्यथैव पर्यणंस्यत !'

'यावत् तीव्रमासीत् तदायोधनं····उट्टंकितमस्माकं स्मृतौ एतैः आयुधैः अन्यत्र दुर्लभदर्शनैः तावत् सफलमपि तत् राजतं गृहं······समीप एव तेषामायुधानामाश्रित्य भित्तिमवस्थितं, विभाजितं विभिन्नेषु भागेषु······ अपि······अस्माभिः अन्ते तस्यैवायोधनस्य लुण्ठितं भीमनगरात्······ आयो-धनानुपदमेव शरणागतान्······समीपे एव तस्य······आवृत्य वस्त्रान्तरेणा-वस्थापितं द्वित्राणां पेटानामुपरि······तत्······पटगृहं······रोमक-पट-गृहं अपि ······तावद्विस्तीर्णं पटगृहं न खलु अस्माभिः अवलोकितं अन्यत्र कुत्रापि ······विस्तीर्णं······ऐश्वर्यमण्डितं च······अपि जानीथः······(सगर्वं) अग्रिमौ द्वौ स्तंभावस्य सौवर्णौ ।······पाश्चात्यौ च राजतौ !'–जगाद सः, कक्षे सर्वत्र भ्रमन्, प्रदर्शयंश्च तानि तानि वस्तूनि साभिमानः ।

'अयं खडगोऽपि'–भाषमाणश्चैवं आरभत गन्तुं दिशि एकस्य करवाल-

स्य, पेटस्यैकस्योपरि न्यस्तस्य । न शशाक परंतु गन्तुं कतिपयपदक्षेपानन्तरम्,⋯⋯आरभत अकस्मात् पतितुं अधः⋯⋯मार्गभूमावेवाऽऽकुलाकुलायां संगृहितैस्तैस्तैर्वस्तुभिः,⋯⋯अधार्यत सहसाऽग्रे उपसृताभ्यां सेवकाभ्यां,⋯⋯उपाविश्यात मार्दवेन क्षणान्तरे एव तत्रानीतायामासनायां,⋯⋯अदीयत च पेयं किंचिदौषधमिव⋯⋯राजवैद्येनानुमाय तथाविधं शक्तिपातं आदित्त एवाल्तमशाय प्रदत्तम् ।

तेन औषधेन प्रत्यागतशक्तिः सः इयेष पूरयितुमात्मनः हठं,⋯⋯न दधर्ष परंतु तर्पयितुं तामिच्छाम्⋯⋯आकास्मिकेन तेन दौर्बल्याघातेन भीतभीतः,⋯⋯स्वीचकार अभ्यर्थनां कोषपालस्यावलोकयितुं चावशिष्टं भागं कोषागारस्याग्रे स्वसुविधानुसारं,⋯⋯उपजगाम शनैः शनैः द्वारमेकमात्रं कोषागारस्य (–निक्षिप्यैकवारं स्वमभितः दृष्टिं पिपासिताम्–)⋯⋯धृतः कूर्परयोः उभाभ्यां सेवकाभ्यां,⋯⋯शिबिकां,⋯⋯प्रातिष्ठत च ततः⋯⋯उह्यमान तद्वाहकैः⋯⋯प्रतीक्ष्य तत्प्रत्यागमनं कोषागारात् अनेकप्रहरपर्यन्तं श्रान्तैः, क्षुत्पिपासापीड्यमानैरपि विहाय शिबिकां अन्यत्र गन्तुं तदपनयनार्थमधृष्णुवद्भिः उदग्रहृदर्शनैरपि दीयनीयैरिव भासमानैः ।

तन्द्रितश्याचिरादेव तेनौषधेन⋯⋯पश्यन्नपि नापश्यत्⋯⋯प्रातःकालीनं स्वच्छं सूर्यप्रकाशं नैशेनांधकारेण⋯⋯मेघाडंबरेण आदिवसावसानात् गगनांबरे एकातपत्रं विराजमानेन द्विगुणितेन⋯⋯समुत्सारितं⋯⋯पौर्वाह्णिकं कदुष्णं सुखदं समीरं शीतेन मृद्गंधवाहेन गन्धवाहेन पराजितं,⋯⋯प्राभातिकं स्वस्वकार्यव्यापृतराजपुरुषसंकुलं प्रासादांगणं शून्यशून्यम् ।⋯⋯अवलोकयन्नपि नावलोकयामास⋯⋯रक्षकसैनिकान् अपवेलायामपि तस्यां स्वे स्वे नियते स्थाने (–स्यान्नाम तत्प्रत्यागमनभीत्या–) मूर्तिवदस्थितान् साकारान् तमःपुञ्जानिव भीषणदर्शनान् उद्यतायुधान्,⋯⋯कथंचित् स्वीकुर्वन्नपि न स्वीचकार तत्प्रणामान्,⋯⋯लक्षयन्नपि न लक्षयामास न केवले तन्मार्गे, प्रभाते एव तद्दर्शनातुरान्तःपुरजनसंकुले,–न केवले तत्प्रासादे, प्रभाते एव, तत्तत्कार्यब्यापृतराजसेवकजननिनादिते,–अपि तु तन्महानगरेऽपि, सदा आब्राह्ममुहूर्तं नृत्तगीतादिमहोत्सवध्वनिलहरीभिः प्रकंपितताराणे–सर्वत्रैव प्रसृतां निर्जनतां श्मशाननीरवतां⋯⋯तन्मरणाशंकाया इव समुद्भूतां, तदुत्तराधिकारसंघर्षभीत्या इव जनिताम् ।

प्रवेशितश्च तस्यातिपरिचिते शयनकक्षेऽलतमशेनान्यतमेन च तत्सेवकेन धृत्वा कूर्परयोः······शनै शनैरुपससार स्वां नित्यसखीं······शय्यां,······ पातयामास चात्मानमुपरि तस्याः तंद्रिल एव, अकृतवेषपरिवर्त एव, अनपनीतराजाधिराजालंकरण एव, उपेक्षमाण एव राजवैद्यं तस्यागमनमातुरेण चित्तेन तत्र आदित एव प्रतिपालयन्तं, प्रकम्पमानजपमालाव्यापृतैकहस्तं, प्रविशन्तं तं क्षणैकं मूकमुखरया दृष्ट्या भर्त्सयन्तं, अवलोक्य तदवस्थां चिन्ताम्लानं, अवनमय्य स्वमुत्तमांगं प्रणामव्याजेन स्वं चिन्ताम्लानमाननं अपह्नोतुं प्रयतमानं, निःशब्दं च तमुपसर्पन्तं सह सौवर्णेन चषकेण ।

निजगार बलादिव तस्यौषधं······विलीनश्रद्ध इव । निमीलयामास स्वं नेत्रयुग्मं । प्रायतत स्वप्तुम् अपावृतमुखबिल एव नालभत साफल्यं स्वे प्रयत्ने । आरभत शनैः शनैश्चिन्तयितुं विषये रत्नानां तत्प्रियतमानां सद्योदृष्टानाम् । विसम्मार स्वां वर्तमानकालिकीं दुरवस्थाम् । अपचक्रम च भूते एव काले स्मृतसुखदे ।

अपक्रान्तस्य तस्याविजानत एव······आरभत मानसं तस्य प्रवेष्टुं स्वप्नावस्थाम् । प्रविष्टं च तथा, यथेच्छं रममाणं, सहसाऽऽरभत तं समुद्वेजयितुं प्रदर्श्य तस्मै तं–

–कदाचित् अतिनिबिडेन प्रतिक्षणं वर्द्धमानेन मूर्तिपूजकजनसंमर्देन आक्रौशदुःसहेन सर्वतः परिवेष्ट्यमानं, सान्द्रया रत्नपाषाणवर्षयाऽनवरतमाहन्यमानं, मर्मस्थलेषु च भज्यमानं,–

–कदाचित् समुत्सृत्य काश्मीराभियानमपूर्णमेव सह दुर्बलेन क्षुत्क्षामेन हतोत्साहेन मूकमूकेन स्वबलेन परावर्तमानं मार्गे पतद्भ्यः निरन्तरेभ्यः महावृक्षेभ्यः अकस्मात् आविर्भवद्भिः विकटं हसद्भिः उदग्रदर्शनैः खोकरैरसंख्यैराक्रम्यमाणं–

–कदाचित् गगनचुंबिना निःशब्देन प्रचण्डेन विकटं विदन्तं हसद्भिः असंख्यैः नरमुण्डैराकुलाकुलेन रुधिरकल्लोलेनाऽऽक्रम्यमाणं प्रक्षिप्यमाणञ्च एकस्मिन् अतले गर्ते,–

–कदाचित् लिंगेन सोमनाथस्य प्रचण्डेन, विनैवावलंबं लंबमानेन, तेन पातितेन, अकस्मात् परिवर्त्याऽऽत्मनः स्वाभाविकीं दिशां तस्यैव–दूरावस्थितस्यापि तस्यैव–दिशि महता वेगेन पतता, अथ च विहाय लोकलज्जा

(–पश्यतामेव तत्सैनिकानां भयस्तब्धानां–) ततः प्रपलायमानमपि तमेव पिपिक्षयेवानुसरता, उपस्त्रिययाणं,–

–कदाचित् अतिप्रचण्डेन निःशब्देन गगनचुंबिना दुर्गन्धिना विकटं विदन्तं हसद्भिरसंख्यैः नरमुण्डैराकुलाकुलेन रुधिरकल्लोलेनाऽऽक्रम्यमाण-मुत्थाप्यमानं प्रक्षिप्यमाणञ्च महता वेगेन एकस्मिन् अतले गर्ते,–

–कदाचिच्च परिवृत्य तं सर्वतः निरुच्छ्वासमवस्थितौ विकोषखड्ग-दन्तुरैरुच्चैर्हसद्भिः कटुशब्दमुखरैः स्थानेश्वरवासिभिरिवास्पष्टं परिचितैरिव भासमानैः नागरिकैस्तस्य एकलस्य निःशस्त्रस्याबद्धहस्तपादस्य मुख एव वर्तिनः अतिबृहतः लौहात् कटाहात् द्रवीकृतोत्तप्तदाहक सौवर्णरसमारक्त-पीतं बलात् पाययमानम् ।

असहमानं च ताः स्वप्नयातनाः स्वयमेव निर्मिताः·····आचकर्ष तं तस्यास्तंद्रायाः हठात् ।

तथाऽऽकृष्टः स आदौ अनुबभूवाऽऽत्मानं·····प्रस्वेदधाराक्लिन्नं, शैत्येन प्रबलेनाभिभूयमानं, कम्पमानशरीरं, शुष्यद्रसनं·····प्रयतमानं·····पणीकृत्य प्राणान् प्रयतमानं·····मोचयितुं स्वं हस्तपादं बंधनात्,·····प्रयतमानमलभ-मानं च साफल्यं प्रयत्नेषु स्वेषु,·····ततःददर्श हिमधवलमशकहरीपरिवेष्टिते मृदुले पर्यंके शयानं जडहस्तपादं,·····ततः अवलोकयामास व्यापारयन्तं स्वे विस्फारिते विनिद्रे नेत्रे स्वमभितः, निगडयन्तं च ते नेत्राभ्यां·····तमेव निरीक्षमाणांभ्यां तमेवास्पष्टं उपहसद्भ्यां, तमेवावलोक्य तदवस्थं तृप्तिम-पारामनुभवद्भ्यां·····अल्तमशस्य, समोपे एव तस्य पर्यंकस्य मूर्तिवन्निश्च-लमवस्थितस्य ।

चुक्रोध च क्षणमेकं–'कथं तृप्तिमनुभवति जाल्मः अवलोक्य मां····· अस्मान्·····एतदवस्थान्'–इति कृत्वा मनसि ।·····दिद्वेष च तं सर्वात्मना ।

परंतु·····क्षणमेकमेव ।

क्षणान्तरे एव बहु मन्यमानस्तस्य (–तावत्या कालकलया निगूह्य स्वं भावं, अवनमय्य स्वं मस्तकं तं किंचित् पृच्छतः इव–) सान्निध्यं···व्यानञ्ज स्वां तृष्णां उद्घाट्य किंचित् स्वं मुखबिलं,·····निजगार किंचित् मद्यं तेन तस्मिन् क्षिप्तं·····शयनपतित एव निमीलयामास च स्वे नेत्रे ।

प्रभावः आसीत सः समाश्वासस्य दृष्टाऽऽत्मानमात्मनः राजधान्यां

आत्मनः प्रासादे आत्मनः शयनकक्षे सुखं शयानं···ऊत् कस्यचित् संमोहकस्यौष-धस्य मद्ये तस्मिन् वैद्यराजेनादित एव मिश्रितस्य–न निःसंदेहं विद्म एतत् ।

तर्कयामः परंतु वास्तविकत्वं कारणस्य विकल्पोक्तस्य ।

जानीमश्च–यदाऽन्तेऽन्तिमस्य नैशस्य प्रहरस्य·····मुसलधारवर्षारवनि-गीर्णप्रार्थनाह्वानशब्दस्य·····जजागार सः·····तदाऽनुबभूवात्मानं·····यथा-पूर्वं हिमधवलमशकहरीपरिवेष्टिते पर्यंके उत्तानशायिनं·····प्रयतमानं·····व्यापारयितुं स्वे नेत्रे सहसा द्विगुणितशक्तिके स्वमभितः·····अथ उत्थापयितुं स्वं·····आदौ दक्षिणं खड्गमुष्टिसंघर्षकठिनं, पश्चात् वामं श्मश्रुपाशलालन-कोमलं·····हस्तं,·····अथ गृहीतुं तल्पे एव तत्समीपे एव, पतितं रत्नं मरकतं·····अतीत एव निशामुखे तेन कोषागारात् आनीतं,·····परंतु अशक्नुवन्तं कर्तुमन्यतममपि अभीष्टं स्वम् ।

आशंकाकुलितश्च प्रायतत तत्क्षणमेव समाक्रष्टुं ध्यानं यस्य कस्यापि सेवकस्य तदाह्वानेन ।·····परंतु नशशाक कर्तुं तदपि ।

प्रत्युत–आरभतानुभवितुं आत्मनः हस्तौ·····आजन्मना तस्य अभीष्ट-मात्रकृतौ·····पादौ च·····आ कैशोर्यात् तं दूरविदूरविदेशान् प्रापयितारौ ·····मन्द मन्दं परंतु अप्रतिहतगति संवेदनाशून्यौ भवन्तौ ।

आरभतानुभवितुं तां संवेदनाशून्यतां समुद्दिश्य तदुत्तमांगमुपसर्पन्तीं, ·····दृष्टिं च स्वां प्रतिक्षणं मन्दतरीभवन्तीम् ।

बभूव च तत्क्षणमेवाऽऽत्यन्तिकेन भयेनाक्रान्तः ।

आम् !·····बभूव भयेनाक्रान्तः·····सः सुलतानुस्सलातीनः·····सः सिपहसालारे आजमः,·····सःसाहिबकिराने लासानी,·····सः रणांगणेऽन्तक-मपि साक्षात् न्यक्कुर्वाणः योद्धा,·····सः अजरामर इव परधनलुण्ठाकः····· सः मानवेतिहाशेऽक्षय्यां ख्यातिं लब्धुकामः,·····सः (–स्यान्नाम निकटे एव भाविकाले विनंक्ष्यतः–) तौरुष्किकपारसीकसाम्राज्यस्याहंमन्यः संस्थापकः ·····इतरेतरजनवत् !

बभूव व्याकुलः प्रतिक्षणं व्याघ्र्या इव निःशब्दं तत्समीपमुसर्पन्त्या संभावनयाऽऽत्यांतिकस्य वियोगस्य·····न स्वपुत्रयोः (–तौ हि सः पर दिद्वेष–),·····न स्वपारिवारिकजनस्य (–तं हि सः अमन्यत तुच्छं–),····· न स्वसुहृज्जनस्य (–नासीदेव तस्य कोऽपि सुहृज्जनः),·····न विद्वज्जनस्य

राजसभां तदीयामलंकुर्वाणस्य (—तं हि सः अधिचिक्षेप (—अर्थात् मनस्येव—) द्रव्यक्रीतमिति—),......अपि तु......अपि तु......अपारस्य ऐश्वर्यस्य ......तेन संकटानि प्राणान्तिकान्यपि अविगणयता विदेशेभ्यः आनीतस्य !

संभावना मरणानन्तरं स्वर्गीयसुखलाभस्य......सद्धर्मप्रसारप्रयत्नसंतुष्टात् परमेश्वरात् लभ्यस्य......नादात् तस्मै अणीयांसमपि संतोषम्। ......स हि प्रकटत आत्मानं सद्धर्मानुरागिण सद्धर्मप्रसारेच्छ...यैव केवलया मूर्तिपूजकानां राज्यानि आक्रामन्तं, तत्पूजास्थानानि विनाशयन्तं, तदभीष्टदेवविग्रहान् खण्डयन्तं, तान् सद्धर्मानुयायिनः बलात् कुर्वन्तं प्रदर्शयन्नपि ......न वस्तुतः क्षणमेकपि अश्रद्दधत तस्मिन् स्वे धर्मे......न केवलमेतत्, ......अपि तु—उपजहास (—अर्थात् मनस्येव—) तद्धर्मोपदेशकान् धार्मिकंमन्यान्......वस्तुतः वैषयिकसुखलालसान्।

आम् ! श्रुतमासीत् तेनानेकेष्ववसरेषु स्वधर्मोपदेशकेभ्यः 'क्षणभंगुरं सांसारिकं सुखम्—' इति......श्रुतमासीत्—न परंतु...न प्रत्यक्षतयाऽनुभूतम्।

अनुभूतं तु तथा......व्याकुलीचकार तं यथाऽकस्मात् आरभत सः...... शहंशाहः......प्रदत्तापहृतक्रीडनक अर्भक इव......रोदितुं......उन्मुक्तभावं, ......परंतु निःशब्दम्।

तावती एव हि आसीत् तस्य शक्तिः अवशिष्टा !

आरभत रोदितुं भीरुरिव।

अथवा......आसीदेव सः वस्तुतः भीरुः......दिगन्तप्रसृत शौर्यकीर्तिरपि।

स एव वस्तुतः शूरः...यस्यास्ति आन्तरिकं...आत्मिकं......सामर्थ्यम्... यथा जनकस्य विदेहस्य।

बाह्यं......शारीरिकं......तु—शौर्याभासः।......

तथा रुदंश्च.......सततवहदश्रुधाराक्लिन्नवलितकपोलः......सहसाऽवलोकयामास मुखम् अल्तमशस्य......तस्यैव मुखस्योपरि अवनतं......तमेव स्थिरया विचित्रया दृष्ट्या लोचमानम्।......तथाऽवलोकयत् व्यस्मयत क्षणार्द्धमात्र—'किमिति एवंविधा......अस्येयं दृष्टिः ?' इति। विसस्मार स्वं विस्मयं सहसा।......निगडयंश्च तयैव दृष्ट्या स्वां दृष्टिं......अश्रुपूरितां......प्रतिक्षणं मांद्यमधिकतरमुपयान्तीं...प्रायतत योक्तुं स्वमवशिष्टं सामर्थ्यसर्वस्वं याचितुं तस्य साहाय्यं निराकर्णेऽधकारस्य घनस्य......वेगेन

सर्वतः तं परिवेष्टयतः······तं निरुच्छ्वासं मृद्नतः,······बभाज वैफल्यं स्वे प्रयत्ने,······अत्यजत च प्राणैः पिपासितैरेव······

तथा प्राणत्यक्तं······विलुलितमूर्धजं······धवलपक्ष्मलार्द्धमुद्रितलोचनाभ्यां तमवलोकयन्तमिव······मलिनहिमनिभश्मश्रुपाशं······विवक्षयेव किंचिद्विवृतमुखबिलं······संततनिपतितशोकाश्रुधाराक्लिन्नवलितकपोलं······उन्नतनासिकं······महार्हरत्नकावृतकृशकायं······प्रसृताभिः निष्क्रियाभिः कदुष्णाभिरंगुलीभिः दक्षिणस्य हस्तस्यावरणात् बहिः पतितस्य स्पृशन्तमिव······प्रयतमानमिव ग्रहीतुं स्वसमीपे एव, शय्यायां, पतितं मणिं स्वप्रियं······तं पश्यन्, एकाकी, सः अल्तमशः शनैः शनैः व्यानञ्ज स्वं तावत्कालपर्यन्तं निगूहितं प्रमोदं आन्तरिकं उपहासदुःसहेन स्मितेन ।

दृष्ट्वा च तं तथा चिरं······निर्जगाम तस्मात् प्रज्वलदनेकदीपप्रकाश्यमानादपि अन्तकछायाऽऽच्छादितादिव भासमानात् शयनकक्षात् निर्मनुष्यात्, ······प्रासादात् प्राभातिकसुखस्वापमग्नपरिजनात् शून्यशून्यात्,······प्रविवेश राजमार्गं संततनिपतद्वर्षाजलप्लावितं निर्जनं,······जग्राह भारतवर्षयायिनं मार्गं तत्संबद्धम्,······आरभत च गन्तुं तेन······कृतनिश्चय इव स्थिरमनाः ······अनभिज्ञः आत्मनः वर्षाजलक्लिन्नस्य स्ववेषस्य···अनभिज्ञः प्रवर्द्धमानस्य शैत्यस्य······संभाषमाण इव सह केनापि, असंनिहितेनापि सदा संनिहितेनेव भासमानेन प्रियेण जनेन······

## उपसंहारः

'तथा उपगच्छंश्च स्वं देशमिमं·····तात धर्मपाल !'–उपसंहार सः अलतमशः······अवलोकयन् दिशि प्राणाधिकस्य स्वमित्रस्य, तावता कालेन नैशान्धकारेणावृतप्रायस्य, मुखस्य, 'अभवं सहसा समाक्रान्तः आशंकयाऽनुगमनस्य द्विषत्सैनिकानां, दृष्ट्वा मां तथाऽदर्शनं गतं समुपजातशंकानां,····· अयापयं तं दिनं·····दिनानि च तदनुयायिनि·····निलीय कुटजेषु ग्रामीणानां मार्गपतितानां पथिकछद्मना,·····प्रावसं च निशास्वेव निश्चंद्रासु घोरतिमिरासु संततनिपतद्वर्षाजलधारादुर्दर्शप्रायेण मार्गेण·····उपेक्षमाणः तत्संकटानि सर्वाणि·····त्वद्दर्शनपिपासामात्रव्याकुलमानसः ।'

'तिशम्य च कर्णोपकर्णिकया·····कतिपयदिवसानन्तरं·····वार्तां प्रस्फोटस्य चिरादाशंकितस्य उत्तराधिकारिसंघर्षस्य समाश्वस्तः·····विभाव्यानुगमनसंकटं तिरोहितप्रायं आरभत आक्रमितुं मार्गं दिवाऽपि'–श्रान्त इव स जगाद अग्रे ।······'समुल्लंघ्य च अन्तरालवर्तिनीः पर्वतश्रेणीः,····· समुत्तीर्य च नदीः मार्गागताः·····अन्वेषयन् च त्वां सर्वत्र·····अद्य इहाऽऽगच्छम् ।'

'देव !–'–अस्फुटाक्षरं जगाद तस्य सुहृत् ।······'एतावान् समयः ।···

'आम् !·····धर्मपाल !·····भूयान् खलु मम समयो व्यतीतः····· मम निधाय त्वां तस्य कृषीवलस्य कुटजे तस्यां घोरायां तमस्विन्यां त्वत्समीपतः गतस्य ।·····आदौ तावत् न आप समुचितमवसरं दण्डयितुं तमत्याचारिणं प्राणदण्डेन ।·····ततः·····प्राप्यापि तं अनेकदा तद्राजधानौ न इयेष कर्तुं तथा'–जगाद देवपालः·····समर्थयन् स्वं विलंबम् ।

'श्रृणु·····श्रृणु·····तत्कारणं'–समुत्प्रेक्ष्य तदाक्षेपं त्वरया जगाद सः । 'यदा खलु·····राजधानीं सह तेन गतः·····सर्वत्र दत्तकर्णः·····शुश्राव लोकवार्ताः द्वेषस्य·····तदुत्तराधिकारिणोर्मध्ये आबाल्यादेव वर्तमानस्य····· शशैः शनैः अभिवृद्धस्य·····अन्ते च स्फोटोन्मुखस्य·····अपश्यं च सर्वसाक्षिभ्यां स्वनेत्राभ्यां प्रतिक्रियास्तस्यात्याचारिणः·····तदाऽतर्कयं परिणतिं

तस्य,……अचिन्तयं तदनभूतिमेव सर्वोत्तमं प्राणदण्डं कृते तस्य,……निरचिनवं च प्रतीक्षितुं तत्कालं धृत्वा धैर्यम् ।'

'कियान् निर्दुष्ट आसीत् स मम तर्कः……योग्यः स मम, विचारः… सफलश्च स मम प्रयत्नः—इति तु अपश्यः एव त्वं स्वयं……आकर्ण्य तस्य जीवनकथाम् ।'

'अपि स्यात् काऽपि अन्या जीवनकथा तामिव दु:सहां ?'—पप्रच्छ स अधीर इव ।

'न कापि'—सः प्रत्युवाच स्वयमेव……अवलोक्य स्मितं क्षीणक्षीणं, आनने स्वमित्रस्य, निशम्य तां पृच्छां, प्रसृतम् ।

'दृष्ट्वा……आ बाल्यात् कृत्वा परिश्रममहर्निशं, दत्वा तिलाञ्जलिं कोमलाभ्यः मानवमात्रसुलभाभ्यो भावनाभ्यः, येन केनाप्युपायेन समुत्कर्षस्यावस्थायां नीतं……स्वं साम्राज्यं……आजन्म लुण्टितमपारं धनराशिं च तथाऽऽत्मनः वियोज्यमानं दृष्ट्वा यावद्दुःखमनुबभूव सः…तावत् परमेश्वरस्तादृशायैवात्याचारिणे ददातु !'

'सत्यम् !……धर्म !……दावानल एवासीत् सः……भस्मीकुर्वन् सर्वं ……अन्ते च स्वयमपि भस्मसात् भवन्……दावानलः !'

जल्पन् उन्मुक्तभावमित्थं किमपि किमपि घटिकापर्यन्तं……सहसा लक्षयामास सः स्वं सुहृदं……धर्मपालं……अतीतस्य कष्टबहुलस्य जीवितस्यैकमात्रं सहचरं……वामपार्श्ववर्तिनः अतिबृहतः मन्दिरशिलाखण्डस्योपरि किंचिदवनतोत्तमांगम् ।

चिन्तयंश्च तं परिश्रान्तं, विज्ञाय स्वमेकमात्रं मनोरथं पूर्णतां गतं समाश्वस्तं, मनसा व्यपगतभारेण विश्रांतिसुखमनुभवन्तं……आरभत संबोधयितुं तं गृह्णन् तद्दक्षिणं छिन्नकूर्परं हस्तं हस्ते स्वे—'एहि…धर्मपाल !… गच्छामस्तावद्ग्रामटिकां……।'

कृतारंभ एव च सहसाऽत्यजत् तत् संबोधनं मध्य एव,……अनामयत् स्वं मस्तकं उपरि तस्य मस्तकस्य……प्रकम्पितः कयाचित् दुराशंकया,… साक्षादकरोच्च स्वं सुहृदं……'तमिव' विलुलितमूर्धजमपि, 'तमिव' मुद्रितधवलपक्ष्मललोचनमपि, तमिव मलिनहिमनिभश्मश्रुपाशमपि……'तं किञ्चिद्विदलिते ओष्ठपुटे स्फुटं क्रीडता प्रसन्नेव स्मितेनातिशयानं,…… पर्णान्तरनिपतद्भिः अष्टमीचंद्रकरैः सस्नेहमिव स्पृश्यमानं……पृष्ठवर्तिना महता शिलोच्चयेन मन्दिरस्य सोमनाथस्य भावातिशयाभिभूतेनेव मूकमूकेनालोच्यमानं……सुप्तं अप्रतिबोधाय !